कुसुम तथा नामात्युज्ज्वल यूना हृदयहारि जात यथा तेषा निर्गन्धतामवधार्य सहृदयहृदयैर्दूयत इति पूर्वार्धे वाक्यार्थ. । तथा च सति सर्वपदार्थेषु विधातृदोषशील्यादेवमेव गुणसामग्र्यभाव इति नात्र काचिदनुपपत्तिरित्यर्थान्तरन्यासोऽपि सुघटो भविष्यति ।–नारायण०

Vallabhadeva ventures to suggest new reading e. g. प्रतीक्षत इत्यवेक्षत इति रम्य. पाठ प्रतीक्षणस्य पालनार्थत्व ।–कु २-३७ but this अवेक्षते is not found even in the critical apparatus of *Kumārasambhava* edited by Dr. Sūryakānta. There, no doubt, we find समीक्षते as a reading which is a later creation after the criticism of Vallabhadeva.

As Vallabhadeva has noted once that पेलवमद केषाञ्चिन्मते न्याय्यो न सर्वेषाम्–कु ५-२९ and I humbly suggest that word कोमल has replaced पेलव in many commentaries. Dr. Sūryakānta has adopted कोमल reading even though Aruṇagiri, Cāritravardhana, Nārāyaṇa and Mallinātha have पेलव. Kālidāsa has also used the word पेलव in *Abhijñānaśākuntalam* रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी ।–AŚ Act IV between verse 1 and 2.

Vallabhadeva has unfavourable opinion on some readings, or rather usages of Kālidasa In *Kumārasambhava*–IV–31 विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता । Vallabhadeva observes here that 'अर्धम्' इत्यपपाठः । एकतरवधे हि वैशस न द्वयवधाभावात् । This comment compelled Mallinātha to dispute with Vallabhadeva as under–'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुते । पत्यु स्वस्य चाश्रयाश्रयिभूतयोरेकपदार्थत्वाभिप्रायेणार्धोक्तिः तथा चैकदेशवधे देशान्तरस्यापि वधनियमना-मामपि विधिरधमनेव हतवानिति तात्पर्यम् । –मल्लिनाथ०

Aruṇagiri also tries to defend Kālidāsa– 'शसु (सु') हिंसायाम् ' इति धातो. पचाद्यच् । विशसा हिंसक. । तस्य कृत्य वैशसम । विमुञ्चतेति हेतौ शता समप्रवैशस लाभ एवेति भाव' ।–अरुण०

Nārāyana has defended the usage of अर्ध here. He says–अर्धवैशसमर्धहिंसा । शसु हिंसायामित्यस्माद्धातो पचाद्यचि कृते विशस इति पद सिध्यति । विशसो हिंसक. । 'नृशंसो विशस क्रूर.' इति भोज ।

विशसस्य धर्मं वैशस हिसा । ननुरवधारणे । कामवधे मम त्रिमोचनाद्धेतोर्देवेनार्धहिंसा कृतेवेत्यर्थः । पुरुषस्यार्धं हि पत्नी । न चार्धहृतदेहेन किञ्चिदपि प्रयोजनमस्ति । तस्मात् समस्तहिंसैव वरीयसीति भाव । ...तस्माद् तद्व-मा कामवधे विमुञ्चता विधिना अर्धवैशसमेव कृतमिति भाव । अत्र विधि प्रत्यसूया प्रकाशिता ।
—नारायण॰

In *Kumārasambhava* III-41 Vallabhadeva finds the usage of एकाङ्गुलिशब्द improper and suggests new reading—अत्र चारुचर्यप्रतिभासादेकाङ्गुलिशब्दस्य प्रयोग न साधु मन्यते, मूत्रोत्सर्गे ह्येकाङ्गुलिशब्दमकेत । अतो 'मुखाप्रसरपापितवजनीक' इति पाठो युक्त ।—वल्लभ॰

But none of the commentators has accepted the suggestion of Vallabhadeva.

Some of the criticisms by Vallabhadeva for the reading of the text of KS are worth noting. e g ,

बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को गजाजिनस्यैव दुकूलभावः ॥ –कु. ७-३२

'सिंहाजिनस्यैव' अत्र (अप ?) पाठ । गजकृत्तिवासस्त्वाद भवस्य, तथा च पूर्वमेवोक्तम्–'वधूदुकूल कलहंसलक्षण गजाजिन शोणितबिन्दुवर्षि च ।' (कु. ५–६७)-वल्लभ॰ Here with the help of internal reference Vallabhadeva has tried to establish a correct reading. Arunagiri takes note of this reading as—केचित्तु विशेषणसम्बन्धयोग्यतार्थं सिंहाजिन चैवेति पाठमाहृत्य भावशब्द पदार्थवाचीति व्याचक्षते । Nārāyana, in his Vivarana on *Kumārasambhava*, accepts सिंहाजिन as the reading and comments as under—सिंहस्याजिन सिंहाजिनम् । अजिन चर्मं तस्यैव दुकूलभाव दुकूलत्वम् । . अथ केचित् दुकूलस्यैव रोचनाङ्कत्व, न तु दुकूलभावस्येति विशेषणविशेष्ययो परस्परसम्बन्धार्थं सिंहाजिन चैव दुकूलभाव' इति पठन्ति । तन्मते भावशब्दः पदार्थवाची दुकूलपदार्थं इत्यर्थं । वय तु लक्षणया सम्बन्ध ब्रूम । –नारायण॰

But with great regret one must note that a critical edition of *Kumārasambhava* by Sūryakānta does not even care to take note of सिंहाजिनम्, in critical apparatus, as a reading.

Vallabhadeva was [redacted] great grammarian and hence he has many times opposed certain usages of Kālidāsa on the ground of grammar-e g ,

तद् ग्रून वत्साः किमितिः प्रार्थयध्व समागताः ।-कु. २-२८

अत्र प्रार्थयध्वमिति अपप्रयोग । अत्रकिंशब्दप्रयोगात् किंवस्तु भवन्तोऽर्थयन्त इति सम्यये लट्प्रयागो न्याय्य ।-वल्लभ०

Gopāla, Arunagiri, Nārayāna, Cāritravardhana and some MSS have प्रार्थयध्वे-a corrected reading.

Some of the best original readings of Kālidāsa are preserved by Vallabhadeva They are properly accepted in critical edition. e. g. -

कयासि कामिन् सहसापराधात्पादानतः कोपनयावधूतः ।
तस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥
कु. ३-८.

सहसापराधात् प्रत्यग्रदोषत्वात्—वल्लभ०

Reading सहसा is accepted by Arunagiri and Nārāyana. Nārāyana writes-अपराधात् पादानत एव कोपनया कया सहसा अवधूतः असि । कामिन्निति नर्ममचिवोचित नर्मगर्भमामन्त्रणम् । अपराधपाद-प्रणामादे कामिनामेकोपपत्तेरेवमुक्तम । अपराधात् सपत्नीजननामग्रहणादिरूपात् । पादानत सन्वा पादयोरानत प्रणत । कोपनया कोपनशीलया सहसा अविचार्य त्वरितमेव अवधूत निराकृतोऽसि ।—नारायण०

Thus Nārāyana not only accepts सहसा as [redacted] reading but tries to justify it. When we take into consideration the context, we find, in previous verse कामेकपत्नीव्रतदु खशीला etc. (KS III-7), that there is a reference to परकीया नायिका. Hence naturally here he refers to स्वकीया नायिका. In case of स्वकीया, अपराध like गोत्रस्खलन is quite possible because Indra is कामी-a gallant hero, and such nature is also suggested by a celebrated writer Kālidāsa by making an address to him as कामिन्. Such अपराध, [redacted] Vallabhadeva puts प्रत्यग्रदोषत्वात्–because of fresh fault, would naturally induce an angry woman (कोपनया i e. कोपनशील्या

is the proper suggestive phrase used by Kālidāsa) to exile and drive away even her love.

By the error of a scribe or someone else सहसा॰ has been turned into सरसा॰ and that is accepted as a reading in 'Kālidāsa Granthāvali' published by Dr. Revāprasād Dwivedī. But सरस–रसेन सहितः–अपराध would hardly create anger in स्वकीया नायिका The other reading, absolutely not acceptable is सुरतापराधात् etc. It is a later creation of a vulgar mind which thought that Kālidāsa was शृंगारी. But we know that सुरत–an intercourse will hardly constitute any अपराध which could lead to anger in a स्वकीया नायिका. But unfortunately it is accepted by Mallinātha and सहसापराध is turned by him into सुरतापराध, while Vallabhadeva, Aruṇagiri, Nārāyaṇa etc. have सहसापराध.

Another notable examples is परिवृत्त and परिलुप्त in KS. III 67 हरस्तु किञ्चित् परिवृत्तधैर्य etc. Here परिवृत्त is accepted by Vallabhadeva, Nārāyāṇa, Cāritravardhana, Gopāl, Bṛhaspati etc. Mallinātha has परिलुप्त. If we accept him the word किञ्चित् in the text would be meaningless. Nārāyana's interpretation is worth-noting ईषदन्यथाभूत (न तु वि)गलितम् । हरधैर्यस्यापि तदानीं किञ्चिदन्यथात्व जातमिति भाव. । महासत्त्वत्वादीषत्परिवृत्तत्वम् । A textual evidence पुनर्वशित्वाद्बलवन्निगृह्य (KS-III 69.) goes against the reading accepted by Mallinātha. Thus all the readings of Mallinātha are not worth-accepting but Sūryakānta seems to be guided mainly by Mallinātha. The very first verse of *Kumarasambhava* is an example where Vallabhadeva, Bṛhaspati (विगाह्य–विलाह्य), Bharata (विगाह्य–अवनम्य and सगत्य) Gopāla. (विगाह्य–आक्रम्य) Nārāyana (विगाह्य–मध्यप्राप्यस्थितः). Cāritravardhana (विगाह्य–प्राक्रम्य) etc. accepted विगाह्य and only Mallinātha has वगाह्य. Sūrya-

* See : कालिदासश्च स्वयं शृंगारी । —स्थिरदेव, मेघदूत-१

kānta not only follows Mallinātha but he also tries to justify it by bringing a reference from AŚ.

वृतं तेनेदमेव प्राङ्मया चास्मै प्रतिश्रुतम् ।
वरेणाशमितं लोकानलं दग्धुं हि तत्तपः ॥ कु. २-५६

यस्मात् तस्य तपः (वरेण) वरदानेन (अशमितं) अनिर्वापितं सत् (लोकान्) भुवनानि दग्धुम् अलं शक्तम् । तपसस्तावत्फलेनावश्यं भाव्यम् । यदि च वरेण (अशमितम्) तन्न जडीक्रियते ततोऽधिकोपद्रवक्षमं स्यात् । –वल्लभ०

Arunagiri and Nārāyana accept the reading of Vallabhadeva and Nārāyana comments on it as–तत्तप वरेणाशमितं लोकान् दग्धुमलं हि इति । तस्य तारकासुरस्य तपः वरेण तदुक्त-वरप्रदानेन अशमितं शान्तिमप्रापितं सत् लोकान् त्रीनपि लोकान् दग्धुं भस्मीकर्तुम् अलं पर्याप्तं हि । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इति सिद्ध । यदि तदा तदभ्यर्थितं वरं नादास्यं तर्हि तस्य मूर्धानं निर्भिद्य निर्गतस्तपोमयो वह्निः सर्वानपि लोकान् भस्मसादकरिष्यत । यथोक्तं श्रीभागवते हिरण्यकशिपोस्तपःप्रसङ्गे–

'तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ।
तिर्यगूर्ध्वमधोलोकानतपद् विष्वगीरितः' ॥

(स्कन्ध. ७. अ. ३. श्लो. ४)

इति उपद्रवसहनमेव हि भस्मीभावाद् वरीयः । 'त्यजेदेकं कुलस्यार्थे' इत्यादि न्यायात् । अतो लोकानुग्रहार्थमेव मया तदुक्ता वराः सर्वे तस्मै दत्ता इति भावः ।
–नारायण०

Mallinātha and Cāritravardhana have वरेण शमितम् and they interpret that penance capable of burning the worlds is pacified by blessings ( by me–मयेति शेष ) The critical edition of Sāhitya Akādemi does not take a note of वरेण-अशमितम् as a reading even in critical apparatus.

अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥
कु. ५-३५

Here Dr Sūryakānta, following Mallinātha, accepts प्रणयापहारिषु in b and उत्पलाक्षि प्रचलै in C While प्रणयापराधिषु Vallabhadeva's reading is accepted by Arunagiri, Nārāyana and Cāritravardhana Nārayāna explains it as प्रणयात् प्रार्थनाद्धेतो अपराधिषु अपराधवत्सु । न ह्यवश्यकर्तव्यकर्मनिवर्तनार्थम् आत्मना प्रयत्नानीतानां दर्भाणां प्रार्थनया जात कोप स्वयपरिहारो भवति । तथापि किं त मनो हरिणेषु प्रर्हं न भवति । अयमेव हि महामुनीनां स्वभाव यत्सापराधेऽपि जने दयावत्त्वमिति भाव । – नारायण०

Caritravardhana explains–प्रणय प्रार्थना तेनापराधिषु। But the so called critical edition of Dr Sūryakānta has not noted प्रणयापराधिषु even as a reading in critical edition No better position prevails for another reading of the same verse उत्पलक्षपचल॰ which is accepted by Vallabhadeva Cāritravardhana, Arunagiri, and Narāyana have उत्पलाक्षेण॰ But this reading too does not find its place in critical apparatus of so called critical edition of KS by Dr Sūryakānta This उत्पलाक्षण according to Narāyana has a special suggestion See–आक्षेपशब्दोऽत्र द॰यपर । आक्षिप्यमाणमुत्पलम उत्पलाक्षेप तद्वत् चले । यथा हीनगुणा केचन महाजनं तावृश्यमानमपि लघु प्रयत्नेन तान व्यापारविशेषादिभिरनुकुर्वन्ति तथेति भाव ।—नारायण०

आवर्जितजटामौलिविलम्बिशशिकोटय ।
रुद्राणामपि मूर्धान क्षताहंकारशंसिन ।—कु २२–६

Here Mallinātha has a reading in d क्षतहुंकारशंसिन (हुंकारक्षतयनुमापका इत्यर्थ । हुंकाराला हि रुद्रा इति भाव –मल्लि०) which is blindly followed by Sūryakānta while Vallabhadeva, Arunagiri, Narayāna, Caritravardhana, Bharata, Bṛhaspati, Gopala etc have क्षताहंकार॰ Nārāyana explains it as क्षत भग्नम् अहंकारम अभिमानित्वं शंसितु शीलमेतेषामिति । तथा अहंकारस्याधिदैवत शिव इति पुराणप्रसिद्धि । अहंकाराधिदैवतानामप्यहंकारक्षतिरिति विरोधोऽपिशब्देनोच्यते । —नारायण० The previous description [illegible] of रुद्र reveals or suggests,

the क्षति in अहङ्कार i.e. ego and not that of हुङ्कार which means 'a menacing sound' or 'sound of defiance' [3]

In *Kumārasambhava* VIII–24 Vallabhadeva has adopted reading रावणध्वनिभीतया which is also accepted by Cāritravardhana, Mallinātha, Revāprasād and Sūryakānta and noted by Nārayaṇa Here there is an anachronism Vallabhadeva has tried to overcome the difficulty of the existance of Rāvana at the time of the marriage of Lord *Śiva* and Parvati by regarding him चिरन्तन – *cirantana*–eternal.

But Nārayana has created new reading वारणध्वनिभीतया–and he tried his best to justify it by various arguments [4]

Vallabhadeva has अथ चन्द्रशेखरम् (*V*–78) प्रागभवजन्मविद्या (*I*–30) वसाना (*II*–55) नाविभिन्ना॰ (II–45) गृष्टम (II–51) सहशिन (II–64) आत्मभुवा हि दिष्टम (II–16) अधित्यकाद (II–17) सुरसुष्टान् (II-25) वर्षवृष्टिषु (V 25) वडम् (*V*–60) ज्यातिपुंशान् (*VI*)-3 कुसुमास्तर॰ (*VII*–5) नवप्रक्षणन (*VI*-6) जात॰ (VIII–25) etc as new readings Some of them are adopted by Arunagiri, Narāyana, Cāritravardhana but most of them even do not find a place in critical apparatus of so called

3 See '*The student's Sanskrit–English Dictionary*' by V S Apte, Delhi, 1959, P 146

4 वारणध्वनिभीतया तया—वारणानां गजानां ध्वनिनादस्तस्मात् भीतया तया पार्वत्या कण्ठं स्वयं सज्जित मृडः कामस्याहिल्लादं॰घनमालिङ्गन यस्य स. तथा । तस्य दाम्य गजे ढबहुत वामध्य मध्ये गजषु हिनभीतया दया गाढ-गाढमालिङ्गिन इ यष । वनिन सां ममयालिङ्गनस्य कामुकाना स्वाभाव-प्रसिद्धरेवमुक्तम । यथाह–कोदप्रशमने भीतां वियोगे पुनरागमे । सम्भोगे च समाश्लेषो त्रिविधेन सुखावह ॥ इति । रावणध्वनिभीतेति च चित्पठति । तस्मने कैलासाद्वारणादेवस्य रावणस्य ध्वनिनाद भीतया ।

critical edition of *Kumārasambhavam* prepared by Dr Sūryakanta and published by Sahitya Akādemi, Delhi, in 1952

A detailed appendix has been prepared and is attached to this edition where it is made explicitly clear that the text of Vallabhadeva differs from that of Mallinātha at 259 places and that of Sūryakānta at 199 places There are 116 readings of Vallabhadevas text which differ from Mallināthа's as well as Sūrya kānta's edition and as pointed out in the above discussion, many of Vallabhadevas good readings are not even mentioned in the critical apparatus of the so-called critically edited text of *Kumārasambhava*

The fun is that the learned scholar Dr Sūryakānta, while providing a list of printed editions of *Kurmāvsmbhavam* in critical apparatus on P XXVI mentions Rev T Foulkes KS published in Roman script from Madras, 1904, Bhau Daji's KS with Mallinātha's commentary, Bombay, Samvat 1795, (AD is not mentioned), Govindaśāstri's KS with Mallinatha's Commentary, Bombay, Śaka Samvat 1847 (AD is not mentioned), Sitārāma Kavi's KS with commentary of Mallinātha (Canto I to VIII) and that of Śitarāma Kavi (Canto IX to XVII) Nirnayasāgar Press, Bombay S C 1946, Tārānātha Tarkavācaspati KS bare text of Canto VIII & XVII, Calcutta 1926, Vithalnātha Pandita's KS, Canto VIII & XVII, published in 'Paṇḍita' 1866 Vol. I Nos 1-9 and Jivānanda Vidyāsāgara's KS Canto VII to XVIII with his own comment, Calcutta S C 1890

Dr. Sūryakānta has not mentioned two very important editions of KS which have three commentaries other than those mentioned above

1 KS with two commentaries Prakāsika of Aruna girinātha and Vivarana of Nārāyaṇapaṇḍita Edited by T Ganapati Śāstri, Trivendram 1913

2 KS with Mallināthа's Commentary Cantos I to VIII, of Cāritravardhan's Commentary Cantos I to VII and Sitarama's Commentary from IX to XVII, Published by Gujarati Printing Press, Bombay, 1898

Morever while taking note of unpublished commentaries of KS, Dr Sūryakānta refers to the MSS of Bharata, Bṛhaspati, Gopāla (P XXIV, Śrīgurjara Ganeśopadhyāyasuta—Nārāyana and Samayasundara Jaina, but he does not bother to take note of a prior commentator of Kālidasa viz Vallabhadeva who is mentioned more than once even by Mallinatha in his commentary on KS.

So I humbly want to put before the assembly of scholars that the edition of KS prepared by Dr Sūryakanta can not be called a critical edition It may be called an edition with some readings from various commentaries prepared by Dr Sūryakānta

---

॥ श्रीः ॥

महाकविकालिदासविरचितम्

# कुमारसंभवम्

आनन्ददेवायनिवल्लभदेवविरचितया

पञ्जिकया सहितम्

# ॥ प्रथमः सर्गः ॥

॥श्री शारदायै नमः[1] ॥

यस्य भृङ्गावलिः कण्ठे दानाम्भोगजिराजिते[2] ।
भाति रुद्राक्षमालेव स वः पायाद्गिनायकः[3] ॥१॥
कालिदासोक्तयः कुत्र व्याख्यातारो वयं कुत[4] ।
तदिदं मन्ददीपेन नागवेश्मप्रवेशनम्[5] ॥२॥
तथापि क्रियतेऽस्माभिः पञ्जिका स्कन्दसंभवे ।
उन्नताश्रयमाहात्म्यस्वात्मप्रख्या[6]तिलालसैः ॥३॥

इह हि प्रेक्षापूर्वकारिणां[7] महाकवीनां काव्यारम्भे यथैवा[8]भीष्टदेवता-संस्तवनमभ्युदयनिदानं तथैवोत्कृष्टवस्तुसंकीर्तनमपीति हृदि[9] कृत्वाऽऽह[10]—

१ श्रीशङ्खेश्वरपार्श्वनाथाय नमः। ॐ श्रीविघ्नहन्त्रे नम । –भ ॐ नम. सिद्धिः – ल. २. श्रुतदानाम्बुभूषिते – म – १ दानाम्भोराजिराजति–भ. ३. गणाधिप –न. भ ख ल ४. वव च–न भ य ल ५ नाट्यवेश्म-प्रवेशनम् – भ य, नाटयवेश्मप्रकाशनम् – न. ०दीपेनाथवेश्मप्रकाशनम्–ल ६. माहात्म्यं स्यात् स्वरूपाख्या०–शा. ७. ०पूर्वविधायिनाम् – ल ८. ०पवेष्ट० – न. ९ मनसि–ल १० श्रीकालिदास आह–ल. 'यस्य...आह'—नास्ति—मुला पत्रभङ्गकारणात् प्रतिपयपाठो लुप्त –शा

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी[1] विगाह्य[2] स्थितः पृथिव्या इव मानदण्डः ॥१॥

१. वारिनिधी–अ. ना. मा. मुता २ वगाह्य–म. ख.

अस्त्युत्तरस्यामित्यादि ॥ [उत्तरस्यां] कौबेर्यां[1] [दिशि] हरिति हिमालयो नाम हिमवन्नाम[2] नगाधिराजः महीभृतामधिपः[3] अस्ति । अथाप्य वनिष्ठते[4] । पर्वतानां स्थावररूपतयैव प्रसिद्धत्वादेतां भ्रान्तिं निरस्यन्नाह। देवतात्मा देवतास्वरूपः[5] । जङ्गमरूपस्य तस्य[6] यागसम्प्रदानत्वात् । यदुक्तम्— 'हिमवानिहास्ति' इति । इहापि च वक्ष्यति प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत्' [कु० १-१७] इति । इति चास्य हरेण स्वाजन्यम् । यश्च [पूर्वापरौ] प्राच्यप्रतीच्यौ [तोयनिधी] उदधी[7] विगाह्य आक्रम्य च[8] स्थितः इति द्राघीयस्त्वोक्तिः । मतश्चोत्प्रेक्षते पृथिव्याः मानदण्डः इव । समुद्रद्वयव्याप्त्या हि तेन उर्वी मितेव भवति । मितिर्मानं तदर्थं दण्डः इत्यद्वयचासवत्समासः[9] ।

१. वसुभि—भ मुद्रा पाठ प्रारभ्यते। २. महीभृत्—ल, नास्ति—भ न शा मुद्रा. ३ ०ना नाथ—भ, ०भृन्नाथ—ल. शा. मुद्रा ४ ०थापि विद्यते—भ न ल शा मुद्रा ५. ०स्वरूप आत्मा यस्य—न मुद्रा ६ 'तस्य . . .. स्याजन्यम्'—नास्ति—शा मुद्रा. ७. अम्बुनिधी — ल ८. आक्रम्यावस्थित—भ ब न. शा ९. 'इत्य ·····समास'—नास्ति—भ न. शा. मुद्रा

अत्र च इवशब्दस्य भिन्नक्रमतां निषेधद्भि[1] प्राक्तैरन्यै र्वृथैव प्रयासो व्यधायि । यतोऽसौ भिन्नक्रमोऽस्तु वा मा भून्नैतावता वस्तुन[3] काचिदपि[4] क्षतिः । महाकवयो ह्युपमानादिवाक्ये येन केनचित् पदेन इवादीन् प्रयुञ्जाना दृश्यन्ते । यथा —

१ निषेधद्भि—भ. ल शा, निदेशद्भि—न मुद्रा २ प्राक्तैरन्यै —शा मुद्रा ३. वस्तुनि—शा मुद्रा ४ कदाचिदपि—भ., कापि—न.

पौरस्त्यस्तोयदर्तोः[1] पवन इव पतत्पावकस्येव धूमो
विश्वस्येवादिसर्गः प्रणव इव परं पावनो[2] वेदराशेः।
सन्ध्यानृत्योत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥

अत्र हि क्वचित्प्रथमान्तेन सहेवशब्दः प्रयुक्तः, क्वचित्षष्ठ्यन्ते[न], तत्क्वचिच्च 'संध्यानृत्योत्सवेन्दुमौलेरिव' इति विशेषणपदेनेति, न किञ्चि[4]दर्थान्यथात्वम्। पृथिव्या सहेवशब्दस्य सम्बन्धे उत्प्रेक्षा, मानदण्डेन उपमेति विपर्यविभागोऽप्ययं निर्मूल एवेति सर्वथोत्प्रेक्षैवाऽयमलंकारः। न चेवशब्दस्य भिन्नक्रमता लक्षणविरोधिनी [प्रती]यते[5]। 'इवेन [समासो] विभक्त्यलोपः [च]' इत्येतत्कात्यायनीयं वचनम्। समासपक्षे विभक्तेरलुग्-[मुख] सुखार्थं न च नित्यसमासार्थम्[6]। एवं हि बहुतरलक्ष्यदर्शनम्। यथा— 'कचाचितौ विष्वगिवागजौ गजौ' [किरात १-३६] इति। 'हरितपद्ममयीव मरुद्गणैः स्रगिव पद्ममनोरमवल्लया' [शिशु० १-५३] इति चेत्यलमतिप्रसंगेन। अधिराजत इत्यधिराजः प्रभुः। पचाद्यच्।[7] अधिकस्य राजेति षष्ठीसमासः। यदि वा[8] राजाधिराजः। 'राजाहःसखिभ्यष्टच्' [पा० सू० ५-४-९१]। सर्गेऽत्र वृत्तमुपजातयः। क्वचिदिन्द्रवज्रा क्वचिदुपेन्द्रवज्रा क्वचिदाख्यानिका क्वचिद्विपरीताख्यानिका[10] ॥१॥

१. 'पौरस्त्यस्तोयदर्तौ' इत्येतावदेव पाठ—न घ मुद्रा  २ पावनम्—म
३ ०नृत्तोत्स०-म  ४ कश्चिद्—मुद्रा  ५ 'प्रतीयते'—नास्ति – मुद्रा
६-६ इवेन [समास] पक्षे विभक्तेरलुगर्थं स्वरार्थं च, न तु नित्यसमासार्थम्-मुद्रा. इत्येतावत पूर्वपदप्रकृतिस्वरत्व चेति समासपक्षे विभक्तेरलुगर्थं स्वरार्थं च न तु नित्यसमासार्थम्—शा.  ७ 'अधिरैश्वर्ये — भ्वा.– मुद्रा  ८ अधिकश्चासौ— शा मुद्रा.  ९ नामशब्द प्रतीतिद्योतका निपात । न तु सत्ताय, अवाचकत्वापत्ते ।—शा मुद्रा  १० ०दविपरीता–शा मुद्रा, 'यत सर्वत्र प्रथमाक्षरवर्जमन्यपदसतुष्टयेऽपि गुरुलघुसाम्यम्। तत्र यदाद्ये वर्णे चतुर्ष्वपि पदेषु गुरुर्भवति तदिन्द्रवज्रा। [यथा—'अस्त्युत्तरस्याम्' [कु १-१] इत्यादौ। यदा लघुस्तदुपेन्द्रवज्रा।] यथा—'वनेचराणाम्' [कु १-१०] इत्यादौ। तयो सयोगे चतुर्दशभेदा उपजातयो भवन्ति। तत्र यदा प्रथमतृतीययो पादयोराद्ये वर्णे गुरुर्भवति द्वितीयचतुर्थयोश्च लघुस्तदाख्यानिका नाम। यथायमेव श्लोकः। एतद्विपर्यये तु विपरीताख्यानिका। यथा—'पद तुषारस्रुति' [कु. १-६] इत्यादि। अन्यत्र परिशिष्टा द्वादशभेदा उपजातय । यथा—'य सर्वशैला' [कु १-२] इत्यादि। एव गुरुभेदिन्यो गुर्वंद्भिरन्योन्यादि उपजातय उत्तरत्रेति, एवं ग्रन्थोपयोगमेव।' शा –शा. मुद्रा

इदानीं षोडशभिः श्लोकैर्हिमालयवर्णनमेव प्रस्तुत्पुराह[1]—

यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥२॥

१ हिमालय प्रस्तुत्पुराह–मुद्रा

यं सर्वशैला इत्यादि ॥ यं हिमवन्तं[1] वत्सं परिकल्प्य मन्दरादय सर्वशैलाः[2] निखिलाद्रय [धरित्रीं] धरणिं[3] रत्नानि महौषधी च दुदुहु अधुक्षन्त । द्विकर्मको दुहि । वत्सत्वेन सर्वत्राद्रिराज परामृश्यते । कदा दुदुहिरे । मेरौ दोग्धरि स्थिते । यतोऽसौ दोहदक्ष "प्रवीण."[4], यदि मेरुर्दोग्धा कथं तर्हि शैलाना कर्तृत्वम्, दोहफलभागित्वात्[5] । तेषां यद्येवं[6] कथ दुदुहुरिति परस्मपद, कर्त्रभिप्राये क्रियाफले स्वरितत्वादात्मनेपदेन भाव्यम्[7] । कर्त्रभिप्राये[8] क्रियाफलस्याविवक्षितत्वाद्त्यदोष. । अदोहनिवृत्ति पराया हि चोदनाया धात्वर्थस्य विशेषा प्रतिभासन्ते, कर्त्रभिप्रायता नास्ति । अत एवाविवक्षा तत्र प्रधानेनाश्रितेति । पूर्वकविवक्षे सर्वं सुस्थम्[9] । कीदृशीं धरित्रीम् । [पृथूपदिष्टा] पृथुना वैन्येनोपदिष्टां दोहे कृतोपदेशाम् । प्रथमं हि तेनाऽसौ सर्वसस्यानि दुग्धा । ततश्च तन्निदेशेन ऋषिसुरासुर पितृनागयक्षराक्षसगन्धर्वपर्वतप्रभृतिभि । तत्र चैषां प्रत्येकं विभागेन वत्स दोग्धृपात्र दुग्धपात्रक्षीराण्यासन्[10] । यदा शैलैरसावदोहि तदा हिम वांस्तर्णको मेरुर्दोग्धा रत्नौषधयो दुग्धमासीदित्यागम[11] । यदुक्तम्—

शैलैश्च श्रूयते राजन्पुनर्दुग्धा वसुन्धरा ।
औषधीर्वै मूर्तिमती रत्नानि विविधानि च ॥
वत्सस्तु हिमवानासीद्दोग्धा मेरुर्महागिरि ।
समुद्रा पात्रता जग्मुरितिहासं पुरातनम् ॥

—[हरिवंशम् १, ६, ४०-४१]

इति । हिमवतश्च[11] वत्सत्वे[12] महानेव मेरुतो विशेषः । वत्सो हि प्राधान्यत.[13] क्षीरस्य स्रावको न तु दोग्धा । तथा च दोहकप्रसंग[14] एवोक्तम्–'वत्सं तु मम संपश्य क्षरेयं येन वत्सला ।' [–हरिवंश १, ६, ९]

इति[15] । भासो विद्यन्ते येषां तानि भास्वन्ति । नपुंसकैकशेषेणौषधिविशेषणमिति । धरित्रीति 'अशित्रादिभ्य इत्रोत्रौ' [उ० ४-१७३] । गौरादित्वात् ङीष् । दुदुहुरिति [परोक्ष]भूतत्वाल्लिट्प्रयोग । उत्तरत्र वाक्येषु धात्वर्थानां वर्तमानत्वाल्लडुत्पत्तिः ॥२॥

१. हिमालयम्–न २. 'सर्वशैला'–नास्ति–शा मुशा ३ वराणि–अपा–भ ब ल. ४ दोहे दक्षः–अपा–भ ब ५ दोहप्रवीण –शा मुशा. ६. ०भोक्तृत्वात् –भ. ब न, ०भागकत्वात्–शा ७..७ यदि मेरु......मुख्यम्–नास्ति–मुशा ८. भास्यम्–न शा ९. ०प्रायस्य –शा १० ०दोग्धृक्षीरा०–शा मुशा ११ हिमवानेन –ब. भ, हिमवता–न १२ वासत्येन–न. ब. भ, 'समुद्रा ..विशेष' नास्ति–मुशा १३. प्राधान्येन–न, वत्सप्रधान–शा. मुशा. १४ दोह०–न ब भ ल १५. 'भासो.. लडुत्पत्ति. ।'–नास्ति–शा. मुशा

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥३॥

अनन्तरत्न[1] इत्यादि ॥ यस्य हिमवत.[2] हिमं तुहिन सौभाग्यविलोपि रामणीयकविच्छेदि न जातं न सम्पन्नम् ।[3] यत. अनन्तरत्नप्रभवस्य । प्रभूतोत्कृष्टवस्तुकुलगृहस्य[4], प्रभवत्यस्मादिति प्रभवः । यद्यसौ बहूनां[5] रत्नानां प्रभव. किमित्येतावता दुष्टस्य हिमस्य वहनं न दोषकृदित्याह –यस्मात् [गुणसन्निपाते] बहूनां गुणानां सन्निपाते समूहे एकः दोषः [निमज्जति] नश्यति[6], न दूषयति[7] । [इव] यथा [इन्दोः] शशिनः[8] [किरणेषु] अमृतस्राविषु मयूखेषु । [अङ्कः] शशाख्य लक्ष्म । जातमिति कर्तरि क्त. ॥३॥

१ प्रभवादिति विशेषणद्वारेण हेतून्यास ।–अपा–शा २ पर्वतस्य –न. ३ सौभाग्य सेव्यत्वमपि—अपा–शा ४. ०कुलनिदानस्य–शा ५ प्रभूतानाम्–ल शा. मुशा. ६. मुडति–अपा–मुशा. ७ क इव –अपा–न ८. चन्द्रस्य–भ ब मुशा

यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥४॥

यश्चाप्सर इत्यादि ॥ यः नगेशः[1] धातुमत्तां धातुमत्त्वं[2] शिखरैर्बिभर्ति । धातवोऽत्र सिन्दूरगैरिकादयो रक्तास्ते विद्यन्ते यस्य स धातुमान् तद्भावो धातुमत्ता तां शिखरैः बिभर्ति शृङ्गैर्वहति । धातून्धारयतीत्यर्थः । कीदृशीम् । [अप्सरोविभ्रममण्डनानाम्] अप्सरसां यानि विभ्रममण्डनानि[3] विलासार्थं भूषणानि तिलकादीनि, तेषां सम्पादयित्री तया[4] तत्करणत्। तथा च [वलाहकच्छेदविभक्तरागां] वलाहकच्छेदेषु मेघखण्डेषु विभक्तोऽर्पितो रागो लौहित्यं[5] यया ताम् । अतश्चोत्प्रेक्षते[6]–अकालसन्ध्यामिव सन्ध्यावेलायां किल लोहिता मेघा भवन्ति[7] । मध्याह्नादावपि[8] रक्तजलदावलोकनादित्यमूहः । अकालग्रहणेन सदैव मेघानां रागार्पणं प्रतीयते । उत्प्रेक्षा चैषा नोपमा । सत्किलोपमान दीयते[9] । न चाकाले सन्ध्या[10] क्वचित्संभवति । उत्प्रेक्षायां प्रत्ययः प्रत्यक्षमेव । तथाऽभासो[11] हेतुर्यथा– 'अन्तर्जलौघमवगाढवतः कपोलौ हित्वा क्षणम्'[12] [शिशु० ५-३८] इति ॥४॥

१ अगेश–शा मुद्रा. २ सधातुत्वम्–भ ल व न शा मुद्रा. ३. विभ्रमार्थं मण्डितानि–व भ शा मुद्रा ४. घटयित्रीम–अपा –न व भ ल. शा मुद्रा. ५ रक्तत्वम्–व न शा मुद्रा. ६ उत्प्रेक्ष्यते–भ ७ सन्ध्यवेला किल लोहितमेघा भवति–शा. मुद्रा. ८ मध्याह्नेऽपि–भ ल. न व ९ सत्किलोपमाम दीयते यत् सभवति–मुद्रा १० नाचाले० –मुद्रा. ११. ० भासनम्–मुद्रा १२ अन्तर्जलौघमवगाढवत कपोलौ हित्वा क्षण विततपक्षतिरन्तरिक्षे । इभ्याश्रयेष्वपि गुणेषु रराज नीलो वर्णं पृथग्गत इवालिगणो गजस्य ॥ [शिशु ५–३८ ]–व भ न शा मुद्रा

आमेखलं संचरतां घनानां छायामधः[1] सानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥५॥

१ छायामिषे–स –[इषे आश्विने मासि–पाठी स.]

आमेखलमित्यादि ॥ यस्य आतपवन्ति सातपानि शृङ्गाणि शिखराणि सिद्धाः आश्रयन्ते आसेवन्ते । 'अवाप्ताष्टगुणैश्वर्यः' सिद्धः[1] सद्भिरुदाहृतः[3]। किं कृत्वा । आमेखलं नितम्बपर्यन्तं सञ्चरतां पर्यटतां घनानां जीमूतानां अधःसानुगताम् उपत्यकापातितां छायां निषेव्य । अतश्च वृष्टिभिः उद्वेजिता सन्तः शीतनिवृत्तये[4] शृङ्गाणि रविकान्तिमन्ति आरोहन्तीत्युच्चैस्त्वोक्तिः[5] । मेखला गिरेर्मध्यम् । मेखलायाः आ आमेखलमिति 'आङ् मर्यादाभिविध्योः' [पा० सू० २-१-१३] । अनु[7] (आङ्?) योगे पञ्चमी 'पञ्चमी'[6] इति निर्दिष्टत्वात् । पञ्चम्या अपि स्थानेऽम्भाव इत्यन्ये[7] । युक्तं तु पञ्चमीविशेषणत्वं द्वितीयेति ॥५॥

१. ०गुणैश्वर्याः–भ व श मुशा २. सिद्धा–भ. व. शा. मुशा.
३. उदाहृता–भ. ब. शा मुशा ४ शीतापनुत्तये–व. शा. मुशा.
५ इत्युच्चत्वोक्ति.–व शा मुशा, इत्युच्चोक्ति–भ, इत्यत्युच्चोक्ति–भ ल.
६ पञ्चम्यापाङ्परिभि ।–पा सू. २-३-१० ७–७ 'अनु . न्ये'–नास्ति–शा. मुशा.

ननु[1] करिकुम्भसम्भृतमौक्तिकशर्कराणां मार्गपतितानामपि न कोऽपि ग्राहकः इति भङ्ग्या प्रतिपादयन् पर्वतस्य सम्भूतिं कथयन्नाह[1]—

पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥६॥

१...१ ननु... आह–नास्ति–व. न. भ ल ब शा. मुशा.

पदं तुषारेत्यादि ॥ यत्र [हतद्विपानां] विपाटित[1]करिणां [केसरिणां] सिंहादीनां[2] [मार्गं] गमनपथं किराताः पुलिन्दाः विदन्ति जानन्ति[3] । कदाचिन्निहतहस्ति[4]त्वादसुगङ्कितं कम[5]दर्शनं स्यादित्याह । पदम् अदृष्ट्वा अपि यतः तुषारस्रुतिधौतरक्तं गलिततुहिनक्षालितरुधिरम्[6] । कथं तर्हि विदन्तीत्याह । नखरन्ध्रमुक्तैः करजविवरनिर्गतैः [मुक्ताफलैः] मौक्तिकैः ।

सिंहानां करिकटतट[8]पाटनमाचरतां[9] नखरन्ध्रप्रविष्टानि मौक्तिकानि ततस्तेषां व्रजतां[9] पथि गतानि पतितानि तथैव स्थितानि इति समृद्धिकथनम्[10] ॥६॥

१ उत्पाटित०–य शा मुशा  २ सिंहानाम–भ ल न व शा मुशा
३ जानते–शा न भ शा, जानते मुशा  ४ ०र्दित०–न  ५ पद–भ
६ इत्यर्थं –अपा –न, तुषारस्रुत्या धौत क्षालित रुधिरं यस्मिन्पदे चरणे तदिति हेतुपदं वा–अपा –शा मुशा.  ७ ०करट०–मुशा न व भ व ल
८ ० विवर०–न व भ व ल शा मुशा  ९ परिव्रजताम्–शा मुशा
१० मुक्ताफलानि तत्र परमजिनार्थिना किरातानां केसरिपथसूचकानि । न तु तैपूर्परि कस्यचिदाश्यति । –अपा –शा मुशा

न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिंदुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥७॥

न्यस्ताक्षरेत्यादि ॥[1] दहति देहमसौ मदनानलो हिमकणान्क्षिपति क्षणदापति । विचर[2] यदिहाधुना प्रिय निशास्यतिजीवनिडम्बना ॥[3] यत्र भुर्जत्वचो विद्याधरसुन्दरीणां मदनसन्देशसम्पादनेनोपयोगं व्रजन्ति गच्छन्ति । तत्तु[3] आयव्ययापायादिव्यापारेण । कीदृशः । न्यस्ताक्षरा धातुरसेन । लिखितवर्णा । अतश्चाक्षराणां लौहित्यात्कुञ्जरबिन्दुवच्छोणा लोहिता । पक्वस्या हि दशायां करीन्द्राणां रक्तबिन्दवो निर्गच्छन्तीति तद्विद[4] ॥७॥

१ त्रुटितपाठ भ–१  २ श्लोक –नास्ति–व ल शा मुशा  ३ न तु–मुशा
४ धातुलिपेश्च वर्णसंस्थानसारूप्यादप्रसिद्धा अपि कुञ्जरबिन्दव उपमानम् । धातुशब्दश्च सामान्येन प्रयुज्यमानो रक्तद्रवेषु वर्तते । यथा 'रक्ता तर्कारवो धंरुदयगिरितटीधातुधाराद्रवस्य' [ My I ] इति । यथा च—'पश्य धातुशिखरेषु भास्मन संविभक्तमिव साध्यमातपम्' [कुमार ८–४६] इति । 'अकाल–सध्यामिव धातुमत्ताम्' [कुमार १–४] इति च । यथा च 'धातुरक्तानि वासांसि' [?] इति । एवं चार्थे मदनावुद्धया भूर्जत्वचां राजिषु लौहित्य स्वाभाविकमाहृत्य तद्वस्तुगौरवतत्त्ववजितत्वादुपेक्षार्हमेव ॥ –अपा –मुशा

यः पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां स्थानप्रदायित्वमिवोपगन्तुम्[1] ॥८॥

१. तान०—अ. ना. म. म.

य पूरयन्नित्यादि ॥ यः[1] [उद्गास्यतां] प्रगातुकामानां[2] [स्थानप्रदायित्वं] स्थानं वंशेन ध्वनेर्दानं तत्प्रदानशील स्थानप्रदायी[3] तद्भावः छयिकारकत्वमिव, कु[द्] इनन्तः[4] । अतो वंशकारमिव । यतः [दरीमुखोत्थेन समीरणेन] गुहावदना[5]न्निलेन[कीचकरन्ध्रभागान्] कीचकवेणूनां विवरप्रदेशान् पूरयन्[6] । जिगासतो हि पूर्वं वांशिको वेणुना स्थानं ददाति । सुस्वराः वेणवः[7] कीचकाः ॥८॥

१. अि.—अपा –व. २. किन्नराणाम्—अपा. – म. ३. ०यित्वमुपगन्तुमिच्छतीव–व., स्थानं दित्सतीव–म:, ०धित्सतीव–शा. मुशा. ४. 'कु[द्] इनन्तः – नास्ति–शा. मुशा. ५. ०वदनोद्भवेन०–शा. मुशा. ६. ०भागान्पूरयन्-शा., मुशा. ७. वंशा.–न. शा मुशा.

कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः[1] सानूनि गन्धः[2] सुरभीकरोति ॥९॥

१. समीर –शा. मुशा. २. गन्धः–मुशा.

कपोलकण्डू इत्यादि ॥ यत्र वायुर्देवदारुतरूणां स्रुतक्षीरतया गलितरसत्वेन ये गंधाया आमोदास्तैः सानूनि सुरभीकरोति सुगन्धयति । कीदृशानामिति रसस्रुतिकारणमाह । कर्षणेन कपोलकण्डूर्विनेतुमपासितुं [करिभिः] गजैः विघट्टितानां स्फोटितानाम् । कण्डूरिति हसन्तः । सानुशब्दः पुंस्त्रियोः[1] ॥९॥

१. पुंसि वा–शा. मुशा.

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥१०॥

वनेचराणामित्यादि ॥ यत्र निशि युवतियूनां[1] पुलिन्दादीनां[2] वनवासिनामोषधयः सुरतार्थं प्रदीपा भवन्ति। तेजो व्याप्ता[3] दीपान्तराद्विशेषमाह। तैलेन पूर्यन्त इति तैलपूराः, न तैलपूरा अतैलपूराः, अग्निमत्त्वात्। दरी कंदरा एव गृहास्तदुत्सङ्गे निषक्ता लग्ना भासो यासां ताः। वनितानां सखायो वनितासखाः कान्तासहिताः। 'राजाहःसखिभ्यष्टच्' [पा० सू० ५-४-९१] ॥१०॥

१ युवतियुवानाम्—गा मुगा  २ पुलिन्दानाम्—गा मुगा
३ ०व्याप्ते—गा मुगा

उद्वेजयत्यङ्गुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥११॥

उद्वेजयतीत्यादि ॥ यत्राद्रावश्वमुख्यः किन्नर्यः खरपवनवशादुपलीभूतहिमेऽपि मार्गे मन्दां मन्थरां गतिं न भिन्दन्ति, न त्यजन्ति। कीदृशे। सहिमत्वादङ्गुलिपर्यन्तान् पार्ष्णिप्रदेशांश्चोद्वेजयति स्फोटयति[1]। कथं तर्हि त्वरया न यान्तीत्याह। [दुर्वहश्रोणिपयोधरार्ता] दुर्वहेण पीनेन श्रोणीपयोधरेण जघनस्तनेनार्ता पीडिता। यदि वा ऋता प्राप्ता[2] समृद्धा[3]। 'ऋते तृतीयासमासे'। [म० भा० ६-१-८९] इति वृद्धिः। आर्तशब्दश्च आङ्पूर्वात् ऋच्छतेः क्त। 'उपसर्गादृति धातौ' [पा० सू० ६-१-९१] इति वृद्धिरादेश[4]। तासां चाश्वमुखीनां कायस्य नारीसारूप्यात्स्तनजघनाङ्गुलिपार्ष्णिसंभवः। किन्नराणां ह्रि ड रूपे। केचिदश्वमुखाः पुरुषशरीराः केचिन्मनुष्यमुखा अश्वशरीरा इति। पार्ष्णिः खुरिका ॥११॥

१ स्फोटयमाने—मुगा  २ 'प्राप्ता'—नास्ति—गा मुगा  ३ समृद्धा—गा मुगा  ४ वृद्धिरेकादेश—मुगा

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ॥१२॥

दिवाकरादित्यादि ॥ यो नगो[1] दरीषु लीनं[2] तमोऽर्काद्रक्षति । [दिवाभीतम्] दिनेऽपि भीतमिव सभयः किलान्यस्माद्रक्षति[3] । ननु दुष्टस्य रक्षायां क इवास्य[4] गुण इत्याह । उच्चैःशिरसामुन्नतानां क्षुद्रेऽपि शरणं प्राप्ते निश्चितं सतीव साधौ यथा ममत्वमात्मीयत्वं भवति । गुणागुण्यविचारेण महान्तः शरणागतं पालयन्तीत्यर्थः । ममत्वमिति[5] षष्ठ्यन्तप्रतिरूपको निपातः[5] ॥१२॥

१. नगेशः–न., गिरीशः–ब. २. विवरगतम्–न. ३. रक्षति–दा. मुद्रा. ४. इवान्य–दा. ५–५. ममत्व ममतेति षष्ठ्यन्तप्रतिरूपको निपातो–मुद्रा.

लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चान्द्रमरीचिशुभ्रैः[1] ।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः ॥१३॥

१. चन्द्रमरीचिगौरैः–अ. म. ब स., चन्द्र०–मुद्रा.

लाङ्गूलविक्षेपेत्यादि ॥ यस्य भूभृन्नाथस्य स्थावररूपस्यापि चमर्यो बालव्यजनैः प्रकीर्णकैर्गिरिराज इतीमं शब्दमर्थयुक्तं सार्थकं कुर्वन्ति । राज्ञः किल चामरैर्वीजनीयम् । कीदृशैः । लाङ्गूलमुपरितनो भागस्तस्य विक्षेपेण चालनेनेतस्ततो विसर्पन्ती प्रसारिणी[1] शोभा येषां तैः । तथा [चान्द्रमरीचिशुभ्रैः] शशिमयूखवच्छुभ्रैर्धवलैः । आकारोऽप्यत्रौपमिको बोद्धव्योऽन्यथा मरीचिग्रहणेन किमत्र फलं स्यात् । 'अज गतिक्षेपणयोः' [धा० पा० २३०] इत्यस्य विपूर्वस्य करणे व्यजनशब्दः । 'ईज गतौ' [धा० पा० १८२] इत्यस्य वीजनशब्दः । 'स्वरयेर्दक्षिणवातवीजनैः' [कुमार० ४-३६] इति ॥१३॥

१. प्रसरन्ती–मुद्रा.

यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥१४॥

यत्रांशुकेत्यादि ॥ यत्र किन्नरीणां प्रियेणाम्बरापहारव्रीडितानां [जलदाः] जीमूताः [यदृच्छया] स्वेच्छयैव तिरस्करिण्यो भवन्ति, जवनिकाः सम्पद्यन्ते। तदङ्गादर्शनात्। यतो [दरी···बिम्बाः] दरीगृहद्वारे विलम्बिबिम्बा विश्रान्तमण्डलाः। तिरस्करोति स्थगयतीति तिरस्करिणी। बाहुलकादिनिः। 'तिरसोऽन्यतरस्याम्।'[पा० सू० ८-३-४२] इति सत्वम्। यदृच्छाशब्दो स्वेच्छार्थे[1] 'मयूरव्यंसकादयश्च।' [पा० सू० २-२-७२] ॥ १४ ॥

१ इच्छार्थेन-दा. इच्छार्थो-मुशा.

भागीरथीनिर्झरशीकराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥१५॥

भागीरथीत्यादि ॥ यदीयो वायुरन्विष्टमृगत्वात्परिश्रान्तैः [किरातैः] शबरपतिभिराश्रीयते। कीदृशः। भागीरथीनिर्झरशीकराणां गङ्गाप्रपातजलकणानां वोढा क्षेप्तेति शैत्यपुण्यत्वोक्तिः। मुहुरसकृच्चालितः[1] सुरतरुविटप इति सौरभोक्तिः। भिन्नशिखण्डिबर्हस्त्रोटितै[2]कलापिपक्ष इति मार्दव[3]कथनम्। निर्यं[4] झरति प्रस्रवतीति निर्झरः। वहतीति वोढा, तृच्।१५॥

१. ०स्फुटित०-मुशा. २. चापल०-मुशा. दा. ३. नियतम्-दा. मुशा.
४ देवदारुयोगात् सुरभित्वम्। अन्विष्टमृगपात। भिन्नशिखण्डिबर्हं भिन्नमयूरपिच्छतया प्रत्येयमचण्डत्वात्। -दा. मुशा.-पाठो.

सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥१६॥

सप्तर्षिहस्तेत्यादि ॥ यस्याब्जानि [ विवस्वान् ] रविरूर्ध्वमुखैः किरणै-र्विकासयति । न त्वधोमुखैः[1] । यतस्तान्यग्रसरोरुहाणि अग्रे[2] प्रान्ते यानि सरांसि तत्र रोहन्तीति अग्रसरोरुहाणि[2] । यत्र सरस्समधो बुध्नं[3] परिवर्तमानः पर्यटन् । अतश्चोर्ध्वं प्रसरति किरणपञ्चशतानि । एवं तद्विकासे सामर्थ्यम्[4] । कीदृशानि तानि[5] । [सप्तर्षि..... शेषाणि] त्रिदशमुनि-करापचयनादवशिष्टानि[6] । प्रत्यूषसि हि ते पूर्वं प्रत्यहं तान्यर्चार्थं[7] नयन्ति । अवशिष्यन्त इत्यवशेषाणीति भावादत्र यज्ञाभिधेयलिङ्गता ॥१६॥

१. त्वधोगतै.–ल. शा. मुद्रा.     २...२. 'अग्र.. हाणि'–नास्ति–शा. मुद्रा.
३ ०भागे–शा. ०बुध्ने–मुद्रा     ४. ०तस्सामर्थ्यात्–शा.     ५. 'तानि'–नास्ति –शा. मुद्रा.     ६. ०वशेषाणि–शा मुद्रा.     ७ ०न्यर्चनार्थम्–मुद्रा, ल.
८. 'इति......लिङ्गता' नास्ति – मुद्रा

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥१७॥

यज्ञाङ्गेत्यादि ॥ किं बहुना । यस्य स्वयं [प्रजापतिः] ब्रह्मा नगाधि-राजत्वमन्वतिष्ठद्ददौ । स्वयं तेनाभिषिक्त इत्यर्थः । यतो [यज्ञाङ्गयोनित्वम्] यज्ञाङ्गानां सोमपलाशादीनां योनिः । प्रभवोऽयमित्यवसायवगतवान् । [धरित्रीधरणक्षमम्] उर्वीवहनयोग्यं सारं बलं च दृष्ट्वा । किं केवलं शैलाधिपत्यं ददौ, नेत्याह । कल्पितयज्ञभागं क्रतुभागमपि अङ्गीचकारेत्यर्थः । अत एवास्य देवतात्वमन्यम्[1] । सरन्तीति सारः । 'व्याधिमत्स्यबलेषु'[2] इति घञ् ॥१७॥

१. ०त्मदेवतात्वम्–शा. मुद्रा.     २. पा. सू. ३–३–१७ अन्तर्गतं वार्तिकम् ।
३. महा भा. ३–३–१७

स मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥१८॥

स मानसीमित्यादि ॥ स[1] नगेशः पितॄणां [मानसीम] मनोनिर्मितां मेनाख्यां [कन्याम्] यथावदुपयेमे, व्यवाहयत् । कुलस्य वंशस्य स्थितये अविच्छेदाय । यतोऽसौ स्थितिज्ञः आचारवित् । लोकाचारः किंऽत ज्ञातव्य । मेरुसखत्व कुलजभवादिसाम्यात्.[2] तेनापि पितृकन्यकोपयमाद्या। पितृभिर्दैवताविशेषैर्हि[3] मनसा कन्यात्रय निर्ममे । एका हिमवते कन्या दत्ताऽपरा मेरवे । तृतीयाऽन्यस्मै इत्यागमः । अत एव तामृषीणामपि पूज्याम् आत्मनोऽनुरूपां कुलशीलादिभि[4] । उपयेमे इति 'उपाद्यम स्वकरणे' [पा० सू० १-३-५६] इति लिटि[5] ङित्वम् । 'अत एकहल्मध्येऽना देशादेर्लिटि [पा० सू० ६-४-१२०]इति एत्वाभ्यासलोपौ । एवमन्यत्र ॥१८॥

१. 'एवंविध.'—अपा —शा मुद्रा   २ ०याम्यम्-मुद्रा.   ३. 'देवताविशेषं हि'-नास्ति-शा मुद्रा   ४ 'विधिना शास्त्रोक्तविधानेन' —अपा -मुद्रा , ०शोक्तेन० —शा. ५ तङि —मुद्रा

कालक्रमेणाथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसंगे ।
मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद्भूधरराजपत्न्याः ॥१९॥[1]

१. अयं श्लोकः नास्ति—शा. मुद्रा. अ ना

कालक्रमेणेत्यादि ॥ (कालक्रमेण) कालनिष्पन्ने (स्वरूपयोग्ये) निजरूपोचिते, स्वं रूपं पुत्रस्तस्य योग्ये समर्थे ऋतुकालादिसमयसामर्थ्याद् । (मनोरमं यौवनम् उद्वहन्त्याः) सम्भोगव्यापारेऽभिनवतारुण्यं धारयन्त्याः[1] ॥१९॥

१. यौवन चतुर्धा, तथा चोक्तम्—
'बाल्य मनोरम चैव जठर जाठर तथा ।
वात्स्यायनेन तत्प्रोक्त यौवन च चतुर्विधम् ॥'—अपा. ल.

असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥२०॥[1]

१. १९-शा. मुद्रा. अ. ना.

असूतेत्यादि ॥ सा मेना मैनाकाख्यं सुतमसूताजनयत्[1] । कीदृशम्[2] । [अम्भो सख्यम्] समुद्रेण सह कृतवायस्यम् । अतश्च सहवासान्नागकन्यानामुपभोग्यं सेव्यं पतित्वेन । तथा [पक्षच्छिदि] पर्वतपक्षच्छेदिनीन्द्रे [क्रुद्धेऽपि] कुपितेऽपि कुलिशक्षतानां वज्रव्रणानामवेदनाज्ञं, पीडां न जानाति[3] । अब्धिमध्ये शक्रस्य[4] प्रवेशाभावात् । पूर्वं हि सपक्षा पर्वता आसन् । ततस्तेषां लोकस्य रुजतां[5] वृत्रहा[6] वज्रेण पक्षानच्छैत्सीदित्यागमः । पक्षे छिन्नत्तीति[7] पक्षच्छित् । असूतेति पूङो लङ्[8] ॥२२॥

१ पुत्रमसूताजीजनत–शा  २ कीदृशम्'–नास्ति–शा मुशा  ३ 'यस्तम' –अपा –शा  ४ इन्द्रस्य–शा  ५ पीडाम–शा  ६ इन्द्र–शा  ७ पक्षाणि छिनत्तीति–शा  ८ ष्ट्र पूङ् प्राणिगर्भविमोचने । (धा पा १०३१)

अथापमानेन[1] पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥२१॥[2]

१ अवमानेन–म स शा मुशा  २ २०–शा मुशा अ ना

अथेत्यादि ॥ अथ कदाचित् तां हिमालयजायां मेनां दक्षप्रजापतेः सुता सदाशिवस्य[1] पूर्वभार्या सती[2] जन्मार्थं प्रपेदे प्राप । पुनरुपरार्थे मेनाकुक्षावात्मानमक्षिपदित्यर्थः । अत[3] पितुरपमानेन[4] प्रयुक्ता प्रेरिता । अतश्च [योगविसृष्टदेहा] योगेन धारणया विसृष्टदेहा त्यक्तशरीरा । यतोऽसौ सती साध्वी पतिव्रता भर्तुं परिभवं न सहते । दक्षेण हि किल यागोत्सवे सर्वेषु जामातृषु सपत्नीकेषु निमन्त्रितेषु गौरी देव[5]सहिता यदा नाहूता तदा तदानीं[6] 'मे मम इददोन दुराचारिणा[7]वत्सलेन पित्रा किं प्रयोजनम्' इत्युक्त्वा देहोत्सर्गो व्यधायीत्यागम ॥२१॥

१ निवम्य–ना मुना  २ सतीसंज्ञार्थं–ना, सतीसंज्ञा–मुना  ३ यत –ना मुना  ४ ०रवमानन–ना मुना  ५ महादेव०–ना  ६ तदानीम्'–नास्ति–ना मुना  ७ निराचारेणा० ना मुना

सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।
सम्यक्प्रयोगादपरिक्षितायां नीताविवोत्साहगुणेन संपत् ॥२२॥[1]

१ २१ – शा मुशा अ ना

सा भूधराणामित्यादि ॥ सा देवी [भूधराणामधिपेन] नगराजेन तस्यां मेनायाम् उदपादि जनिता । तस्यामित्याधारविवक्षया सप्तमी । समाधियोग्यापत्यर्थं नियमस्तद्युक्तायाम् । सा तु भव्या प्रशस्ता । केन कथा[1] यथोत्पद्यत इत्याह—[उत्साहगुणेन] उत्साहाख्येन गुणेन नीतौ यथा संपद् जन्यते उत्पद्यते[2] । षाड्गुण्यं नीतिः । कीदृशं[3] संपत् । [सम्यक्प्रयोगात्] यथाशास्त्रं प्रयोगाद् व्यवहारादपरिक्षतायामनष्टायाम् । यो हि विजिगीषुः षाड्गुण्यं नयं विधिवत्प्रयुञ्जानः उत्साहमाश्रयते सोऽवश्यमरिविजयेन समृद्धिमाप्नोति । तत्र नीताविव्यनेन मन्त्रशक्तिराक्षिप्ता । उत्साहगुणेनेत्युत्साहशक्तिः । संपदित्यनेन प्रभुशक्तिः । अस्याश्च मन्त्रोत्साहौ मूलम् । उदपादीति ण्यंतात्कर्मणि । भवे साधुः[4] [भव्या] ॥२२॥

१. केन कथ का–शा. मुशा. २. 'उत्पद्यते' – नास्ति – शा मुशा
३. कीदृश्याम्–शा मुशा ४ भवे साधुर्भव्या ।—शा. मुशा.

प्रसन्नदिक् पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥२३॥[1]

१. २२—शा. मुशा अ. ना.

प्रसन्नदिगित्यादि ॥ [स्थावरजङ्गमानाम्] स्थावरा वृक्षादयो जङ्गमा ग्रामारण्यभेदेन सिंहादयो मनुजादय[1] श्चतुर्दशविधाः पशवस्तेषां द्वयानामपि शरीरिणां भूतानां तस्या देव्या जन्मदिनमुत्पत्तिवासरं सुखायासीत् । कीदृशम्[2] । प्रसन्नदिङ् निर्मलाशं पांसुविविक्तवातं रजोरहितमारुतम् । शङ्खस्वनानन्तरपुष्पवृष्टि] दिव्य[3] शङ्खध्वनेरनन्तरं पुष्पवृष्टयो यत्र तत् ॥२३॥

१. सिंहमनुजादय —शा. मुशा. २ 'किदृशम्'—नास्ति–शा. मुशा.
३. दिव्याच्च-शा. मुशा.

तया दुहित्रा सुतरां जनित्री[1] स्फुरत्प्रभामण्डलया चकासे[2] ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥२४॥[3]

१. सवित्री-व. २. चकाशे–शा. मुशा. ३. २३–शा. मुशा.

तया दुहेत्रेत्यादि ॥ तया दुहित्रा[1] पुत्र्या[2] जनित्री माता सुष्ठु चकासे[3] रेजे । स्फुरत्प्रभामण्डलयोल्लस[4]त्कांतिपटलया । प्रभा हि महतामभ्युदय-सूचिका । यथा [विदूरभूमिः] विदूराख्यस्याद्रेः विभक्तायाममरनाम्ना[5] भूमिरयनिर्घनाद्घनगर्जितोत्पन्नया रत्नशलाकया मणिसूच्या कान्तिमत्या काशते । तत्र हि मेघरवेण प्रावृषि रत्नानि जायन्त इति वार्ता । जनित्री[6] इत्यन्तर्भावितण्यर्थाज्जनेस्तृच्, ततो ङीप्[6] ॥२५॥

१. 'दुहित्रा' – नास्ति – शा. मुशा. २. 'गौर्या' – अपा. – शा. मुशा. ३. चकाशे–शा. मुशा. ४. लपत्(०–शा. मुशा. ५. वालवायाजापरनाम्नो –मुशा. ६...६. 'जनित्री'''ङीप्'–नास्ति–शा. मुशा.

तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।
उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥२५॥

तां पार्वतीत्यादि ॥ तां देवीं [बन्धुप्रियाम्] स्वजनवल्लभ[1]त्वाद् बन्धुजनः पूर्वं पार्वतीत्यनेन नाम्ना जुहाव आकारयत्[2] । अभिजनेनान्वयागतेन पर्वतापत्यतया । ततः पश्चात्कालात्कालान्तरेण सैव सुमुखी उमाख्यां[3] [जगाम] प्राप । मात्रा मेनया 'उम्मा' इति पदद्वयेन तपसो निषिद्धा । 'उमिति प्रणयकोपे मा शब्दो निवारणे'। अतश्च निरुक्तप्रक्रियया[4] उमा । यदुक्तम्—

१. ०वल्लभाम्–ब. म. २. आकारयामास–म. न. 'तस्या आह्वान चक्रे'–अपा.–शा. मुशापाठो. ३. उमेत्याख्याम्–न. म. ४. निरुक्तया–न, निरुक्तिप्रक्रियया–म.

'उम्मेति चपले पुत्रि न क्षमं तावकं वपुः ।
सोढुं क्लेशात्मरूपस्य तपसः सौम्यदर्शने ॥' [म० पु० १५४-२९४]

जुह्वावेति परोक्षे[५] रूपम् ।

५ ह्वानो रूपम्-शा., ह्वेञो रूपम्-मुद्रा.

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥२६॥

महीभृत इत्यादि ॥ [महीभृतः] अद्रीन्द्रस्य बह्वपत्यस्यापि उमायां[१] दृष्टिः तृप्तिं न जगाम, न ययौ । दृश्यते चैतत् । [अनन्तपुष्पस्य] बहुकुसुमनिर्भरे वसन्ते[२] [द्विरेफमाला] भ्रमरावली [चूते] चूतपुष्पे सविशेषसङ्गा अधिकं रज्यते । मधोरिति चूतापेक्षया[३] सम्बन्धे षष्ठी ॥२६॥

१ 'अपत्ये'—अपा. – शा. मुद्रा. २. 'द्विरेफमाला'—अपा. शा मुद्रा
३ मालापेक्षया – मुद्रा

दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि ॥२७॥[१]

१ २४-शा मुद्रा

दिने दिन इत्यादि ॥ सा देवी लब्धोदया प्राप्तोत्पत्तिरन्वहं शशिकलावत्पूर्यमाणा सती[१] लावण्यमयान्सौन्दर्यरूपान्विशेषा[२]न्पुपोषावीवृधत् । ज्योत्स्ना अन्तरे गर्भे[३] येषां तानि ज्योत्स्नान्तराणीति कलान्तरविशेषणम् । लब्धोदया प्रत्यहं वर्धमाना चन्द्रलेखा यथा ज्योत्स्नागर्भाः कलाः पोषयति

१ परिवर्धमाना सती—न २ 'गुणान्' अपा.—न. ३. 'गर्भे' —नास्ति – व. शा मुद्रा

तथा लावण्यमिति वाक्यार्थः । क्रियाभेदेन कर्तृकर्मणोर्द्वयोरौपम्ये इवशब्दावपि द्वौ प्रयुक्तौ । वृद्धिक्रियया हि गौर्याश्चन्द्रलेखेवोपमानं पोषणे तु विशेषणं कर्म कलान्तराणीति । साम्यवाचकस्यानेकस्य[४] प्रयोगो न्याय्य । यथा —

'तत प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव ॥१॥' — [रघु० ४-६६]

'निर्माय[५] विधाय दिनाधिरम्याद्बिम्बादिवार्कस्य मुखान्महर्षेः ।
पार्थाननं वह्निकणावदातं दीप्ति स्फुरत्पद्ममिवाभिपेदे ॥२॥'
—[किरात० ३-२५]

'वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ।
अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता ॥३॥'
—[शिशु० २-७२]

'प्रियसखि विपद्दण्डप्रान्तप्रपातपरम्परा
परिचयचलच्चिन्ताचक्रे विधाय[६] विधिः खल ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्-
भ्रमयति मनो नो जानीम किमत्र विधास्यति[७] ॥४॥'
—[सु० र० भा० ९३-८६, शा० प० ८४१]

४ साम्य०–श मुद्रा ५ ६ निधाय–ध ७ करिष्यति – मुद्रा –पु २ भा

इत्यादौ । यच्च वानेकेवशब्दप्रयोगोत्पत्तये यच्च वृद्धया ये इवय शब्दसमर्थनार्थैरिभिर्व्याख्यानमकुर्वंस्तैरन्यत्र किं वक्तव्यम् । लभ्योऽस्या[१] लभ्यमानो दयेत्येतदपि विनानुरोधमसद्व्याख्यानमयुक्तमेवेत्याम्नाः[२] तावत् ॥२,७॥

५ ५ 'निर्माय विधाय तावत्'–नास्ति–मुद्रा ६ 'कला लभ्यमान दयया हरप्राप्तिर्यथा 'आशंसायां भूतवच्च' [पा० सू० ३- -१३२] इति सू, अन्य कला' कलान्तराणि यथा अया ज्योत्स्ना ज्योत्स्नान्तराणि प्रादुर्भवति इति केचित्'–अपा–मुद्रा शा

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥२८॥[1]

१-२७-मुशा श ना

प्रभा महत्येत्यादि ॥ तया देव्या साऽद्रिराजः पवित्रोऽलंकृतश्चासीत् । यस्य हि साक्षाद्देवी सुता सोऽवश्यं पवित्रः । पवित्रापत्येन च पितरावलंकृतौ भवतः । कयेव । प्रभामहत्या दीप्तिमहत्या शिखया ज्वालया यथा दीपः पूतो विभूषितश्च भवति । निर्वाणया ह्यर्चिया भाजनमप्रशस्तमशोभकं च भवति । दीपशब्देनात्र ज्वालावर्तितैलभाजनात्मक समुदाय आक्षिप्तः[1] । यथा च त्रिमार्गया गङ्गया स्वर्गमार्गः[2] पूतोऽलंकृतश्च भवति । यथा च छन्दोव्याकरणादिसंस्कृतया वाचा पण्डितः पूयते भूष्यते च । प्रभया महती प्रभामहतीति तृतीयासमासः । मनीषा बुद्धिः । मुख्यस्तायदर्थं पक्षो यत्समुच्चीयमाने समानि[3] समुच्चयपदानीति च-शब्दद्वयप्रयोगोऽत्र । यथा धवखदिरपलाशा इति द्वन्द्वः[4] ॥२८॥

१ विवक्षित-न भ २ त्रिपथ-भ न ल ३ ०पमानसमानि-मुशा
४ द्वन्द्वे-शा मुशा

मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये[1] ॥२९॥[2]

१ बाल्यम्-मुशा २ २८-मुशा श. ना

मन्दाकिनीत्यादि ॥ सा बाला सखीसहिता[1] मुहुर्मुहुः रेमे चिक्रीडे[2] । [मन्दाकिनीसैकतवेदिकाभिः] मन्दाकिनी गङ्गा तस्या सैकतं तीरं तत्र

१ सखीमध्ये--शा मुशा २. 'चेत'-अपा.-मुशा

वेदिकाभिः स्थलीभिः कन्दुकैः वीटाभि[3] कृत्रिमैर्दार्वादिमयैः पुत्रकैः क्रीडनकैश्च । अतश्च भूयो भूयः क्रीडनादुत्प्रेक्षते । [क्रीडारसम्] क्रीडायां रसो रागो यत्र तत्क्रीडारसम् । बाल्ये शैशवे[4] निर्विशतीव विशन्तीवनुम् विभावितः । करणेन निर्वृत्तं कृत्रिमम्[5] । 'त्रेर्मम्नित्यम्' [पा० सू० ४-४-२०] । पुत्रक इति संज्ञायां कन् । सिकता[6] विद्यन्ते यत्र तत् सैकतम् । सैकतं 'सिकताशर्कराभ्यां च' [पा० सू० ५-२-१०४][6] ॥२८॥

३ वीटादिभि—म न व नास्ति–शा. मुद्रा. ४ बाल्य शैशवम्–शा. मुद्रा.
५ 'ड्वितः क्त्रिः' [पा सू ३-३-८८] – अपा – मुद्रा
६...६ 'सिकता...च'–नास्ति–मुद्रा

तां हंसमालाः शरदीव गङ्गां महौषधिं[1] नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः[2] ॥३०॥[3]

१ महोपधीम्–मुद्रा महोपधोः–स २. प्राक्तन०–म स चा. ब. नी मुद्रा ३ २९–या मुद्रा

तां हंसमालेत्यादि ॥ तां देवीं [उपदेशकाले] शिक्षणसमये[1] [प्राग्भवजन्मविद्याः] पूर्वजन्मभवा विद्याः प्रपेदिरे प्रापुः । यतः स्थिरोपदेशां दिव्यत्वादनश्वरज्ञानाम् । शरदि यथा स्वयं हंसमाला गङ्गायां यान्तीति भूषणत्योक्तिः । यथा च महौषधिं[2] नक्तं रात्रौ निजप्रभाः प्रपद्यन्ते[3] इति भास्वरोक्तिः[4] । प्राग्भवं प्राक्तनम् ॥२९॥

१. शिक्षासमये–न शा मुद्रा २ महोपधोम्–मुद्रा –न. ४ भासुरोक्ति –म. भासुरत्वोक्ति –न. शा.

असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः

१ ३०–मुद्रा य ना.

असंभृतमित्यादि ॥ अथ सा देवी [बाल्यात्परम्] शैशवादनन्तरं यौवनाख्यं वयः प्रपेदे प्राप । कीदृशम् । अङ्गयष्टेस्तनुलतायाः असंभृतमहार्यं[1] मण्डनं भूषणमिति कटककुण्डलादिभ्यो विशेषकथनम्[2] । तथाऽनासवाख्यं पानव्यतिरिक्तं मदनस्य करणम् । चेतोविकारस्य जननम्[3] । मद्यादिकं हि मदकारि प्रसिद्धम् । तथा कुसुमायुधस्य पुष्पव्यतिरिक्तं कुसुमविलक्षणमस्त्रं वशीकरणमिति । विभावनाख्योऽयमलङ्कारः ॥३०॥

१ 'अप्रयत्नोपार्जितम्' – अपा – मुशा २ विशेषम्–मुशा ३ चेतोविकारि–न.

उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥३२॥[1]

१ ३१–मुशा शा

उन्मीलितमित्यादि ॥ तस्या देव्याः [नवयौवनेन] प्रत्यग्रेण तारुण्येन [वपुः] शरीरं विभक्तं सेवितं[1] विभागीकृतं सत् चतुरस्रशोभि समन्ततो भद्रमभूत् । केनेवेत्याह[2] । तूलिकया सूक्ष्मरूच्या चित्रं यथैवोन्मीलितं प्रकटीकृतावयवं चतुरस्रं शोभते । पूर्वं हि तदविभक्ताङ्गमुल्लिख्यते । यथा च [सूर्यांशुभिः] रविरश्मिभिर्भिन्नं विकासितं[3] [अरविन्दम्] पद्मं सर्वरम्यं भवति । चतुरस्रं समन्ततः शोभते इति चतुरस्रशोभि ॥३२॥

१ 'सेवितम्'–नास्ति–मुशा शा २ किमित्याह–व न. भ. शा मुशा
२ कूचिकया–न ३. विकसितम्–भ.

तदेव रूपवर्णनद्वारेणाह—

अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥३३॥[1]

१. ३२–शा. मुशा.

अभ्युन्नतेत्यादि ॥ देवीनां तु रूपं पादाङ्गुष्ठात्प्रभृति वर्ण्यते, मानुषीणां केशेभ्य आरभ्येति कविसमयमाचरति[1] । तस्याः [चरणौ] पादौ निक्षेपणात् कमन्यासाद्धेतोरव्यवस्थां संचारिणीं [पृथिव्यां] भुवि [स्थलारविन्दश्रियम्] स्थलकमललक्ष्मीमाजह्रतुः उदपादयताम्[2], तत्सदृशशोभाजननात् । कीदृशौ तौ पादौ । अभ्युन्नतौ अग्रनतौ यावदङ्गुष्ठनखौ तयोः कान्तिभी रागमिवोद्गिरन्तौ लौहित्यमिव वमन्तौ[3] । पद्मं हि रक्तं भवति । चरणनखाश्च रक्ताः प्रशस्ता । उद्गिरादयः शब्दाः मुखादन्यत्रौपचारिकाः ॥३३॥

१ कविसमाचार–म शा मुशा २ आपादयताम्–मुशा ३ समर्पयन्तौ–न

सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविभ्रमेषु[1] ।
व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरशिञ्जितानि ॥३४॥[2]

१ ०विक्रमेषु–भ अ ना २ ३३–शा मुशा

सा राजहंसैरित्यादि ॥ [संनताङ्गी] स्तनभरा[1]भोगवशात्[2] संनतमङ्गं देहो[3] यस्या सा, बन्धुरगात्री [व्यनीयत] अशिष्यत[4], तद्वदेव गमनात् । किमिति ते यतो[5] गतिमनुशासयन्तीत्याह–प्रत्युपदेशलुब्धैः[6] निजविद्यादानेन परविद्याग्रहणं प्रत्युपदेशः, प्रति संमुखो योऽसौ उपदेशः[6] विद्यान्तरं तत्सकाशाद्जिघृक्षुभि । तदाह–[नूपुरशिञ्जितानि] मञ्जीररणितानि आदित्सुभिः ग्रहीतुकामैः । अतश्च विद्यया विद्येति हंसैरिव गमनेषु व्यनीयत । तदेतेन[7] तस्या[8] मञ्जीररणितं च राजहंसनिभमिति वाक्यार्थः । [लीलाञ्चितविभ्रमेषु] सहजस्तुत्य[9]विलासेषु[10] ॥३४॥

१ स्तनाभोग०–व शा मुशा. २ ०भागेन बहु०–भ ३ देहम्–व शा. मुशा ४. अशिक्ष्यत–व ल शा मुशा ५ ताम्–व ■ भ शा. मुशा, नास्ति–न ६ °६. 'निज ''उपदेश'–नास्ति–व न. ल भ, शा मुशा. ७ तेन–शा मुशा. ८ 'गमनम्'–अपा–व भ न, शा मुशा ९ ०अकृत्रिम०–व. न भ ल १० 'अञ्चे पूजायाम्' [पा० सू० ७–२–५३] इतीडागम । 'नाञ्चे पूजायाम्' [पा० सू० ६–४–३०] इति नलोपाभाव । मनोहारित्वमेवात्र पूजा, न तु गुणविषया चर्चा । गतेष्विति वैषयिकेऽधिकरणे सप्तमी । व्यनीयत इति कर्मणि ।' अपा–व न शा मुशा. 'मनो'''चर्चा'–नास्ति–शा मुशा

वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये।
शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥३५॥[1]

१ ३४-शा मुशा अ ना

वृत्तानुपूर्वे इत्यादि ॥ [विधातु[1]] वेधसो देव्या जङ्घे[1] लावण्यनिर्भरे निर्मितवतो जघनाद्यवयव सृष्ट्वावर्जनीये[2] सौन्दर्ये यत्नोऽभूत्। सर्वस्यैव तस्या[3] कुलत्वेन तयोर्निक्षेपत्वात्। कीदृशे। वृत्ते परिवर्तुले पूर्वमनुगते अनुपूर्वे गोपुच्छाकारे विशेषणसमास। न चातिदीर्घे[4] मध्यप्रमाणे। शुभे प्रशस्ते। आसेति कवीनां प्रमादजः[5] प्रयोगो[6] भूभावप्रसङ्गात्। यत्त्वन्ये ब्रुवते[7] तिङन्तप्रतिरूपको निपात इति तदसत्।[8]तादृशस्य तिङन्तस्याभावात्[8]॥३५॥

१ 'प्रसृते'-अपा -न ल व शा मुशा २. 'इव'-अपा -भ व ल, शा मुशा ३. लावण्यस्या०-शा मुशा. ४ 'अपि तु'-अपा -शा मुशा ५ प्रमादादयम्-व ६ 'अस्तेर्भूः' [पा० सू० २-४-५२] अपा -शा मुशा ७ ते तु ब्रुवते-न, ये च प्रचक्षते-ल ८...८ तादृशस्य तिङन्तस्यैव भवनात्-मुशा

नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः।
लब्ध्वापि लोकेपरिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥३६॥[1]

१. ३५ मुशा भ ना

नागेन्द्रेत्यादि ॥ [नागेन्द्रहस्ता] महेभकरा[1] [कदलीविशेषाः] कदल्यश्च[2] [उपमानबाह्या] असदृशाः [जाताः] सम्पन्नाः ॥ कदाचित्ते न वृत्ताः[3] स्युरित्याह-[परिणाहि रूप] परिमण्डलरूपसंस्थानं[4] [लब्ध्वापि]

१ हस्तिकरा-व शा मुशा २ 'वृक्षभेदा'-अपा -व शा मुशा ३ रम्या-व० ४ परिणाहि मडलमस्थानम्-न परिमडलसस्थानम्-व परिणाहि रूप परिमडल मस्थानम्-व, शा मुशा

प्राप्यापि । कथं तदूर्वौपम्यबहिर्भूतावित्याह–त्वचि [कर्कशत्वात्] कठोरत्वात् [एकान्तशैत्यात्] निरन्तरशैत्याच्च[5] । करिकरा हि त्वचि परुषा भवन्ति न तु कोमलाः[6] । कदल्योऽपि नियमेन शीतलाः । ऊरू तु सुकुमारौ तथा शीतकाले भवत उष्णौ उष्णकाले च शीतलौ । एवं वैलक्षण्यात्कथमौपम्यम्[7]—

> 'शीतकाले भवत्युष्णा उष्णकाले च शीतला ।
> वर्षाकाले च सामान्या रामाणामूरवः स्मृताः ॥'[8]

५. 'निरन्तरशैत्याच्च' नास्ति–शा. मुशा. ६. तौ तु कोमलौ–शा. मुशा. ७. 'एकान्तेन शैत्यमेकान्तशैत्यमिति बाहुलकात्समासः। परिणाहो विद्यते यस्य तत्परिणाहि ।' अपा.–व. ब. ल भ. न, शा. मुशा. ८. अयं श्लोको नास्ति–ब. ल. भ. न. शा. मुशा

एतावता नन्वनुमेयशोभि[1] काञ्चीगुणस्थानमनिन्दितायाः ।
आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ॥३७॥[2]

१. ०यकान्ति–शा. ०यशोभम्–मुशा. २. ३६–मुशा. अ. ना.

एतावतेत्यादि ॥ [काञ्चीगुणस्थानं] काञ्चीगुणो मेखलादाम तिष्ठति यत्र तत् काञ्चीगुणस्थानं श्रोणीबिम्बम् । [अनिन्दितायाः] प्रशस्तलक्षणाया[1] देव्या अप्रत्यक्षदृश्यत्वात्[1] एतावता एव अनुमेयशोभि[2] यत् पश्चात् उत्तरकाले शिवेनाङ्कमारोपितमुत्सङ्गे गृहीतम् । कदाचित्तस्योत्सङ्गो[2] बहुतरवधूभोग्यः स्यादित्याह–[अनन्यनारीकमनीयमङ्कम्] अन्यासां नारीणामकाम्यं देवस्योर्ध्वरेतस्त्वात् । एवं यदि तदुत्कृष्टं न स्यात्कथं भगवानाद्रियेत । अनिन्दिता प्रशस्ता । कुमारीरूपवर्णनकालेऽप्यङ्कमारोपितमिति कवेरेतदनुमानं[3] न विरुद्धं, कविकाव्यकाले विवाहस्य वृत्तत्वात् । एतदेव

पश्चाद्ग्रहणं कृतम्। एवमुत्तरत्र। चैत्यभुवनादिवद्गिरिशशब्दोऽपि भाषायां प्रयोगार्हः। यदि वा गिरिः कैलासो विद्यते यस्य स गिरिशः[६]। लोमादित्वाच्छः[५]। गिरि वा शयति इति गिरिश इत्यन्ये[५] ॥३७॥

५. व्र पा० सू० ५-२-१० ६ 'गिरि शेते इति विग्रह ।'-अपा -न०

तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः।
नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥३८॥[१]

१ ३७-मुद्रा अ ना

तस्या इत्यादि ॥ तस्या देव्या नवरोमावलिस्तनीयसी रेजे। नत गभीर नाभिविवर प्रविष्टा तत्रैव विच्छेद प्राप्ता। सा[१] कार्ण्यादुत्प्रेक्ष्यते-मेखला मध्यमणेः रत्नानानायकभूतस्य सितेतरस्य[२] इन्द्रनील[३]स्यार्चिः कान्तिरिव। नीवीमतिक्रम्योच्चयमुल्लंघ्योपरि प्रविष्टेति। नीवी हि मेखलाया ऊर्ध्वं क्रियते। यदि वा नीवीशब्देन नीव्या यद्ग्रथ्यते[४] तदधोवासो लक्ष्यते। तेनाम्बर भित्त्वाभ्यन्तरमर्चिरिव प्रविष्टा। एतच्च[५] कदा। यदा[५] वासस उपरि मेखला क्रियते। अर्चिशब्दः स्त्रीलिङ्गोऽपि। सितादितरः सितेतर इति 'पञ्चमी' [पा० सू० २-१-३७] योगविभागात्समास। शुक्लकृष्णयोर्विपक्षतया प्रसिद्धेः सितेतरादिभि कृष्णवर्ण एव प्रतीयते[६]।

१ वा च-दा मुद्रा २ सितेरस्य'-नास्ति-न व ल ३ नीलमणे-दा
४ उच्यते-व भ, बध्यते-न ५ ५ एतच्च .. .यदा-नास्ति व. भा, ल, दा मुद्रा ६ प्रतीत -व, प्रभा-व धा मुद्रा

मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला।
आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥३९॥[१]

१. ३८-धा. मुद्रा व ना

मध्येनेत्यादि ॥ वेदिरन्याहितानां त्रेताग्निस्थानं तद्वद् विलग्नं क्षामं[1] मध्यमुदरं यस्याः सा । बाला देवी मध्येन[2] रम्यं वलित्रयं त्रिवलीमुवाह । उत्प्रेक्षते । नवयौवनेन कामस्यारोहणाय[3] सोपानमिव प्रयुक्तमिति[4] । तारुण्ये हि मदनाविर्भावः ॥३९॥

१. 'क्षाम' नास्ति–भ २. 'मध्येन' नास्ति–भ. ३. ०रोहणार्थम्–भ. ब. ल.
४. एतदुचितम्–भ. न. ब. शा

अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु[1] तथा प्रवृद्धम्[2] ।
मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥४०॥[3]

१ पाण्ड–शा चा २ विवृद्धम्–शा. मुद्रा. ३. ३९–शा. मुद्रा. अ. ना.

अन्योन्यमित्यादि ॥ तस्याः कुवलयनयनायाः कुचयुग्मं गौरं तथा प्रकारेण[1] [प्रवृद्धम्] विवृद्धं[2] यथा तदन्तरे बिसतन्तोरप्यवकाशो दुर्लभः[3] । यतः परस्परमुत्पीडयत्[4] । श्याममुखस्य नीलचूचुकस्येति स्वरूपकथनम् ॥४०॥

१. तेन–अपा.–शा. मुद्रा. २. घनीभूतम्–अपा.–भ. न. ब ल.
३. ०न्तोरप्यन्तरमलभ्यम् दुष्प्राप॰–भ. न. ४. 'प्रेरयत्'–अपा–भ. ब.
'सपट्टयत्'–अपा.–ल

शिरीषमाला[1]धिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः[2] ।
पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥४१॥[3]

१. ०पुष्पा०–भ. चा. रा. अ. ना २. प्रतर्क–अ ना. ३ ४०–शा
मुद्रा. अ. ना.

शिरीषमालेत्यादि ॥ देव्या भुजौ शिरीषकुसुममालातोऽप्यधिकं[1] सुकुमाराविति[2] मे वितर्कः[3]। कथमित्याह-यद्दर्पेणापि मकरध्वजेन[4] शिवस्य तौ कण्ठपाशौ वशीकरणौ कृतौ। सुकुमार[5]प्रहरणः किल कामो मृदुनास्त्रेण तेन जगद् वशीकार्यम्। यदि च पुष्पेभ्योऽपि तद्बाहुयुग्मं मृदु न भवेत्, तत्सत्स्वपि शिरीषादिकुसुमेषु परामूतेनापि[6] तेन पूर्वं यो हरो न वशीकृतस्तं कथमधुना जयेत्। यदि वा सुकुमारस्वभावस्तत्राप्यशरीरः कथं स कठोरं वस्तु पाशीकुर्यादिति भावः। यत्र या विन्यस्य[7] स्याते यदिति हेतुपदं व्याख्यम्। यथा–'आरोपितं यद्गिरिशेन' [कुमार० १-३७] इत्यत्र ॥४१॥

१. मालातोऽप्यधिकम्–भ ल ब　　२ 'कोमलौ'–अपा–न. ल. ब.
३. 'ऊह.'–अपा शा. मुशा　　४. मीनकेतुना–भ. न. ब. ल.　　५. 'कुसुम' अपा. भ. ब ल　　६. अपराभूतेनापि–शा. मुशा　　७ अत्र यावित्यस्य–मुशा, ०विन्यस्य–शा

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।
अन्योन्यशोभाजननाद्‌बभूव साधारणो भूषणभूष्यभावः ॥४२॥[1]

१. ४१–शा. मुशा. ब. ना.

कण्ठस्येत्यादि ॥ देव्याः कण्ठस्य मुक्ताहारस्य च अन्योन्यशोभोत्पादनात्साधारणं भूषणभूष्यत्वमासीदिति स्वाभाविकशोभाकथनम्। यतो गलस्य स्तनाभ्यां बन्धुरस्य मनोज्ञस्यापरस्यापि निस्तलस्य वृत्तस्य। अविद्यमानं तलमस्येति कृत्वा। वाक्यार्थस्य[1] भूषणत्वे तात्पर्यात्प्रधानतया[2] भूषणशब्दस्य पूर्वनिपातः। एतच्च हेतुपदेनैवोक्तम् ॥४२॥

१. 'कृत्वा वाक्यार्थस्य'–नास्ति–ल.　　२. कृत्वा वाक्यार्थस्य भूषणत्वेनार्थापत्त्रिप्रधानतेति–ब भूषणत्वे तात्पर्यप्रधानतेति–ल.

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥४३॥[1]

१. ४२-शा. मुद्रा अ ना.

चन्द्रं गतेत्यादि ॥ गौर्या मुखं शशिकमलनिभमित्येतदेव यस्तु भङ्ग्यन्तरेणाह-श्रीरिन्दौ स्थिता कमलकान्ति नोपभुंक्ते । निशि तस्य संकुचितत्वात् । पद्ममपि[1] याता चान्द्र[2]मसीमभिख्यां[3] नानुभवति । दिवा शशिनो विच्छायत्वात् । देव्यास्तु सा वक्त्रमासाद्योभयाधिष्ठानं सौख्यं[4] लेभे । तन्मुखस्योभयसादृश्यात् । यतो लोला लंपटा उभयगुणार्थिनी ॥४३॥

१. अब्जम्-च ल २ चान्द्रीम्-भ ल ३ शोभाम्-भ ब ल.
४. सौभाग्यम्-भ. ब.

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठ[1]पर्यस्तरुचः स्मितस्य ॥४४॥[2]

१ ०स्ताम्रोष्ठ०-स २. ४३-शा मुद्रा अ ना

पुष्पमिति ॥ पुष्पमौक्तिके यदीदृशे[1]स्यातां ततो देव्या विमल[2]पिम्बाधरगतं हसितमनुकुर्यताम्[3] । कीदृशं पुष्पं प्रवालोपहितं किसलयार्पितं[4] तन्मध्यगतम्[4] । मुक्ताफलमपि विमल[5]विद्रुमगतम् । एवं हि शौक्ल्यस्य लौहित्यस्य च व्यतिकरादनुकारः पूर्णो भवेदित्यनुमानप्रतिपादनायोत्पाद्योपमानोपमेयम् । ताम्रे ओष्ठे पर्यस्ता पतिता[6] रुक्कान्तिर्यस्य तस्य ताम्रौष्ठपर्यस्तरुचः । स्मितस्येति संबंधविवक्षया षष्ठी । 'न मापाणामश्नीयात्' इतिवत् । पुष्पशब्दोऽत्र सिते वर्तते ॥४४॥

१ ईदृशे-मुद्रा ब ल २ विमलम्-न ब ब मुद्रा ३ ०र्युर्यात-
प ल भ ४...४ निमलयमध्यस्थम्-मुद्रा ५ निर्म०-न ब ल
प मुद्रा ६ 'पतिता'-नास्ति-मुद्रा

स्वरेण तस्याममृतस्रुतेव [1]प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥४५॥[2]

१. सजल्पि०-अ ना  २. ४४-शा मुद्रा. अ. ना.

स्वरेणेत्यादि ॥ तस्यां पार्वत्यामभिजातवाचि कोमलगिरि स्वरेण प्रजल्पितायां[1] वक्तुं प्रवृत्तायां[2] सत्यां श्रोतुरन्यपुष्टापि कोकिलापि प्रतिकूलशब्दोद्वेगकारिणी भवति । विस्वरा तन्त्रीरिव वाद्यमाना[3] । तदीयां मृद्वीं वाचं य आकर्णयति तस्य कोकिलाऽपि वितन्त्रीवत्कर्णासुख[4]कारिणीत्यर्थः । स्थानचलिता हि तन्त्रीरतितरा[5]मुद्वेगजननी । कीदृशेन स्वरेण । अमृतं स्रवतीत्यमृतस्रुत् तेन इव, माधुर्यामृतं स्रवतेव । स्वरोऽत्र शब्दमात्रम् । [6]विशेषणयोगार्थं च तदुपादानम्[6] । शिशूनां कोकिलानां काकपोषितत्वादन्यपुष्टेति यथार्थं नामेति शुद्धजात्यभावात्[7] । तन्त्रीरिति 'अवितृस्तृतन्त्रिभ्यः ईः' [ उ० सू० ४३८ ] । विस्वरा चासौ तन्त्री वितन्त्रीः ॥४५॥

१ 'जल्पितुम्'-अपा का  २ प्रस्तुतायाम्-भ न ब प्रवर्तितायाम्-ल  ३ ताड्यमाना-भ न ब ल  ४. वितन्त्रीरिव न सुख०-म. वितन्त्रीवत् न सुख०-म.  ५ नितराम्—न. ब. ल. न ब ल  ६...६ विशेषणोपमार्थत्वात्तदुपादानम्-भ ब विशेषणयोगाय तदुपादानम्-ल  ७ शुद्धजातेश्चाभावात्-भ न, 'कोपभाव:'-अपा -मुद्रा.

प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या ।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥४६॥[1]

१ ४५—मुद्रा शा. अ ना.

प्रवातेत्यादि ॥ अधीरं कातरं यद्विप्रेक्षितं वीक्षणं तन्न जानीमः । किं तया पार्वत्या[1] मृगीणां सकाशादात्तं किं वा तस्याः सकाशान्मृगीभिरिति[2] । सादृश्यान्न निश्चयः । यतः[3] प्रवाते प्रकृष्टे वाते यन्नीलोत्पलं तेन निर्विशेषमभिन्नम् । नु वितर्के ।

१ सुदृशा—न ब सुनयनया—ल.  २ हरिणीभि.—न ब ल  ३ 'उभयमपि' —अपा —न ब. ल

तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरानतलेखयोर्या ।
तां वीक्ष्य लीलाचिकुरा[1]मनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥४७॥[2]

१. ०रायतलेखयो०–अ. स. ०रानतरेखयो०–ज ना.　　२ ०चतुरा०–अ. ना. म. चा.　　३. ४६–शा मुशा अ. ना.

तस्या इत्यादि ॥ तस्या देव्या आनतलेखयो[1]र्भ्रुवोर्या कान्तिः शोभा तामालोक्य[2]कामो निजे कार्मुकरामणीयकमदं दर्पमत्याक्षी[2]दित्युपमानवैगुण्यकथनमुपमेयस्य[3] शोभातिशयोक्तिः । शलाका तूलिका तया यदञ्जनं कज्जलं तेन निर्मितेव लिखितेवेति तत्तुल्यकार्ष्ण्यत्वोक्तिः[4] । लीलया विलासेन चिकुरां[5] सुन्दराम् । चिकुरामित्यप्रसिद्धादार्षः पाठः[5] ॥४६॥

१ कुटिलयो–न व ल आनतया चतुराकारा०–चा.　　२...२ कामोऽपि स्वकार्मुकरामणीयकगर्वम्–व.　　०रामणीयत्वगर्वम्–ल　　३ अर्पणेन–व. ४. ०काष्र्ण्योक्तिः – शा. मुशा　　५. चतुराम्–म. न व ल ५. चतुरामित्यनार्षः पाठ.–व. न., चतुरामित्यन्यार्थ पाठः–ल, ०प्रसिद्धत्वादार्षः पाठ'–शा. मुशा

लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः ।
तं[1] केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथिलं चमर्यः ॥४८॥[2]

१ तत्–अ ना.　　२ ४७–शा मुशा, अ ना

लज्जेत्यादि । पशूनां मनसि लज्जा त्रपा यदि अभविष्यत् [ असंशयम् ] निश्चितं [ पर्वतराजपुत्र्याः ] पार्वत्यास्तं केशपाशं शिरोरुहकार्ष्ण्यशोभा[1]मालोक्य चमर्यः [ वालप्रियत्वम् ] प्रियपुच्छत्वं शिथिलमेवाकरिष्यन् । ता हि चमर्यो चीरुद्रुहनलग्नलाङ्गूलवाल[2]विच्छेदकातरा

१. शिरोरुहकलापम्–म. न व ल.　　२ 'वाल'–नास्ति–शा मुशा.

व्याधसायकप्रहारमङ्गीकुर्वते[3], न तु वालभङ्गम् । यदा[4] तु स्वगुणपराजयेऽपि तिर्यञ्चो न लज्जन्ते तदा देवीकेशपाशदर्शनेऽपि[4] । तासां वालानि प्रियाणि[5] ॥४८॥

३. प्रहारानूरीकुर्वते–म व, 'नाशकरम्'–अपा –मुशा. ४...४ 'यदा...नेऽपि' –नास्ति –शा मुशा. ५ 'अत्र क्रियातिपत्त्या 'भूते च' [पा० सू० ३–३–१४०] इति लङभावश्चिन्त्यः । तमिति सर्वनाम केशपाशस्य रम्यत्वेन प्रसिद्धिमाह । केशपाशशब्दः प्रशंसायाम्'–अपा –मुशा, यदा यस्या चेतस्याप[त ?]न विषय । पुत्रीति शार्ङ्गरवादिषु पुत्रशब्दात् ङीन् । . ...प्रथमा-वचनादिति [द्र पा० सू० १–१–६] मयूरव्यंसकत्वात्समास । वालप्रिय इति 'वा प्रियस्य' [द्र महा० भा० २–२–३५] इति पूर्वं[पर ?]निपात । –शा मुशापाठी

विभागतो[1]ऽवयवान् वर्णयित्वे[2]दानीं निकुरम्बी[3]कृत्याह—

सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।
सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥४९॥[4]

१. विभागेन–भ. व. विभागशो०–मुशा. २ निर्वर्ण्य–मुशा. ३ निकुरुम्बी०–न मुशा., निकुरकृत्य–भ ४ ४८ शा मुशा. अ. ना.

सर्वोपमेत्यादि ॥ किं बहुना सर्वेषामुपमाद्रव्याणां शशि[1]कमलकुवलय-रम्भादीनां समुच्चयेन सङ्घट्टेन[2] सा देवी [प्रयत्नात्] प्रयत्नेन[3] [विश्वसृजा] विधात्रा [निर्मिता] निर्ममे[4] । तेन च यथाप्रदेशं[5] विनिवेशितेन निहितेन, शशिशोभा[6] हि मुख एव रचिता । कुवलयकान्तिर्नेत्रयोः

१ ०कला०–भ व २. सघटमानेन–न सघट्टनेन–ल सघटनेन–मुशा. ३ प्रवीणेन–मुशा ४. विनिमिता–मुशा ५ 'यथानुरूपम्'–अपा –व. न भ व मुशा ६. शशिकमलशोभा–न मुशा. ल शशिप्रभा–भ व.

कदली[7] चोर्वोरित्यादि । उत्प्रेक्षते । एकस्थसौन्दर्यदिदृक्षयेव [सर्वोपमाद्रव्यसमुच्चयेन] उपमानवस्तुसमुच्चयेन निर्मिता । विप्रकीर्णमेतद् भतितरां[8] रम्यमेकस्थं पश्यामि कीदृशमेतदिति[9] । उपमीयतेऽनयेत्युपमा । स चासौ द्रव्यं चेति द्रव्यसमुच्चयश्च । प्रदेशस्यानतिक्रमेण[10] यथाप्रदेशम् ॥४९॥

७ कदलीचारुता–शा मुशा ८ विप्रकीर्णं तावदतितराम्–व भ, विप्रकीर्णं तावत्0–न, विप्रकीर्णमेतन्नात्यन्तरम्यम्–व, द्रव्याणां समुच्चय तावद्विप्रकीर्णम्–मुशा ९ 'अतो युक्तैव विधिनोत्पादितेत्यर्थ'–अपा–मुशा १० यो य प्रदेश–व ल मुशा

तां नारदः कामचरः कदाचित्कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥५०॥

१ ४९–शा मुशा भ ना

तां नारद इत्यादि ॥ ततः कदाचिद् एवं निरूपितां[1] [कन्यां] कुमारीं [पितुः समीपे] जनकाभ्याशे [प्रेक्ष्य] विलोक्य एव [कामचरः] स्वेच्छाचारी [नारदः] नारदो मुनिः हरस्य एकवधूं भवित्रीं सपत्नीरहितां[2] भार्यां भाविनीं समादिदेश उक्तवान् । प्रेम्णा प्रीतिवशात् शरीरार्धहराम् अर्धदेहमाक्रम्य स्थिताम् । किल इत्यागमसूचनार्थः । तथा चोक्तं मुनिना[3] –

'एषा भार्या जगद्भर्तुर्वृषाङ्कस्य[4] महीधर[5] ।
शरीरार्धहरा देवी[6] भविष्यति[7] न संशयः ॥

इति मत्स्यपुराणे[8] [?]। कामेन स्वेच्छया चरतीति[9] कामचरः[10] ॥५०॥

१ 0रूपा ताम्–व. न ल शा मुशा २ असपत्नीकाम्–भ न व. शा मुशा, असपत्नीम–ल ३ 'मुनिना'–नास्ति–मुशा ४ शङ्करस्य–मुशा ५ महेश्वरी–शा–नास्ति–मुशा ६ 'देवी'–नास्ति–मुशा. ७ भवत्यथ –शा ८. 'इति मत्स्यपुराणे'–नास्ति–शा मुशा ९ चरत्यटतीति–शा मुशा १० भविष्यतीति भवित्री । शरीरार्धशब्द समप्रविभागविवक्षाया षष्ठीसमास '–अपा–शा. मुशा

गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ[1] निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥५१॥[2]

१ तथा–चा म  २ ५०–शा. मुद्रा अ. ना

गुरुः प्रगल्भ इत्यादि ॥ यतो नारदेनादिष्टः[1] अतः कारणाद् गुरुः पिता अस्याः [वयसि] तारुण्ये अपि निवृत्तान्यवराभिलाषः तस्थौ । निवृत्तोऽन्यस्मिन्वरे भर्तर्यभिलाषो यस्य सः[2] । भवादन्यं[3] वरं मनसापि नाचकम इत्यर्थः[4] । युक्तं चैतत् । यतः कृशानोः ऋते अग्निवर्जं[5] मन्त्रपूतं[6] पवित्रं हव्यं आहुतिः । [अपराणि] अर्कादि[7]न्यानि तेजांसि नार्हन्ति । हूयते इति हव्यम् । कृशानोर्ऋतेयोगे[8] पञ्चमी ॥५१॥

१. नारद एवमादिष्टवान्–च न ब शा मुद्रा, आदिशत्–ल.  २ 'एवंविध आसीत्'–अपा –भ न ल व, शा. मुद्रा  ३ हरादन्यम्–शा. मुद्रा  ४. 'भवात्.... इत्यर्थ'–नास्ति–न इति वाक्यार्थं –ल  ५. वह्निं विना–व मुद्रा.  ६. मन्त्रेण पूतम्–मुद्रा  ७. 'अर्कादि'–नास्ति–शा. मुद्रा.  ८. ऋतेशब्दप्रयोगे–मुद्रा.

यद्येवं तर्हि प्राप्तवरसमयाऽपि सा अन्यस्मै वराय न दीयते, हराय कथं न दीयत इत्याशङ्क्याह[1] ।

अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्य[2]मिष्टेऽप्यवलम्बतेऽर्थे ॥५२॥[3]

१ 'यद्येवं...याह'–नास्ति–च यदि तर्हि असौ अन्यस्मिन्न दीयते तदा भवाय कथं न दीयत इत्याह–भ, यदि .....दीयते तदा आहूय दानं हराय कथं न क्रियते इत्याह–न, तर्हि स्वयमेव तातः स क(स्मात् वा)हराय न ददावित्याह –मुद्रा शा मुद्रा.  २ माध्यस्थ्य–मू म.  ३. ५१–अ. ना शा. मुद्रा.

अयाचितारमित्यादि ॥ देवदेवं महेश्वरं [अयाचितारम्] अप्रार्थयमानं सन्तं [अद्रिः] हिमवान् [सुतां] दुहितरं ग्राहयितुं [न शशाक] नाशकत्[1] ।
१ 'नाशकत्'–नास्ति–शा. मुद्रा.

यावत्तेनाऽसावाग्रहान्नार्थिता[1] तावन्न ददाविति तात्पर्यार्थः[2]। यस्मान्मनसि [इष्टे] अभिमते अपि [अर्थे] वस्तुनि[3] माध्यस्थ्यम् औदासीन्यं अवलम्बते[4]। कुतः [अभ्यर्थनाभङ्गभयेन] प्रार्थनाभङ्गभयेन[5]। कदाचित्तामपि न नारीं स्वीकुर्यादिति भयेन। हि शब्दो हेत्वर्थे[6] ॥५२॥

२...२ यावद्भगवता सा नाभ्यर्थिता तावत् तस्मै गिरिस्ता न ददावित्यर्थः।—शा. मुद्रा ३ प्राप्तेऽपि'-अपा—व. ४. श्रयति—अ म व ल. शा. मुद्रा ५ ०भावेन—शा मुद्रा ६ हि शब्दोऽत्र उत्तरार्धे हेत्वर्थ।—अ भ व ल, नास्ति-शा. मुद्रा 'गत्यर्थानां तथैव च' [म भा १-४-५१] इति चकाराद्ग्रहिप्रभृतियोगेऽपि द्विकर्मकता। यथा—अजिग्रहत् त जनको धनुस्तत्' [भट्टिकाव्य-२-४२] (इति—शा) 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' [किरात० ५-३०] (इति—शा) मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या' [मे० ९३] (इति—शा) 'त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यम्' [मे० ९१] (इति—शा) गर्गाः शतं (च तम्—शा) दण्ड्यन्ताम्, [म० भा० १-१-१] इति—'अपा—मुद्रा 'भाष्यकारप्रयोगादसत्त्वेन निर्गतत्वात्कर्मसंज्ञा। यदि वा नोपादानमात्रं ग्रहेरर्थेऽपि तद्ज्ञानविषयोपादानं ग्राहयितुमित्यर्थः। एवञ्जातीयकाश्च बुद्ध्यर्थाः भवन्ति।' —अपा-शा

इदानीमीश्वरस्य व्यापारं[1] वर्णयितुमाह[2]—

यदैव पूर्वे[3] जनने[4] शरीरं सा दक्षरोपात्स्वयमु[5]त्ससर्ज।
तदाप्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥५३॥[6]

१ व्यापारान्—अ २. विवर्णयिपुराह—व ल शा. मुद्रा ३ पूर्वा० —शा. पूर्वम् स ४ ज्वलने—स ५ मुदती—म चा अ ना. ६ ५२—शा मुद्रा अ ना

यदैव पूर्वं इत्यादि ॥ [यदा एव] यस्मिन्नेव काले [पूर्वे जनने] पूर्वस्मिञ्जननेऽन्यजन्मनि [सा] देवी [दक्षरोपात्] पितृकोपात् स्वयं

[शरीर] देहम् [उत्ससर्ज] अत्याक्षीत् [तदाप्रभृत्येव] तत एवारभ्य [विमुक्तसङ्गः] परिहृतविषयत्वात् [पशूनां पतिः] भूतनाथः अपरिग्रहः अभूत् त्यक्तदार[1] आसीत्[2]। प्रेमवशाद्‌ब्रह्मचर्यं चचारेत्यर्थः[3]। तदेति पञ्चम्यर्थे[4] प्रभृतिशब्द आरभ्यार्थे निपातः[4]। सजन्ति[5] [द्र॰ धा॰ पा॰ ९८७] संश्लिष्यन्ति आत्मानं तेष्विति सङ्गा विषयाः। परिगृह्यन्ते इन्द्रियार्था अनेनेति परिग्रहो दाराः[6] ॥५३॥

१ अकृतदार–व ब भ—शा मुद्रा अस्कलन–ल  २ बभूव–भ व
३ चचार०–शा  ४ ४ तदेति पञ्चम्यर्थवृत्तिनिपात–शा मुद्रा
५ सञ्जन्ति–शा मुद्रा  ६ परिगृह्यत इति परिग्रहो दारा–व न ल
भ व शा मुद्रा

स कृत्तिवासा तपसे यतात्मा गङ्गाप्रवाहो[1]क्षित[2]देवदारु।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किञ्चित्क्वण[3]त्किन्नरमध्युवास ॥५४॥[4]

१ ०प्रवाहो०–म स  २ ०तोत्थित०–अ ना  ३ गुणत-स
४ ५३—शा मुद्रा अ ना

स कृत्तिवासेत्यादि॥ [कृत्तिवासाः] कृत्तिर्गजाजिनं वासोऽम्बरं यस्य स भगवान्। यतात्मा यतेन्द्रियः[1] [तपसे] तपोऽर्थं[2] हिमाद्रेः प्रस्थमध्युवास[3] भेजे। कीदृशम्। [गङ्गाप्रपातोक्षितदेवदारु] गङ्गायाः प्रपातेन निर्झराम्भसा उक्षिताः सिक्ताः[4] देवदारवो यत्र। तथा [मृगनाभिगन्धि] मृगाणां कस्तुरिकाकुरङ्गाणां नाभिगन्धो विद्यते यस्य[5]। [किञ्चित्क्वणत्किन्नरं] किञ्चित्[6] क्वणन्तो गायन्तः किन्नरा यत्र इति विशेषणं प्रस्थस्य[7] चास्यैं सेव्यत्वकथनम्। प्रस्थशब्दः पुंनपुंसकयोः ॥५४॥

१ यतनात्मा–न, जितेन्द्रिय सन्–म व ल  २. यतेन्द्रियस्तपार्थं
–शा मुद्रा  ३ प्रस्थ सानुमध्युवास–शा मुद्रा  ४ सिक्ता–व
न व ल शा मुद्रा  ५ यत्र–शा मुद्रा 'मृगनाभि हि कस्तूरिका'
–अपा शा  ६ ननुच्चैं–शा मुद्रा  ७ 'विशेषण प्रस्थस्य'
नास्ति–शा मुद्रा

गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्वसानाः[1] ।
मनःशिलाविच्छुरिता निषेदुः शैलेयनद्धेषु[2] शिलातलेषु ॥५५॥[3]

१. दधाना–म स   २. ०नध्वेषु–अ ना   ३. ५४–शा. मुशा. अ. ना.

गणा नमेरु इत्यादि ॥ गणाः नन्दिचन्द्रिप्रमुखाः[1] पार्षदाः । शिलातलेषु उपलपट्टेषु[2] निषेदुः उपविविशुः । शैलयनद्धेषु शिलाबद्धेषु । यत्र भगवान् तत्र तैर्भाव्यम् । कीदृशाः [नमेरुप्रसवावतंसाः] नमेर्वाख्या[3] वृक्षा वीरुधो वा तेषां प्रसवेन पुष्पफलेनावतंसाः शेखरो[4] येषाम् । तथा स्पर्शवतीः सुकोमला भुर्जत्वचः वसानाः परिदधानाः[5] [मनःशिलाविच्छुरिताः] मनः शिलया धातुविशेषेण विच्छुरिता अनुलिप्ताः । कीदृशेषु । [शैलेयनद्धेषु] शैलेयैः[6] शिलाकुसुमैर्नद्धेषु छन्नेषु, शिलैव शिलापट्ट[7] इति योगविभागात् 'नहो धः' [पा० सू० ८-२-३४] नद्धशब्दस्य[8] । ५५ ॥

१. 'नन्दि''' प्रमुखा '–नास्ति–शा मुशा   २ ०पट्टके–शा व ल   ३ 'तरवो'–अपा –ब भ ल शा.   ४. अवतंसः शेखरः–मुशा   ५. परिदधतः–शा मुशा. भ. ल. म   ६ 'शिलाया भव शैलेयम्'–अपा –शा ब. भ ल.   ७ शैलेयम्–शा. मुशा.   ८. 'योग'''शब्दस्य'–नास्ति शा. मुशा', वन्तीर्ऽपि 'शिलाया प्रकृते' [पा सू ५-३-१०२] इति योगविभागाडठञ् ।' –अपा –मुशा.

तुषारसंघातशिलाः खुराग्रैः समुल्लिखन् दर्पकलः ककुद्मान् ।
दृष्टः कथंचिद् गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥५६॥

तुषारसंघातेत्यादि ॥ ककुद्मान् हरवृषभः उच्चनाद जगर्ज, तत्राद्र[1] । कीदृशः । [तुषारसंघातशिलाः] हिमानीः खुराग्रैः[2] [समुल्लिखन्] दारयन्, यतो[3] दर्पकलः मदमधुरः । अतश्च असोढसिंहध्वनिः केसरिनादमप्यसहमानः ।

१. 'तत्राद्र'–नास्ति–शा. मुशा.   २. शफाग्रैः–शा मुशा.   ३. 'यतो.' नास्ति–शा. मुशा.

अत एव [गवयैः] गवयाख्यैः प्राणिभिः विविग्नैः वित्रस्तैः[४] कथंचिद् दूराद् [दृष्टः] ईक्षितः । उक्तं च[५]–

'कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदा ।
वदन्त्यारण्यिको वाक्यं यथा गौर्गवयस्तथा ॥'[५]

ककुद् विद्यते यस्य स ककुद्मान्[६] । ५७ ॥

४ खिन्नैः–शा ५ श्लो० वा० १–१–५ उप० १ ५ 'उक्त तथा'–नास्ति–शा मुशा ६ 'यवादित्वाद्वत्वाभावः । दान्तोऽयं न तु तान्तः । विविग्न इति ओविजे [धा० पा० १०९४]'–अपा–न मुशा

तत्राग्निमाधाय समित्समिद्धं स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।
स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार ॥५७॥[१]

१ ५६–शा मुशा अ ना

तत्राग्निमित्यादि ॥ तत्र हिमवतः[१] सानौ भगवान् [अग्निम् आधाय] अग्न्याधानं कृत्वा केनापि कामेन अविज्ञातेच्छया[२] तपः चचार अतपस्यत्[३] । अज्ञानस्य कारणमाह–तपसः फलानां स्वर्गापवर्गादीनां स्वयं विधाता कर्ता, सर्वेश्वरत्वात्[४] । कीदृशं वह्निम्[५] । [समित्समिद्धं] समिद्भिः समिद्धं दीप्तम् । स्वमेव मूर्त्यन्तरम् आत्मीयमेव तनुविशेषम् । यतः अष्टमूर्तिः । क्षितिजलपवनहुताशनयजमानाकाशसोमसूर्याख्या 'शम्भोरष्टतनवः'[६] । अन्या मूर्तिः मूर्त्यन्तरमिति सुप्सुपेति समासः । ५८ ॥

१ हिमवतः–शा मुशा २ कयाप्यज्ञातेच्छया–शा मुशा ३ 'अतपस्यत्'–नास्ति–शा मुशा, चकार–अ न रु ४ ईश्वरत्वात्–शा मुशा ५ अग्निम्–शा मुशा ६ ६ ०मूर्या हि शम्भोरष्टौ मूर्तयः–शा मुशा

अनर्घ्यमर्घ्येण तमद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां[१] समादिदेश प्रयतां तनूजाम् ॥५८॥[२]

१ ०समेताम्–अ ना २ ५७–शा मुशा अ ना

अनर्घ्यमिति ॥ ततोऽद्रिस्त[1] निजसानुनि तपस्यन्तमीशं ज्ञात्वा नारदवचनं स्मरन्[2]तम् अर्घ्येण [अर्चयित्वा] अभ्यर्च्य[3]तत् [आराधनाय] सेवार्थं [सखीसमेतां] वयस्यासहितां [प्रयतां] सनियमां तनूजां सुतां समादिदेशाज्ञापितवान् । कीदृशं तम् । अनर्घ्यम् अपरिच्छेद्यमज्ञेयत्वात् स्वर्गौकसाम् नाकिनाम्[4] [अर्चितम्] पूज्यम् । 'क्तस्य च वर्तमाने' (पा०सू०२-३-६७) इति षष्ठी । अर्घार्थमुदकादिकमर्घ्यम्, 'पादार्घाभ्यां च' [पा० सू० ५-४-२५] इति यत्[5] ॥ ५८ ॥

१. 'अद्रि.'—नास्ति—शा. मुशा. २. अनुस्मरन्—शा मुशा ३. अर्चापूर्वम्—शा. मुशा. व. भ. ल. ४ देवानाम—शा मुशा. ५. 'ओको गृहम् । तनुशब्द ऊकारान्तोऽपि ।' —अपा.—मुशा, तनूशब्दः ऊकारान्तेऽपि । आपः क्षीरमित्यादि—शा

प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां गिरिशोऽनुमेने ।
विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥ ५९ ॥[1]

१ ५८—शा. मुशा अ ना

प्रत्यर्थिभूतामिति ॥ तां देवीं शुश्रूषमाणां सेवमानां सतीं [गिरिशः] भगवान् अनुमेने अङ्गीचकार । अनुमतं प्राप्तम्[1] । यतः समाधेः नियमस्य प्रत्यर्थिभूतां स्त्रीत्वात् प्रतिपक्षरूपाम् । यदि वा भूतशब्द उपमानवचनः विपक्षसदृशीमित्यर्थः[2] । कथं तर्ह्यङ्गीचकार[3] त्याह-यस्माद् विकारहेतौ सति अपि येषां चेतांसि न विक्रियन्ते विकारं न भजन्ते[4] ते एव धीराः सत्त्ववन्तः । शुश्रूषा सेवा । श्रोतुमिच्छेति परं व्युत्पत्तिमात्रमिदं सेवायामपि[5] श्रवणं विद्यते[6] । सेवकोऽपि शृणोति न त्ववहेलयति । 'ज्ञाश्रुस्मृदृशां सनः' (पा० सू० १-३-५७) इति आत्मनेपदम् । विक्रियन्ते कर्तृकर्मणि प्रयोगः[7] । ५९ ॥

१. अनुमनन च प्राप्तम्—शा. मुशा. २. शत्रुसमामित्यर्थ—शा. ३. अनुमेने—मुशा. ४. नीयन्ते—शा. मुशा. ५. वा—शा मुशा. ६. ग्रहणं विद्यत इत्यर्थ.—शा. मुशा. ७ 'कर्मकर्तरि तु 'वेः शब्दकर्मण.' [पा० सू० १-३-३४] 'अकर्मकाच्च' [पा० सू० १-३-३५] इत्यात्मनेपदाकर्मकत्वात् 'णिश्रन्थिग्रन्थि' [द्र. म० भा० ३-१-८९] इति यङ्निषेधः स्यात् ।' —अपा. —शा. मुशा. ।

अवचितबलिपुष्पा वेदिसंमार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ ६० ॥[१]

१ ५९-शा मुशा अ ना

अवचितबलिपुष्पेति ॥ सा सुकेशी देवी अनुज्ञाता सती प्रत्यहं अनुदिनं गिरिशमुपचचार असेवत[१]। तामेव सेवामाह-[अवचितबलिपुष्पा] अवचितानि त्रुटितानि[२] बल्यर्थं[३] पुष्पाणि[४] यया[५]। [वेदिसंमार्गदक्षा] वेदेः संमार्गे नमग्निकुण्डसंमार्जने दक्षाऽतिचतुरा[६]। [नियमविधिजलानां] नियमविधये बर्हिषां च[७] उपनेत्री ढौकयित्री[८]। 'ननु सा सुकुमाराङ्गी कथं सततमेतत्कारणान्नो खिद्यतीत्याह'[९]—[तच्छिरश्चन्द्रपादैः] हरमौलिमृगाङ्कमयूखैः [नियमितपरिखेदा] नियमितोऽपास्तः परिखेदः श्रमो यस्या, इति भगवत्प्रसाददर्शनसूचकं विशेषणम्[१०]। सम्मार्जनं संमार्गः। घञ्। 'मृजेर्वृद्धिः' [पा० सू० ७-२-११४]। गत्वम्[११]। उपनयतीति उपनेत्री। अहनि अहनि प्रत्यहम्। यथार्थेऽव्ययीभावः[१२]। सुकेशी 'स्वाङ्गाच्चोपसर्जनाद्-' [पा० सू० ४-१-५४] इति ङीप्। मालिनीवृत्तम् ॥६०॥

१ सिषेवे-शा मुशा न ल २ उच्चितानि-शा उच्चितानि-मुशा ३. पूजार्थम्'-अपा-शा मुशा. ४ 'कुसुमानि'-अपा-शा ५ सा-अपा-शा मुशा ६ ०चतुरा-मुशा ७ 'दर्भाणाम्' अपा-शा मुशा ८ ढौकिनी -शा मुशा ९-९ 'ननु आह'-नास्ति-शा मुशा १० ०दर्शनफलम-शा. मुशा ११ 'चजो कु' [पा० सू० ७-३-५२] इति कुत्वम्।-मुशा १२ 'अनश्च' [पा० सू० ५-४-१०८]'नपुंसकादन्यतरस्याम' [पा० सू० ५-४-१०९] इति टच्, टिलोप।' -अपा-शा मुशा

इत्यानन्ददेवात्मजवल्लभविरचितायां कुमारसम्भवटीकायां प्रथमः सर्गः[१]।

१ इति श्रीकुमारसम्भवे प्रथमः सर्गः। -च इति कुमारसम्भवे महाकाव्ये कविश्रीकालिदासविरचिते पञ्जिकायामानन्ददेवायनिवल्लभकृतौ सुबोधदुर्बोधे टीकाया प्रथम सर्ग —म ..पञ्जिकायाम्—नास्ति—च. आनन्ददेवायनिवल्लभविरचिताया कुमारसभवलघुटीकाया उद्धृतसाराया ..—ल. इति कुमारसम्भवे महाकाव्ये आनन्ददेवाय[नि] वल्लभविरचिताया कुमारसवटीकायामुमोत्पत्तिर्नाम प्रथमः सर्ग —न इत्यानन्ददेवात्मजवल्लभदेवकृताया कुमारसभवटीकाया प्रथम सर्ग। —शा इत्यानन्ददेवात्मजवल्लभदेवविरचिताया कुमारसभवटीकायां प्रथम सर्ग। —मुशा

॥ श्रीः ॥

आनन्ददेवायनिवल्लभविरचितायां कुमारसंभवपञ्जिकायां

# द्वितीयः सर्गः

तस्मिन्विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायंभुवं ययुः ॥ १ ॥

तस्मिन्नित्यादि ॥[1] यदा गिरिजा गिरिशं उपचचार[2] तस्मिन् एव [काले] अवसरे तारकेण वज्रांग[3]तनयेनासुरेण विप्रकृताः उपद्रुताः सन्तः दिवौकसः देवाः तुरासाहं इन्द्रं पुरोधाय अग्रेकृत्य स्वायंभुवं धाम ब्रह्मलोकं[4]ययुः जग्मुः । दिवशब्दोऽकारान्तोऽपि यथा–'दिशो बाहू दिवं शिरः ।'[5] [म०भा० ६-६१-५४] स्वयंभूर्ब्रह्मा तस्येदं स्वायम्भुवम् । संज्ञापूर्वको विधिरनित्यः[6] [द्र. काशिका ६-४-१५६] इति गुणाभावः । सर्गेऽस्मिन् पथ्यावक्त्रादिकं[7] वृत्तम् ॥१॥

१. तस्मिन् काले गिरौ पार्वती महेश्वर अवासरत्–म. २. समध्यवसत् –भ म., अवरिवस्यत्–शा. मुशा. ३. वज्राङ्ग०––म. न. ४. ब्रह्मसदनम् –म. ५. तस्यास्पदम्–ल. ६ वेन्यादिवत् मायायामपि सुरापाद्शब्द.–०पाद्छब्द० अपा –शा मुशा. 'इति' और्गुण' [पा० सू० ६-४-१४६] इति ।' –अपा–शा. मुशा ७ ७ अनुष्टभो–मुशा. ।

तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥

तेषामित्यादि ॥ तारकविप्रकारात्[1] [परिम्लानमुखश्रियाम्] नष्टवक्त्रकान्तीनां तेषां देवानां ब्रह्मा विरञ्चिः आविरभूत् प्रत्यक्षीभूतो[2] न

१. विप्रकृतत्वात्–शा. २. प्रकटीबभूव–म.

तु तद्दर्शने विघ्नमुदपादि[३] । [इव] यथा [सुप्तपद्मानां] सङ्कुचितारविन्दाना [सरसां] तोयाशयानां [ प्रातर्दीधितिमान् ] प्रभाते रविराविर्भवति । रवेरु-पमानेन[४] शोकविनाशोन्मुख- प्रसाद-[५] सूचित- ॥२॥

३ दर्शनविघ्नम्–भ व ल शा मुशा ४ रविराविर्भवतीत्युपमानेन–भ व ल, कमलानामित्युपमानेन-व ०नीत्युपमा । अनेन–शा मुशा
५ ०विनाशा-मुखप्रसाद –शा मुशा

अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥ ३ ॥

अथ सर्वस्येत्यादि ॥ ततः सर्वे अखिला एव सुराः वागीशं ब्रह्माणं प्रणिपत्य प्रह्वीभूय वाग्भि अर्थ्याभि सत्याभिर्गीर्भि[१] उपतस्थिरे तुष्टुविरे[२] । कीदृशम्[३] । सर्वस्य धातार विश्वस्य धातार स्रष्टार सर्वतोमुख चतुर्मुख मित्यर्थः । यदि वा बहुद्वारमखिलागमस्तुत्यत्वात् । [वागीशं] वाचां वेदशास्त्रमयीनामीशं पतिं प्रभवम् । तदुक्तम्[४]—

'योगो ज्ञान तथा सांख्यं विद्याः शिल्पानि कर्म च ।
वेदा शास्त्राणि विज्ञानमेतत्सर्वं चतुर्मुखात्[५] ॥
—[महा० १३-१३५-१३९]

[अर्थ्याभि·] अर्थादनपेता अर्थ्या[७] 'धर्मपथ्यर्थन्यायादनपेते' [पा० सू० ४-४-९२] यत्[८] ॥३॥

१ अर्थयुक्ताभि –भ २ तुष्टुवु स्तुतिमारेभिरे–भ ३ 'तम्'–अपा–शा मुशा., ४. यदुक्तम्–शा. मुशा ५ वेदा ज्ञान च शास्त्राणि एतत्सर्वं जनार्दनात्–भ ल व पितामहात्–मुशा. ७ 'अनध्यारापितार्था'–अपा–शा मुशा ८ उपतस्थिरे इति 'उपाद्देवपूजा' इति तङ् ।–अपा–शा मुशा

तामेव स्तुतिमाह[१]—

नमस्त्रिमूर्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥

१ नुतिमाह–न मुशा

नम इत्यादि ॥ त्रिमूर्तये हरिहरब्रह्मवपुषे तुभ्यं नमः। सृष्टेः [प्राक्] पूर्वं तु केवलात्मने अभिन्नरूपाय। गुणानामक्षुभितत्वात्[1]। [गुणत्रयविभागाय] गुणत्रयस्य सत्त्वरजस्तमोलक्षणस्य विभागाय। पश्चादिदं ब्रह्मविष्णुरुद्रलक्षणं[2] उपेयुषे प्राप्ताय। अविभक्ता हि गुणा न कार्यकरणे समर्था[3] इति देवमनुष्यतिर्यग्भेदाः प्रजा[4] निर्मातुं न घटन्ते। गुणविभागाच्च[5] त्रिमूर्तित्वमागतमेव। तदुक्तम्—

> 'नमो रजोजुषे सृष्टौ स्थितौ सत्त्वमयाय च।
> तमोमयाय संहारे त्रिरूपाय स्वयंभुवे[6] ॥७॥ इति

१. 'गुणानामक्षुभितत्वात्'–नास्ति–भ. ल. ब 'तत'–अपा–शा. मुद्रा
२ 'ब्रह्म...लक्षणाम्'–नास्ति–भ ३ कार्यकारणक्षमा–भ ल ब शा मुद्रा
४. ० तिर्यग्रूपा प्रजाम्–शा. मुद्रा ५ गुणभागात–भ ६ तुभ्यं त्रेधा स्थितात्मने–भ ल

> यदमोघमपामन्तरुप्तं बीजमज त्वया।
> अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ ५ ॥

यदमोघमित्यादि ॥ हे अज[1] सनातन यत्त्वया अपामन्तः तोयमध्ये[2] अमोघम् अवन्ध्य[3] कार्यजनक[4] बीजं वीर्यम् उप्तं क्षिप्तम्। अतः बीजात् चराचरं स्थावरजङ्गमात्मकं विश्वं जगज्जायते[5]। अतश्च तस्य विश्वस्य त्वं प्रभवः कारणं[6] गीयसे[7]। मुनिभिरुच्यते। यदुक्तम्—

> 'सोऽभिध्याय शरीरात्स्वात्[8] सिसृक्षुर्विविधाः प्रजाः।
> अप एव ससर्जादौ तासु वीर्यमवासृजत्[9] ॥—[मनु० १-८]

चरं चाचरं च चराचरम्। प्रभवत्यस्मादिति प्रभवोऽत्र[10] ॥५॥

१. न जायते [इति] अजस्तस्यामन्त्रणे–अपा–शा. २ अपां पानीयानां अन्तर्मध्ये–भ ल. ३. सफलम्–भ. ल. ४. कार्यजननम्–न. भ. ल. ब शा. मुद्रा. ५. बभूव–भ. ल. ब. नास्ति–शा. मुद्रा. ६. उत्पत्तिस्थानम्–ल ७. कथ्यसे–ल. ८. शरीरात् पार्श्व०–न. ल. ब ९. अवासृजत्–भ न. ल. ब. बीजमवासृजत्–मनु. १–८, ०मपाक्षिपत्–शा. मुद्रा. १०. 'अत्र'–—नास्ति–भ. ब. ल. शा मुद्रा.

तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥

तिसृभिरिति ॥ त्वं हरिहरब्रह्मरूपाभिः तिसृभिः [अवस्थाभिः] दशाभिः [महिमानं] माहात्म्यं [उदीरयन्] कथयन् [प्रलयस्थितिसर्गाणां] संहाररक्षासृष्टीनां एकः एव [कारणतां] निदानत्वं [गतः] प्राप्तः । यदुक्तम्—

ब्रह्मत्वे सृजते लोकान् रुद्रत्वे संहरत्यपि[1] ।
विष्णुत्वे पालयत्येष[2] त्रिस्रोऽवस्थाः स्वयम्भुवः ॥

स्थितिः सत्ता पालनम् ॥६॥

१ संहरत्यपि पुरुष । –भ. कालो वै संहरत्यपि–ल. न., कालत्वे संहरत्यपि–शा मुद्रा. २. पुरुषस्त्व उदासीन–शा मुद्रा.

स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ ७ ॥

स्त्रीपुंसाविति ॥ [स्त्रीपुंसौ] नारीपुरुषौ[1] [ते] तव आत्मभागौ अंशौ[2] यतः [सिसृक्षया] स्रष्टुमिच्छया [भिन्नमूर्तेः] द्विधाकृतवपुषः तावेव[3] प्रसूतिभाजो योनिजस्य सर्गस्य सृष्टेः [पितरौ] मातापितरौ [स्मृतौ] उक्तौ । यदुक्तम्—

'द्विधा कृतात्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स विराजम[4]सृजत्प्रभुः ॥'[5]–[मनु० १–३२]

१. प्रकृतिपुरुषौ–न. ल. शा. मुद्रा २. रूपम्–न. ल. व. म० तवात्मनो भागावंशौ–शा मुद्रा ३. 'स्त्रीपुंसौ'–अपा–शा मुद्रा ४ विरञ्चिम०–भ विभागम०–ल. ५. प्राकृतमानसादीनामपि सर्गाणां सम्भवात् प्रसूतिभाग्ग्रहणम् । स्त्री च पुमांश्च स्त्रीपुंसौ । अचतुरादित्वादच् [द्र. पा० सू० ५–४–७७] माता च पिता च पितरौ । 'पिता मात्रा' [पा० सू० १–२–७०]–अपा–मुद्रा त्येकशेष ।'–अपा.–शा.

स्वकालपरिमाणेन व्यस्तरात्रिंदिवस्य ते ।
यौ तु स्वप्नावबोधौ[1] तौ भूतानां[2] प्रलयोदयौ ॥ ८॥

१ यौ स्वप्नबोधौ तावेव–शा मुद्रा. २ स्वप्नावबोधौ भूताना तावेव–स,

स्वकालेत्यादि ॥ [ते] तव यौ स्वप्नावबोधौ[1] तौ एव भूतानाम् [प्राणिनां] [प्रलयोदयौ] विनाशाविर्भावौ[2] । यदुक्तम्–

'यदा स देवो जागर्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते[3] ॥'
—[मनु० १-५२]

कीदृशस्य ते । स्वकालपरिमाणेन निजसमयमानेन [व्यस्तरात्रिंदिवस्य] व्यस्तं विभागीकृतं रात्रिंदिवमहोरात्रौ येन तस्य । यदुक्तम्–

सहस्रयुगपर्यन्तमहर्य[4]द्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां[5]महोरात्रविदो जनाः ॥—[भगी० ८-२७]

अन्यत्राऽप्युक्तम्—

यदेतत्परिसंख्यातमादौ मर्त्यचतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥
दैविकानां युगानां तु सहस्रपरिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरुच्यते[6] ॥—[मनु० १-७१, ७२]

१ स्वप्नबोधौ–शा मुद्रा २ 'इति जातौ'–अपा–भ ब, विनाशादयौ–ल
३ निमीलति–न
४ महर्य–न ब महर्यं–म ब, महस्तु–ल महर्यद्–शा मुद्रा ५ सहस्रान्तां–भ न ल, ब शा मुद्रा ६ रात्रिरेव च–न ब शा मुद्रा 'द्वन्द्वे दिवानक्त प्रातिपदिकार्थमात्रवृत्तित्वाभावात्, अधिकरणार्थत्वे 'दोषामन्य मह दिवामन्या रात्रि' [द्र महा० भा० १-१-१४] इत्यादौ कर्मभावो दुर्घट स्यात् ।' –अपा –ब भ य न शा मुद्रा [०मात्रवृत्ति नाधिकरणार्थवृत्ति नियम्'–अपा –मुद्रा

जगद्योनिरयोनिस्त्वमनन्तो जगतोऽन्तकः[1] ।
जगदादिरनादिस्त्वं जगदीशोऽप्यनीश्वरः[2] ॥ ९ ॥

१ जगदन्तोनिरन्तक —भ अ ना, अनन्तो जगदन्तोऽप्यन्तक –मुद्रा २ जगदीशो निरीश्वर —भ अ ना

जगदित्यादि ॥ ब्रह्मरूपेण[1] सृष्ट्यात्मकत्वात्[2] त्वम् [जगद्योनिः] जगतां योनिः प्रभवः[3] । [त्वम् अयोनिः] तव तु न कश्चिद् योनिरजत्वात् । तथा त्वम् [जगतोऽन्तकः] विश्वस्यान्तको रुद्ररूपेण संहारात् तव [अपि] तु न कश्चिदन्तको[4]ऽन्तकारी, अविनाशित्वात् । तथा [जगदादिः] जगत आदिः त्वम् पुराणपुरुषत्वात्[5] । [त्वम् अनादिः] तव तु न कश्चिदादिर्नित्यत्वात्[6] । तथा [जगदीशः] जगतस्त्वमीश्वरः, सर्गस्थिति[7]प्रलयानां त्वदायत्तत्वात् । [अनीश्वरः] तव [अपि] तु न कश्चिदीश्वरः, परिपूर्णत्वात् । अपि विरोधे सर्वत्र सम्बन्धनीयः । विरोधस्तु नञ् समासेन[8] तत्पुरुषाश्रयेण, बहुव्रीहिणा त्वविरोधः । ९ ॥

१. ब्रह्मत्वेन — न ल धा मुद्रा. २ 'सृष्ट्यात्मकत्वात्'–नास्ति–न धा मुद्रा. ३ ब्रह्मत्वे तस्य तत्राधिकरणासंभूति –च तत्राधिकरणासंभूति –धा मुद्रा ४. ०ऽन्तो० –धा मुद्रा ५ पुराणत्वात् —च भ न ल ब धा मुद्रा. ६ 'हिरण्यगर्भः समवर्तताग्रे' [ऋ० वे० १०–१२१–१] इत्युक्ते –अधा धा ७. ०लयानाम् –धा. मुद्रा ८ पदानाम् –धा मुद्रा

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥

आत्मानमिति ॥ तव स्रष्टा संहर्ता वेदिता वाऽन्यः कश्चिन्नास्तीति[1] वाक्यार्थः । अथ यो नित्यस्तस्य स्वयमपि कीदृशो सर्गसंहारौ । अवतारभेदेनेत्यदोषः । तदीया ह्यंशाः[2] कार्या[3]र्थमुत्पद्यन्ते च प्रलीयन्ते च । यदि वा पुरुषबहुत्वादिदमुक्तम्[4] । कृतिना प्रवीणेन सर्वविदा । प्रलीयसे इति लट् कर्तरि ॥१०॥

१. नान्य कश्चिदस्तीति—न. ल ब व २ तव चांशा –ल न च, त्वदीयांशा –धा मुद्रा ३ कर्मा० –ल. म व ४. ०दित्यमुक्तम् –धा. मुद्रा

द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥ ११ ॥

द्रव इत्यादि ॥ [ते] तव विभूतिषु भूम्यादिषु महिमासु प्राकाम्य बाहुल्यं यथेच्छता वा । तथा हि त्वमेव द्रव रसात्मकत्वात्[1] [संघातकठिन] संघात. परमाणुसमूह । [2]गवाक्षादिविवरप्रविष्टरविकिरणसंवलिता रेणव परमाणुशब्देनोच्यते[3] । स चासौ तेन वा कठिन [3] पर्वतादिरूपत्वात्[4] । स्थूल पृथिव्यादिपञ्चमहाभूतमयत्वात्[5] । सूक्ष्म इन्द्रियशक्त्यात्मकत्वात् । [लघुर्गुरु] लाघवगौरवेऽपि त्वदीये विभूती सर्वशक्त्यात्मकत्वात् महान । स्थूलोऽपि लघुर्नाधादिवद् भवति सूक्ष्मोऽपि गुरु कनकपलववदिति[6] पृथग्गुणाश्रितम् । तथा त्वमेव व्यक्त दृश्यो महदादिरूपत्वात् । व्यक्तेतरश्च अव्यक्त प्रकृतिपुरुषमयत्वात् । यदिदं किञ्चित् दृश्यादृश्यमेव भगवद्विभवलव[7] इति वाक्यार्थ [8] ॥११॥

१ रसात्मक –ना मुना २ २ गवाक्ष उच्यते' । नास्ति–व न व म ल ना मुना ३ संघातरूप वास्कम्नि इत्यथ ।–व ञ व, कठोर –अपा –ना मुना ४ पर्वतादिरूपत्वात ' नास्ति–ना मुना ५ पृथिव्यादिमयत्वात–थ न, पृथि यादिमहाभूतमयत्वात–ल ना मुना ६ पनपलवयद्–ञ व ७ भगवान–न ८ उपु पवनगूयाग्निरूपत्वात । गुर्वश्वरूपमूर्तित्वात । एव शक्तिप्रपञ्चस्य नानारूपैर्निरूपितम् । पृथिव्यापश्च तेजश्च वायुश्चैव पञ्चम ॥ शब्दस्पर्शरूपञ्च च रसो गन्धश्च पञ्चम । श्रोत्र त्वक चाक्षुषी जिह्वा घ्राण चैव तु पञ्चमम ।। '–अपा —ना

उद्गीथः[1] प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।
कर्म यज्ञ फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ १२ ॥

१ उद्घात –मुनामाटी म
१ म ४

उद्गीथ इत्यादि ॥ तासां गिरां वाचां प्रभवः उत्पत्तिस्थानम्[१] । कासामित्याह । यासां प्रणवः ॐकारः [उद्गीथः] उद्गीथाख्यः । वेदे ह्यस्योद्गीथसंज्ञया व्यवहारः । केचिदारम्भसमापक[२] चोद्गीथमाहुः । पाठे ह्याद्यन्तयोरवश्यमोंकारः प्रयुज्यते। यासां च त्रिभिः न्यायैः स्वरस्थाभिस्तारमन्द्रमध्यैः, संहितापदक्रमैर्वा, ऋग्यजुःसामभिर्वा, उदात्ताऽनुदात्तस्वरितैर्वा, अध्ययनाध्यापनकर्मभिश्च उदीरणम् । यासां च कर्म यज्ञः यजमानव्यापार फलं च स्वर्गं तासां [गिरां] श्रुतीनामित्यर्थः । एतेन वेदानां प्रथमस्त्य स्मृतिपरममन्वादीनां प्रवर्तक[३] इत्युक्तं भवति ॥१२॥

१ योनि–धा २ क्वचित्कार्यारम्भकम्–न ल, क्वचित्कार्यारम्भकम्–न भ केचित्त्वारम्भकम्–धा मुना ३ कर्ता प्रभव–भ व स्मर्ता प्रवर्तक–ना मुना

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥१३॥

त्वामित्यादि ॥ त्वां सांख्याचार्याः प्रकृतिं बुद्धिं [आमनन्ति] कथयन्ति । बुद्धिर्मन इति पर्यायः[१]। कीदृशीम् । [पुरुषार्थप्रवर्तिनीं] पुरुषस्यार्थे प्रयोजने[२] प्रवर्तते ताम् । सर्वा हि प्रकृतेः प्रवृत्तिः पुरुषस्य भोगापवर्गार्थं गुणपुरुषभेदज्ञानार्थं[३] [redacted] । उक्तं च–

'सर्वं[४] प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥'
–[सा० का० ३७]

योऽपि चाऽसौ पुरुषः त्वाम् एव विदुः जानन्ति । कीदृशं [पुरुषम्] तां प्रकृतिं पश्यन्तीति तद्दर्शिनम् । द्रष्टा हि पुरुषो दृश्या तु बुद्धिरिति कापिलाः । तथा उदासीनं निष्क्रियम् ।[५] पुरुषो ह्युदासीनः, एतत् शुभाशुभं कर्म कुर्वतीं प्रकृतिं पश्यतीत्यर्थः[६] । यदुक्तम्–

'तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ – [सां० का०-१९]

१ 'म्नो मन.' [द्र पा० सू० ७-३-७८] – अपा-मुद्रा　२ पुरुषार्थेन प्रयोजनन-शा. मुद्रा.　३ गुणप्रकृपभेददर्शनार्थम्-ल.व, गुणपुरुषभेदज्ञानार्थम्-य शा मुद्रा.　४ ज्ञानम्-शा मुद्रा　५...५ 'पुरुषो .....पश्यतीत्यय ।' नास्ति-च म. शा. मुद्रा.

त्वं पितृणामपि पिता देवानामपि देवता ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥१४॥

त्वं पितृणामित्यादि ॥ [पितॄणां] पितरः सप्तविधाः देवविशेषास्तेषाम् अपि त्वम् पिता, श्राद्धे तर्पणीयत्वात् । [देवानां] देवानामिन्द्रादीनाम् [अपि] देवता, आराध्यत्वात्[1] । परतोऽपि सूक्ष्मेभ्योऽपीन्द्रियार्थेभ्यस्त्वं परः सूक्ष्मतमः । यदुक्तम्—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यस्तु[2] परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा ततो महान्[3] ॥-[क० उ० १-३-१०]
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥
—[क० उ० १-३-११]

तथा वेधसाम् अपि प्रजापतीनामपि दक्षमन्वादीनां त्वं विधाता[4]स्रष्टा । अपि विस्मये ॥१४॥

१. देवतायोनित्वात्-म. व. पूज्यत्वात्-ल. याज्यत्वात्-ग. मुद्रा
२ अर्थेभ्यश्च-क० उ० पाठ　३ महात्पर —क० उ० पाठ　४. वेधा-मुद्रा.

सर्वकर्मणोरद्वैतमाश्रित्य स्तुतिमाह[1] —
त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतम्[2] ।
वेद्यं च[3] वेदिता चासि ध्याता ध्येयं च यत्परम्[4] ॥१५॥

१ स्तुतिरियम्-शा मुद्रा.　२ शाश्वत -प. ल. अ. ना　३ त्वम्-म वेद्यश्च-प ना.　४ तत्परम्-अ. ना.

त्वमेवेत्यादि ॥ यः [होता] जुह्योति यश्च [हव्यं] हूयते यः [भोक्ता] विधिवद् भुंक्ते यश्च [भोज्यं] भुज्यते यः [वेदिता] वेत्ति यच्च [वेद्यं] ज्ञेयं यः ध्याता यत् च परं उत्कृष्टं ध्येयं तत्सर्वात्मकं त्वमेव भवसीति । शाश्वतम् अविनश्वरम्[1] । उत्तानस्तुत्यर्थो लाघवत्वान् व्याख्याता विस्तरस्तु शास्त्रान्तरे पर्यालोचनादन्विष्टमेतत्[2] ॥१५॥

१ शाश्वदभव शाश्वतम–अपा –शा   २ अन्वेष्टव्यमेतत्–व, अन्वेष्यमेतत –म व

इति तेभ्यः स्तुतीः[1] श्रुत्वा यथार्था हृदयंगमाः ।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः ॥१६॥

१. नुती –शा. मुशा न

इति तेभ्य इत्यादि ॥ [इति] इत्थ [तेभ्यः] सुरेभ्य स्तुती[1] [श्रुत्वा] आकर्ण्य [प्रसादाभिमुख] प्रसादेन अभिमुखो [वेधाः] ब्रह्मा [दिवौकसः] गीर्वाणान् [प्रत्युवाच] प्रत्यवोचत्[2] । कीदृशी । यथार्था सत्याभिधेया । अत एव हृदयंगमाः मनःप्रिया[3] ॥१६॥

१ नुती–न शा मुशा   २ प्रतीपमवोचत–न शा, प्रतीदमवोचत–मुशा
३ गमश्चेति खच्' [पा० सू० ३–२–३८] –अपा –मुशा शा

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥१७॥

पुराणस्येत्यादि ॥ तस्य आद्यस्य पुराणस्य कवेः ब्रह्मण[1] [चतुर्मुखसमीरिता] चतुर्वक्त्रैरुच्चारिता[2] शब्दानां द्रव्यगुणजातिक्रियाभेदेन [चतुष्टयी] प्रवृत्ति चरितार्था आसीत्[3] अभवत्, साक्षाद्भगवदुच्चारात् ।

चतुर्णां मुखानां समाहारश्चतुर्मुखम्[४] । चत्वारोऽवयवा यस्याः सा चतुष्टयी । 'संख्याया अवयवे तयप्' [पा० सू० ५-२-४२] 'ह्रस्वात्तादौ तद्धिते षत्वम्' [पा० सू० ८-३-१०१] ॥१७॥

१ सर्वविद-न भ व ल मुशा २ समीरिता-न
३ 'कृतार्था'-अपा-शा मुशा ४ 'पात्रादि'-[द्र महा० भा० २-४-३०] -अपा-मुशा, 'पात्रादिरूपयुक्तार्था समीरिता उक्ता'-अपा-शा

किमुपाचेत्याह —

स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥१८॥

स्वागतमित्यादि ॥ हे प्राज्यविक्रमाः प्रभूतवीर्या वः युष्मभ्यं स्वागतम् । क्रियाग्रहणात् सम्प्रदानत्वम् । [स्वागतम्] आगमनस्य[१] द्वारेणाशिष[२] सुशब्देन प्रतिपाद्यन्ते । कीदृशेभ्यो व । स्वान् अधीकारान् नियोगान् [प्रभावैः] महिमाभि अवलम्ब्य अपरित्यज्य[३] युगपद् [प्राप्तेभ्यः] आगतेभ्यः । न[४] हि ते स्वान् नियोगान्[४] हित्वा तत्रायाताः । [युगबाहुभ्यः] युगप्रमाणा बाहवो येषां ते युगबाहवस्तेभ्यः[५], चतुर्हस्तद्वयसं[६] युगम् ॥

१ आगतस्य-भ ब २ पूजाद्वारेणाशी-न व भ ब मुशा, क्रिया०-शा ३ परिगृह्य-शा, मुशा ४ ४ न हि ते आदित्या नभोगतिम्-भ ब ल शा मुशा ५ 'विपुलभुजेभ्य'-अपा-न, आजानुभुजेभ्य-भ ब 'आजानुभुजेभ्य'-अपा-मुशा ६ 'हस्तद्वय सयुगम्'-अपा-ब ल, हस्तद्वय० द्वयसयुगम-भ शा मुशा

किमिदं[१] द्युतिमात्मीयां न बिभ्रति यथा पुरा ।
हिमक्लिष्टप्रसादानि[२] ज्योतींषीव मुखानि वः ॥१९॥

१ किमिति-भ २ ०प्रकाशानि-भ

त्वमेवेत्यादि ॥ यः [होता] जुहोति यश्च [हव्यं] हूयते यः [भोक्ता] विधिवद् भुंक्ते यश्च [भोज्यं] भुज्यते यः [विदिता] वेत्ति यच्च [वेद्यं] ज्ञेयं यः ध्याता यत् च परं उत्कृष्ट ध्येयं तत्सर्वात्मकं त्वमेव ब्रह्मेति । शाश्वतम् अविनश्वरम्[1] । उत्तानस्तुत्यर्था लाघवत्वान् व्याख्याता विस्तरस्तु शास्त्रान्तरे पर्यालोचनादनिष्टमेतत्[2] ॥१५॥

१ शश्वद्भव शाश्वतम्–अपा –शा २ अन्वेष्टव्यमेतत्–व , अन्वेष्यमेतत् –भ ब

इति तेभ्यः स्तुतीः[1] श्रुत्वा यथार्था हृदयंगमाः ।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः ॥१६॥

१. नुती –शा. मुशा न

इति तेभ्य इत्यादि ॥ [इति] इत्थं [तेभ्यः] सुरेभ्यः स्तुती[1] [श्रुत्वा] आकर्ण्य [प्रसादाभिमुख] प्रसादेन अभिमुखो [वेधाः] ब्रह्मा [दिवौकस] गीर्वाणान् [प्रत्युवाच] प्रत्यवोचत्[2] । कीदृशी । यथार्थाः सत्याभिधेया । अत एव हृदयंगमाः मनःप्रिया.[3] ॥१६॥

१ नुती –न शा मुशा २ प्रतीपमवोचत–भ शा , प्रतीदमब्रवीत्–मुशा
३ गमश्चेति खच्' [इ पा० सू० ३–२–३८] –अपा –मुशा शा

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥१७॥

पुराणस्येत्यादि ॥ तस्य आद्यस्य पुराणस्य कवेः ब्रह्मणः[1] [चतुर्मुखसमीरिता] चतुर्वक्त्रैरुच्चारिताः[2] शब्दानां द्रव्यगुणजातिक्रियाभेदेन [चतुष्टयी] प्रवृत्तिः चरितार्था आसीत्[3] सफलत्, साक्षाद्भगवदुक्तत्वात् ।

चतुर्णां मुखानां समाहारश्चतुर्मुखम्[४] । चत्वारोऽवयवा यस्याः सा चतुष्टयी । 'संख्याया अवयवे तयप्' [पा० सू० ५-२-४२] 'ह्रस्वाचादौ तद्धिते षत्वम्' [पा० सू० ८-३-१०१] ॥१७॥

१ सर्वविद–न भ व ल. मुशा  २ समीरिता–न
३ 'कृतार्था'–अपा–शा मुशा ४ 'पात्रादि'–[द्र महा० भा० २-४-३०] –अपा–मुशा, 'पात्रादिरूपयुक्तार्था समीरिता उक्ता'–अपा–शा

किमुवाचेत्याह—

स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥१८॥

स्वागतमित्यादि ॥ हे प्राज्यविक्रमाः प्रभूतवीर्याः वः युष्मभ्यं स्वागतम् । क्रियाग्रहणात् सम्प्रदानत्वम् । [स्वागतम्] आगमनस्य[१] द्वारेणाशिषः[२] सुशब्देन प्रतिपाद्यन्ते । कीदृशेभ्यो वः । स्वान् अधीकारान् नियोगान् [प्रभावैः] महिमाभिः अवलम्ब्य अपरित्यज्य[३] युगपद् [प्राप्तेभ्यः] आगतेभ्यः । न[४] हि ते स्वान् नियोगान्[४] हित्वा तत्रायाताः । [युगबाहुभ्यः] युगप्रमाणा बाहवो येषां ते युगबाहवस्तेभ्य[५], चतुर्हस्तद्वयसं दारु[६] युगम् ॥

१ आगतस्य–भ व  २ पूजाद्वारेणाशी–न व भ य मुशा, क्रिया०–शा  ३ परिगृह्य–शा. मुशा  ४.४ न हि ते आदित्या नभोगतिम्–भ व ल शा मुशा  ५ 'विपुलभुजेभ्य'–अपा–न, आजानुभुजेभ्य–भ व 'आजानुभुजेभ्य'–अपा–मुशा  ६ 'हस्तद्वय सयुगम्'–अपा–व ल, हस्तद्वयद्वयसयुगम–भ शा मुशा

किमिदं[१] द्युतिमात्मीयां न बिभ्रति यथा पुरा ।
हिमक्लिष्टप्रसादानि[२] ज्योतींषीव मुखानि वः ॥१९॥

१ किमिति–स  २. ०प्रकाशानि–म

किमिदमित्यादि ॥ [वः] युष्माकं [मुखानि] वक्त्राणि यथा [द्युतिं] कान्तिं [पुरा] पूर्वमबिभरु[1]स्तथा अद्य न बिभ्रति न वहन्ति, किमिदं ब्रूत किमेतत् । [हिमक्लिष्टप्रकाशानि] हिमेन नीहारेण क्लिष्टः[2] कदर्थितः प्रकाशो नैर्मल्यं येषां तानि ज्योतींषि इव तारा[3] यथा न दधति तेज[4]स्तथा भवद्वदनानि न वहन्ति[5] ॥१९॥

१ धृतवन्त'-अपा-शा मुद्रा २ आक्लिष्ट-भ व ३. तारका-न ल ४ द्युतिम्-न व भ ल शा मुद्रा. ६ 'न वहन्ति'-नास्ति-व भ ब ल शा मुद्रा

प्रशमादर्चिषामेतदनुद्गीर्ण[1]सुरायुधम् ।
वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥२०॥

१ ०दनुद्गूर्ण०-स

प्रशमादित्यादि ॥ अथवा [वृत्रस्य हन्तुः] वृत्रासुररिपोरिन्द्रस्य [कुलिशं] वज्रं [कुण्ठिता-अश्रि-इव] लक्ष्यते भग्नधारमिव दृश्यते, [अर्चिषां प्रशमात्] दीप्तिनिर्वाणात् । [अनुद्गीर्णसुरायुधम्] अनुदितेन्द्रचापम्[1] । शक्रस्य धनुर्हि वज्रद्युतिप्रसरादुदेतीत्याहुः[2] । अश्रिर्धारा[3] ॥

१. अप्रकटितेन्द्रधनु-व भ, अनिष्ठितेन्द्रचापम्-शा मुद्रा. २. 'आधारा'-अपा-ल ३ 'कुण्ठिता अश्रयो धारा प्रभावक्त्याल यस्येत्यर्थः'-अपा-शा

किं चायम[1]रिदुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥२१॥

१. किमिदम०-शा

किं चेत्यादि ॥ किं कस्मात् च अयं [प्रचेतसः] वरुणस्य[1] पाशः यः पूर्वम् अरिदुर्वारः आसीत्। सोऽद्य मन्त्रेण हतवीर्यस्य फणिनः नागस्य[2] [दैन्यं] दीनतां विक्लवत्वम् आश्रितः । निर्विषसर्पवन्नष्टशक्तिसम्पन्न इत्यर्थः ॥२१॥

१. 'पाणौ हस्ते'–अपा –भ.    २. सर्पस्य–प, –नाम्ति–स

कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥२२॥

कुबेरस्येत्यादि ॥ अपविद्धा त्यक्ता गदा येन स अपविद्धगदः [कुबेरस्य] वैश्रवणस्य [बाहुः] भुज [मनःशल्यं] मनसः शल्यभूत पीडाकरं [पराभवं] शत्रु[1]परिभवं [शंसति इव] कथयतीव। न ह्यपरिभूतः स्वायुधं क्षिपति । गदात्यागाच्च[2] छिन्नशाखतरुतुल्यता ॥२२॥

१ अरि०–क न शा. मुशा    २ अपविद्धगदाच्च–म., 'अत एव कुबेरस्य म्लानशरीरस्य'–अपा.–ब. शा मुशा

यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥२३॥

यम इत्यादि ॥ [यमः अपि] वैवस्वतोप्ययं वैलक्ष्यात् स्वायुधेन दण्डेन [भूमिम्] उर्वीं [विलिखन्] उल्लिखन्[1] [निर्वाणालातलाघवम्] निर्वाणस्य प्रशान्तस्यालातस्योल्मुकस्य[2] यल्लाघवमनादरस्तत् कुरुते । यतः अस्तमितत्विषा नष्टकान्तिना । 'निर्वाणोऽवाते' [पा० सू० ८–२–५०] निर्वाणशब्दस्य निपातः[3] ॥२३॥

१ 'प्रचण्डेऽस्मिन् दण्डे'–अपा –ब. न. मुशा    २ ०स्योल्मुकदीपस्य–मुशा., ०निर्दीपस्य–शा    ३ 'अलातमुल्मुकं ज्ञेयमुल्कज्वालास्य निर्गता।'–अपा –म., 'य सर्वप्राणिनामन्तकरो कन्याधिनार (?) '–अपा.–शा

अमी च कथमादित्याः प्रतापक्षति[1]शीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥२४॥

१ ०क्षय०–अ ना

अमी चेत्यादि ॥ [अमी] एते च [आदित्याः] सूर्याः प्रतापक्षतिशीतलत्वात् [कथम्] कस्मात् [चित्रन्यस्ताः] आलेख्यगता इव [प्रकामालोकनीयताम्] यथेच्छालोकनीयतां [गताः] प्राप्ताः, दृश्यत्वं सम्पन्ना[1], पूर्वमेते वीक्षिता मनागपि दृष्टिमधास्तुः ॥२४॥

१. 'सम्पन्ना'–नास्ति–शा मुद्रा

प्रयाकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥२५॥

पर्याकुलेत्यादि ॥ मरुतां वेगभङ्गोऽनुमीयते गयरोध ऊह्यते कुतः[1] । पर्याकुलत्वात् पुञ्जीभूतत्वात् सम्भ्रान्तत्वात् । वेगाद्धि ते प्रसरन्तो नाकुला भवन्ति । यथा [अम्भसाम्][2] ओघः पुरः प्रतीपगमनात् आशंक्यते ॥२५॥
१. तर्क्यते–न. भ ळ ब. शा मुद्रा २. जलानाम्–अपा.–शा. मुद्रा

आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्धानः क्षताहंकार[1]शंसिनः ॥२६॥

१. क्षतहुंकार०–म. स

आवर्जितेत्यादि ॥ महाप्रमाणामपि[1] रुद्राणां देवविशेषाणां मूर्धानः [क्षताहंकारशंसिनः] क्षतं नष्टमहंकारं स्वविशेषं[2] शंसन्ति कथयन्ति

१. महाप्रभावानाम्–ब. न. व अनन्तप्रभावानाम्–मुद्रा. २. हुंकार मन्त्रविशेषम्–न, अहं०–ब मुद्रा

तथाविधाः सञ्जाताः । यतः आवर्जितजटामौलिविलम्बिशशिकोटयः जटा एव मौलयो मुकुटानि तदाकारत्वाज्जटारूपा वा मौलयः केशाः । जटामौलयः जटानां वा मौलयो जटामौलयः, आवर्जिताः स्रस्ता या जटामौलयस्तासु विलम्बिनी शशिकला[3] येषु । मुक्तकेशता हि परिभव[4] शंसिनी[5] ॥२६॥

३. कोटि-ब. मुद्रा. ४ भूरिभय० –भ ल ब ५ 'शतहुंकारशंसिन इति जरत्पाठोऽत्र रम्यतरः'–अपा – ब. 'शताहुंकारशंसिन इति जरत्पाठोऽत्र रम्यतरः'–अपा.–न ब. भ मुद्रा.

लब्धप्रतिष्ठा प्रथमं यूयं किं बलवत्तरैः[1] ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥२७॥

१. खलु रथ बलवत्तरैः–भ ना, ०रणोत्तरैः–सपाटी.

लब्धेत्यादि ॥ ये [प्रथमं] पूर्वं यूयं भवन्तः लब्धप्रतिष्ठाः प्राप्तस्थितयस्तेऽद्य किम् इति [बलवत्तरैः] बलिभिः परैः शत्रुभिः[1] कृतव्यावृत्तयः विहितास्पदभङ्गाः । अपवादैः उत्सर्गाः इव । सामान्यलक्षणं हि प्रथमं स्वविषये लब्धप्रतिष्ठितमपि परेण विशेषलक्षणेन बलवत्वात्तत्तद्विषयेऽपास्यते[2] ॥२७॥

१ अरिभिः–ब. मुद्रा. २. बाध्यते–न.

तद्ब्रूत वत्साः किमितः प्रार्थयध्वे[1] समागताः ।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥२८॥

१. प्रार्थयध्वम्–भ स

तदित्यादि ॥ हे [वत्साः] पुत्रका यदि परिभूता यूयं [ब्रूत] तत् कथयत । किं इतः मत्सकाशात् प्रार्थयध्वे इच्छथ । किम् शब्दः संशयपूर्वके[1] प्रश्ने[2] । यदि सृष्टिं प्रार्थयध्वे तद् भद्रम् । यस्मात् मयि[3] सृष्टिः लोकानां मदायत्ता सृष्टिरित्यर्थः । रक्षा तु युष्मासु भवत्सु लोकपालेषु अवस्थिता स्थिता । अत्र प्रार्थयध्वमिति अपप्रयोगः[4] । अत्र किं शब्दप्रयोगात् किं यस्तु भवन्तोऽर्थयन्त इति संशये लट्प्रयोगो युक्तः[5] ॥२८॥

१ मशये–ल  २ सर्गरक्षयोर्मध्यात्–अपा.–व. न भ मुशा  ३ वेधसि–मुशा.  ४ अपपाठ–भ. व मुशा, 'संशयप्रश्ने लोडर्थस्यावाधकत्वात् । निषेधपरे हि वाक्यार्थे विपर्ययो युज्यते । यथा–'किं ददातु किमश्नातु मर्त्यस्य भरणाकुल । उदारमतिराप्तेऽपि जगत्त्रितयमायके ।' –अपा.–मुशा  ५ न्याय्य –मुशा

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण प्रेरयामास[1] वासवः[2] ॥२९॥

१. नोदयामास–ग. चोदयामास–अ. ना  २ वृत्रहा–म

तत इत्यादि ॥ ततः श्रुतेति श्रवणाकांक्षामवधार्यानन्तरं [वासवः] इन्द्रः [गुरुं] सुरगुरुं [नेत्रसहस्रेण] अक्षिपुञ्जेन[1] [प्रेरयामास] अचूचुदत् ।[2] मनस्याधिक्यवशात् [मन्दानिलोद्धूतकमलाकरशोभिना] मृदुपवनकंपितसरसिजवनकान्तिना । अनिमिषाणामपि देवानां इच्छावशान्नेत्रचलनं युज्यते इति नाऽत्राक्षिविकारो[4] दुर्घटः ॥२९॥

१ ०पद्धेन–न मुशा  २ अनुनुदत्–ल  ३ अनिमेषाणाम्–मुशा
४ ०वकोच–व. भ. स, ०निवाध–मुशा

स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥३०॥

स द्विनेत्रमित्यादि ॥ ततः सः बृहस्पतिः [प्राञ्जलिः] बद्धाञ्जलिः [जलजासन] विरञ्चिम् इदं वक्ष्यमाणम् [उवाच] जगाद। किंभूतः द्विनेत्रम् अपि हरेः इन्द्रस्य सहस्रनयनाधिकं चक्षुः नेत्रम्। चक्षुरिव चक्षुः। यावत् किलासौ पश्यति[1] तत्सर्वं तेनेक्षते, न तावन्नयनसहस्रेण। अत एव तच्चोदनम्। नेत्रविशेषणत्वेऽपि [2]गुरोर्विशेषणं कृतम्[2]। तस्यैव चक्षुस्स्वरूपे निरूपितत्वात्[3]। सहस्रं नयनानि समाहृतानि इति सहस्रनयनं, द्विगुसमासः[4]। एकवचनं संहितत्वात्। त्रैन्यगिरिशवद् भाषायां वाचस्पतिशब्दो रूढः[5] ॥३०॥

१ 'पश्यति'—नास्ति—श मुद्रा. २...२. अपि गुरोरेवैते विशेषणे बोद्धव्ये—न व. शा मुद्रा ३ तस्यैव चक्षुषा बोधितत्वात्—भ व, चक्षुष रूपितत्वात्—शा. ४ 'तद्धितार्थोत्तरपदसमाहारे च [पा० सू० २-१-५१] द्विगु।' —अपा —मुद्रा ५. 'रूढ'—नास्ति—शा. मुद्रा. द्र कुमार० २-१

किमुवाचेत्याह—

एवं यदात्थ भगवन्नामृष्टं नः परैः पदम्।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यति प्रभुः[1] ॥३१॥

१. ज्ञास्यसि प्रभो—शा. भ स

एवमित्यादि ॥ हे भगवन् यत् त्वं लब्धप्रतिष्ठः सम्प्रति, परिभूता इति[1] यद् आत्थ निरूपयसि तदेवमित्थमेतत्। परिभूता वयं यतो नः अस्माकं[2] [पदम्] आस्पदम् आमृष्टम् अपहृतम् न च भगवता ज्ञातम् एतत् कथम्। यः सर्वस्य प्रत्येकं [विनियुक्तात्मा] आत्मारूपेणावस्थितः [प्रभुः] ईश्वरः, स कथमिव न ज्ञास्यति, न वेत्ति। आत्थेति ब्रुवः 'पञ्चानामादित आहो ब्रुवः' [पा० सू० ३-४-८४]। भगवन्निति पूजापदम्—

१. 'सम्प्रति' . इति'—नास्ति—ल व न भ. व शा मुद्रा २. 'परैः अरिभि.' —अपा —न य. [redacted] व, अरिभि—शा. मुद्रा ३ उत्पुंसितम्—शा. मुद्रा ४ अद्भुतम्'—अपा —य न. शा मुद्रा.

'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
कामस्याथ प्रयत्नस्य[५] षण्णां भग इति स्मृतः॥'

ज्ञास्यतीति 'अपह्नवे ज्ञः' [पा० सू० १-३-४४]। 'अकर्मकाच्च' [पा० सू० १-३-४५] इत्यात्मनेपदस्यानित्यत्वात्[६]। वर्तमानेऽपि लृट् प्रायेण प्रयुज्यते। यथा 'स्वस्ति वोऽस्तु गमिष्यामि।' [रामा० १-४३-१५] 'कार्ये गुरुण्यात्मसमं नियोक्ष्ये' [कुमार० ३-१०] 'तस्याः करिष्यामि दृढानुतापम्' [कुमार० ३-८] इत्यादौ ॥३१॥

५ वैराग्यस्याथ प्रयत्नस्य–व ज्ञानवैराग्ययोश्चैव–भ–१ पादटिप्पण्याम, वैराग्यस्याथ मोक्षस्य–मुशा द्र वि० पु० ६-५-७४  ६ आत्मनेपद विभाषितम–मुशा.

'मास्पृष्टं नः परैः पदं' [कुमार० २-३१] इति सामान्येनोक्तां विशेषेणाह—

भवल्लब्धवरोदीर्ण[१]स्तारकाख्यो महासुरः।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥३२॥

१ त्वया दत्तवरात् पूर्ण–स, ०दीर्ण–अ ना

भवल्लब्धेत्यादि ॥ [भवल्लब्धवरोदीर्णः] भवत्सकाशे[१] लब्धेन वरेण उदीर्णः प्रचण्डः। वज्राङ्कात्मजः [तारकाख्यः] तारकनामा [महासुरः] महादैत्यः [लोकानां] जगतः [उपप्लवाय] वधार्थं धूमकेतुरिवोत्थितः। केतूदयो हि लोकोपद्रवाय। धूमाकारः केतुर्धूमकेतुः। स चातिविषम। उदीर्ण इति 'ॠ गतौ' [धा० पा० १४१८] क्तः जातः। 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' [पा० सू० ८-२-४२] इति धातोर्नत्वम्[२] ॥३२॥

१ ०सकाशात्–म न ल व ना मुशा  २ 'ॠत इद्धातोः' [पा० सू० ७-१-१००] रपरत्वम्।–ना मुशा, 'दीर्घत्वम्। नत्वम्। णत्वम्।'–अपा–व द

तत्रोदीर्णत्वमाह—

पुरे तावन्तमेवास्य तनोति[1] रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते[2] ॥३३॥

१ ०स्यातनोति-बा. २. सिध्यति-अ. ना.

पुर इत्यादि ॥ तदीये [पुरे] नगरे [तावन्तम् एव] तावन्मात्रं [रविः] अर्कः [आतपं तनोति] तपति [यावत्] यावता [दीर्घिकाकमलोन्मेषः] पद्मिनीनलिनविकासो [साध्यते] जन्यते । न त्वधिकं तदुपान्ते[1] तद्भयात् । दीर्घिकाशब्दे 'संज्ञायां कन्' । [2]'तावत्परिमाणस्य तावत्स्यार्थे मात्रच्'[2] ॥३३॥

१ 'तदुपान्ते'–नास्ति–न व मुद्रा. २...२. यत्परिमाणमस्य यावान् । तत स्वार्थे मात्रच्–मुद्रा

सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां[1] हरचूडामणीकृताम् ॥३४॥

१. रेखाम्–अ. ना

सर्वाभिरित्यादि ॥ [सर्वाभिः]अखिलाभिः कलाभिः [सर्वदा] अजस्रं [चन्द्रः] इन्दुः त [निषेवते] सेवते । केवलां [हरचूडामणीकृताम्] ईश्वरमौलिभूताम् एकां [लेखां] कलां न गृह्णाति, महाप्रभावत्वाद्देवस्य । एवं यदा लोकं हित्वा नित्यं परिपूर्णः शशी भयात् तमेवाराधयति तदा लोकोपप्लवः । एवमुत्तरत्र । अत्र च हरशशिनोऽर्थे भेदं गृहीत्वा हरशशिलेखा च कथाऽस्योपयुज्यत इति रभसादविचार्य नादत्त इत्युक्तम्[1] ॥३४॥

१ महेश्वरनिर्माल्यत्वात् शिरः कला त्यक्ता । न स्वशक्त्या इत्यन्ये । अथो-किलेशः । हरतीति हरश्चोरः । तेन चोरयित्वा शिरोमणीकृत वस्तु महोन्नतो न गृह्णाति लज्जाकरत्वात् । – भ –१ पादटिप्पण्यामधिकपाठः ।

व्यावृत्तगतिरुद्याने[1] कुसुमस्तेयसाध्वसात्[2] ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥३५॥

१. ०रुद्यान०-मुद्रा   २. ०माहसात्-अ. ना.

व्यावृत्तेत्यादि ॥ [तत्पार्श्वे] तस्य निकटे [वायुः] समीरः [तालवृन्तानिलाधिकं] तालवृन्तानिलाद् व्यजनपवनादधिकं न वाति[1] । यत उद्याने [कुसुमस्तेयसाध्वसात्] कुसुमापहरणभयात् [व्यावृत्तगतिः] निःप्रसरः[2] । यदि हि वेगेन वहेत् तदा कदाचिदुपवनप्रसूनान्यपवाहयेत् । ततोऽस्य दण्डो भवेत् ॥३५॥

१ 'वहति'-अपा —व भ ल ब शा मुद्रा   २ निवृत्तप्रसर -न व मुद्रा; निषिद्धगति -भ व

पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥३६॥

पर्यायेत्यादि ॥ वसन्तादयः[1] षड्तवः [पर्यायसेवामुत्सृज्य] क्रमेण सेवां हित्वा [उद्यानपालसामान्यम्] उद्यानपालवत् सदैव तम् उपासते[2] । सेवन्ते । अत्युष्णशीतादिकं दोषं त्यक्त्वा केवलं [पुष्पसंभारतत्पराः] कुसुमार्जनपरायणाः । समानमेव सामान्यम् । तत्परशब्देऽत्र तच्छब्दप्रयोगो न तथा न्याय्यः, परामृश्यस्य साक्षान्निर्देशात् । यथा–'तद्दर्शनपरौ करौ' इत्यादि[3] । पुनः श्रुतिवशात् तदवधारणं[4] प्रतीयते, तत्परा एवेति ॥३६॥

१ वसन्तग्रीष्मप्रावृट्शरद्हेमन्तशिशिरलक्षणा -ल. भ व   २. 'समुपासते'-अपा. -ल. भ. व.   ३. तद्दर्शनपरो-मुद्रा   ४. श्रवणादवधारणम्-मुद्रा.

तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।
कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥३७॥

तस्येत्यादि ॥ [ सरितां पतिः ] समुद्रः [ अम्भसामन्तः ] तोयमध्ये [तस्योपायनयोग्यानि] तारकोपचारार्हाणि[1] रत्नानि कथमपि प्रतीक्षते गवेषयति। आनिष्पत्तेः समाप्तिपर्यन्तं यावत्, तद्योग्यातिलाभ[2] इत्यर्थः। प्रतीक्षत इत्यत्रावेक्षत[3] इति रस्य. पाठः प्रतीक्षणस्य पालनार्थत्वात्[4]।३७॥

१ ०कोपायनार्हाणि–न. ल, ०तस्योपधार्हाणि–शा मुशा २ ०घमणिलाभ –शा मुशा ३ ०भ परीक्षते–न ०मापेक्षते–शा मुशा ४. 'प्रतिपालनार्थत्वात्'–न, नास्ति–शा. मुशा.

ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि।
स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते ॥३८॥

ज्वलन्मणीत्यादि ॥ यं च [ज्वलन्मणिशिखाः] ज्वलन्मणिशिखत्वाद् [वासुकिप्रमुखाः] वासुकितक्षकादयः [भुजंगाः] नागेश्वराः [स्थिरप्रदीपतां] स्थिरप्रदीपत्वम् [एत्य] प्राप्य [निशि] रात्रौ [पर्युपासते] सेवन्ते। स्थिरत्व तु तैलाद्यनपेक्षत्वात्, वातादिबाधाभावाच्च। अत्र शृङ्गारिणस्तारकस्य निशि भुजंगसन्निधानमुचित न वेति सहृदयैर्विचार्यते[1]। एनमिति 'द्वितीया टौस्स्वेनः' [पा० सू० २-४-३४] ॥३८॥

१ विचार्यम्–व न ल ब शा मुशा.

तत्कृतानुग्रहापेक्षी प्रत्यहं[1] दूतहारितैः।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः ॥३९॥

१ त मुहु–म स अ ना

तत्कृतानुग्रहेत्यादि ॥ आसतां तावदन्ये[1] सुराः [ इन्द्रोऽपि ] सुरनाथोऽपि [दूतहारितैः] दूतप्रापितैः [कल्पद्रुमविभूषणैः] कल्पपादपालंकारैः [प्रत्यहम्] अनुदिनमेनम् [ अनुकूलयति ] आराधयति। यतस्तारककृत प्रसादमर्थयते। हरति प्राप्तावपि वर्तते ॥३९॥

१ आस्ताम-ये–व न भ ब- शा मुशा २ 'न दोष एव'–अपा.–ब व भ, न मोष एव–शा मुशा

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः ॥४०॥

इत्थमित्यादि ॥ इत्थम् उक्तप्रकारेण रविशशिपवनऋतूदधिभुजंगसुरेशैः [आराध्यमानः] सेव्यमानः अपि असौ [भुवनत्रयं] जगन्ति [क्लिश्नाति] बाधते एव । न चैतदाश्चर्यम् यत्[1] [दुर्जनः] खलः [प्रत्यपकारेण] प्रतीपमुपद्रवेण[2] शाम्येत् शान्तो भवेत् न तु उपकारेण । लङ्येयमादौ सम्भावने ॥४०॥

१ यत–व २ ०र्णव–भ म ब शा मुद्रा

तदेव[1] क्लेशमाह—

तेनामरवधूहस्तसदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥४१॥

१ तमेव–शा मुद्रा

तेनामरेत्यादि ॥ तेन [नन्दनद्रुमाः] देवोद्यानतरवः छेदपातानां छेदपातयोः अभिज्ञा[1] अनुभावुकाः क्रियन्ते छेद्यन्ते पात्यन्ते चेत्यर्थः । कदाचिद् तयोन्या एव ते स्युरित्याह [अमरवधूहस्तसदयालूनपल्लवाः] अमरवधूहस्तैः सुरललनाकरैः कर्णपूरार्थं[2] सदयमालूनपल्लवाः कृत्तकिसलयाः । एव कल्पवृक्षविनाशाम्महानुपप्लवः[3] कृतो भवति । अभिजानातीत्यभिज्ञः[4] ॥४०॥

१. द्वैधीभावो-मूलनानामभिज्ञा–शा. मुद्रा २. ०पूरार्थम्–भ. ल ब शा मुद्रा., ०पूरार्थं–न ३ उपद्रव –ल ४ अभिजानन्ति अभिज्ञाने क –भ ब

वीज्यते स च[1] संसुप्तः श्वाससाधारणानिलैः ।
चामरैः सुरबन्दीभि[2]र्बाष्प[3]शीकर[4]वर्षिभिः ॥४२॥

१ हि–म म २ सुरब-दीनाम–म म ३. बाष्प०–म शा. मुद्रा. ४ ०सीकर०–म.

वीज्यत इत्यादि ॥ स चासुरः [संसुप्तः] शयितः सन् [सुरबन्दीभिः] देववधूभिः [चामरैः] वालव्यजनैः वीज्यते निर्वाप्यते । कीदृशैः[1] । [श्वाससाधारणानिलैः] उच्छ्वासेन[2] साधारणः सामान्यो मिश्रितोऽनिलो येषां, तैः तथा [बाष्पशीकरवर्षिभिः] बाष्पशीकरानश्रुकणान् वर्षन्ति मुञ्चन्ति तैः । ता हि दुःखादुच्छ्वसन्ति रुदन्ति च । बलेन हृता रिपुनारी बन्दी इति । 'ईज गतौ' [धा० पा० १८२] इति विपूर्वस्य णिचि कर्मणि वीज्यते इति रूपम् । अनेकार्था धातवः । च पूर्वापेक्षया समुच्चये । 'हि' इति तु पाठे चार्थे हिः । 'चामरैः' इति करणे तृतीया । बन्दीभिः इति कर्तरि [तृतीया] । 'बन्दीनाम्' इति पाठे चामरापेक्षया षष्ठी । वीजनैस्तु सन्निधानाद् बन्द्य एव कर्ता चामराणि वा ॥४२॥

१. किं विशिष्टैः–भ. ब. २. श्वासेन–मुद्रा.

उत्पाट्य मेरुशृंगाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥४३॥

उत्पाट्येत्यादि ॥ तेन [मेरुशृङ्गाणि] सुरशिखरिशिखराणि [उत्पाट्य] उन्मूल्य [स्वेषु वेश्मसु] निजसद्मसु आक्रीडपर्वताः क्रीडाशैलाः[1] [कल्पिताः] रचिताः । आक्रीडन्ते येष्वित्याक्रीडास्ते च ते पर्वताश्च[2] । हरिताम् अश्वानां[3] खुरैः क्षुण्णानि पिष्टानि, इत्युच्चत्वोक्तिः ॥४३॥

१. केलिशैला–ब. न. ल. शा. मुद्रा. २. 'क्रीडास्थानि'–अरा.–ब. शा. मुद्रा.
३. रविरथहयानाम्–ब. न. शा. मुद्रा

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हेमाम्भो[1]रुहसस्यानां[2] तद्वाप्यो धाम सांप्रतम् ॥४४॥

१. हेमाम्बु०–अ. ना २ शस्यानाम्–भ. म.

मन्दाकिन्या इत्यादि ॥ नद्याः[१] अद्य पयः शेषं तोयमेवावशिष्यते । [दिग्वारणमदाविलं] दिग्गज[२]मदेनाविलं कलुषम् । ते हि तत्र जलकेल्यर्थ-[३]मागच्छन्ति[४] । तर्हि कनककमलानि क्व गतानीत्याह-[हेमाम्भोरुह-सस्यानां] हेमाम्भोरुहाण्येव सस्यं फलं[५] तेषां तद्वाप्यः तदीया दीर्घिकाः सांप्रतं संप्रति धाम स्थानम् । तत उत्खाय तत्रारोपितानीति[६] । सारापहरोक्तिः । शिष्यत इति शेषम् । भाववर्जितो घञ् वाच्यलिंगः । सम्प्रत्येव साम्प्रतम् प्रज्ञादित्वादण् ॥४४॥

१ स्वर्नद्याः–व, स्वर्नद्याः गंगायाः–ल सुरनद्याः–शा मुद्रा
२. दिङ्नाग०–भ ३ ०क्रीडा०–भ न मुद्रा. ४ आयान्ति–भ. न शा मुद्रा ५ सस्यानि फलानि–भ ६ ०पितस्वादिति–व शा. मुद्रा

भुवनालोकनप्रीतिः नाकिभि[१]र्नानुभूयते ।
खिलीभूते[२] विमानानां तदापातभयात् पथि ॥४५॥

१. स्वर्गिभि०–स म २ खिले भूते–मुद्रा.

भुवनालोकनेत्यादि ॥ नाकिभिः देवैः [भुवनालोकनप्रीतिः] भुवनानां[१] दर्शनेन[२] परितोषः[३] न अनुभूयते । कुत इत्याह–गगने विमानपथि[४] खिलीभूते[५] शून्ये सम्पन्ने[६] [तदापातभयात्] तस्य तारकस्यापात आस्कन्दस्ततो यद् भयं ततः । तेषां निःशङ्कं हि भ्रमतां[७] कदाचिदसावागत्य सहसोपरि पतेत् ॥४५॥

१. मनुष्यलोकानाम्–भ. न ल व. २. आलोकनेन–न. शा मुद्रा
३. परितोषेण प्रीति–भ. ल व. ४ विमानानां पथि–व. शा. मुद्रा.
५ खिले भूते–मुद्रा. ६. प्रपन्ने कुत–न. भ ७. तत्र पतताम्–न., भ्रमताम्–मुद्रा.

यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥४६॥

तस्मिन्नित्यादि ॥ तस्मिन् तारके [नः] अस्माकं सामदानभेददण्डाश्चत्वारोऽपि उपायाः [प्रतिहतक्रियाः] नष्टशक्तयः। यतः क्रूरे विषमे [इव] यथा [वीर्यवन्ति] शक्तिमन्ति औषधानि सांनिपातिके त्रिदोषजे[1] विकारे व्याधौ क्रूरत्वात्[2] निष्फला भवन्ति। धातूनामन्योन्यविरोधात्। सन्निपातस्य कोपनः सान्निपातिकः। 'सन्निपाताच्चेति वक्तव्यम्'[3] इति ठक् ॥४८॥

१ सन्निपातजे-व न   २ मृतत्वात-म. व ल   ३. वार्तिकमिदम्-द्र म० भा० ५-१-३८

तदेव प्रतिहतक्रियत्वमाह—

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा।
हरिचक्रेण तेनास्य कण्ठे निष्क इवार्पितः[1] ॥४९॥

१ निष्कमिवार्पितम्-म स

जयाशेत्यादि ॥ यत्र चक्रे सदैव (अस्माकम्) नः जयाशा 'नूनमेतेन वयमरीन् विजेष्यामहे'[1] इति। तेन हरिचक्रेण सुदर्शनेन अस्य कण्ठे निष्क इव अर्पित। शिरश्छे[2]देच्छया क्षिप्तं स्वर्णालंकरणव[3]च्छोभितुमारब्धम्[4]। नष्टशक्तिसम्पन्नमित्यर्थः। केवलं [प्रतिघातोत्थितार्चिषा] गलगतिघातवशादुत्थितान्यर्चींषि यस्य तेन। तत्कण्ठस्य वज्रनिभत्वात्। उरस्याभरणं निष्कः[5] ॥४९॥

१. विजेष्याम-न. म. ल व.   २. ०छेदया-व,   ०छेदनाय-म. ल. व
३ निष्कवत-व. म. न व शा मुशा   ४ प्रवृत्तम्-व. न शा मुशा
५ निष्कम—व न. ल. शा मुशा

तदीयास्तोयदेष्वद्य पुष्करावर्तकादिषु।
अभ्यस्यन्ति तटाघातं[1] निर्जितैरावता गजाः ॥५०॥

१ तटाघातान्-भ ल व. शा मुशा

तदीया इत्यादि ॥ [तदीयाः] तारकीया [गजाः] द्विरदा [निर्जितैरावताः] परिभूतसुरकरित्वात् [पुष्करावर्तकादिपु] पुष्करावर्तकप्रभृतिपु कल्पान्तमेघेषु[1] तटाघात[2] वप्रपरिणतिक्रीडाम् अभ्यस्यन्ति। ते हि तत्प्रहारक्षमाः ॥५०॥

१ 'अद्य'—अपा –व न शा मुशा  २ तटाघातान्–भ ल ब शा मुशा

एवं परिभवमुद्घाट्या[1]गमनप्रयोजनमाह—

तदिच्छाम[2] विभो सृष्टं[3] सेनान्यं तस्य शान्तये।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥५१॥

१ उत्पाद्य०–भ ब ल  २ तदिच्छामि–व, ०च्छामो–म स
३ स्रष्टुम्–भ स.

तदिच्छामेत्यादि ॥ [तद्] तस्मात् तस्य शान्तये नाशाय सेनान्यं सेनापतिं त्वया विभो सृष्टं निर्मितम् इच्छाम[1] वयमभ्यर्थयामहे। त्वया चोक्तमेतत् 'मयि सृष्टिर्हि' [कुमार० २-२८] इति। यथा भवस्य संसारस्य शान्तये [कर्मबन्धच्छिदं] [2]कर्मपाशच्छेदिनं धर्मं पुण्ययोगं मुमुक्षवः योगिनो वाञ्छन्ति[2]। ज्ञानानलाद्धि[3] कर्मेन्धनदाहः। सृष्टमिच्छाम इति 'धातुसम्बन्धे प्रत्ययाः' [पा० सू० ३-४-१]। यदि वा सोत्साहो दर्पवान् सृष्ट उच्यते। यथा-'असौ हरादाप्तवता दुरापं येनेन्द्रलोका विजयाय सृष्टः' [रघु० ६-६२] इति। स्रष्टुमिच्छामीत्यपपाठ एव। सेना नयति यस्तं सेनान्यम् 'सत्सूद्विष' [पा० सू० ३-२-६१] इति क्विप्। 'एरनेकाचोऽसंयोगपूर्वस्य' [पा० सू० ६-४-८२] इत्यादिना यणादेशः। 'इच्छाम' इति प्रार्थने लोट्[4] ॥५१॥

१ इच्छामि–व  २...२ कर्मणा बन्ध कर्मबन्ध तं छिनत्ति म स त, धर्माचरणं विना मोक्षो न लभते–म व.  ३ ज्ञानानलेन हि–व शा मुशा  ४ 'केचित् सृष्टमिति पठन्ति'–अपा –भ, 'सेटो लाडिति पञ्चमी विभक्तिनिर्देशः'–अपा –शा

गोप्तारं सुरसेनानां[1] यं पुरस्कृत्य गोत्रभित्।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जय[2]श्रियम् ॥५२॥

१. ०सैन्यानाम्–म. स  २ सुर०–भ ना

गोप्तारमित्यादि ॥ कीदृशं सेनान्यम् । सुरसेनानां गोप्तारं [पुरस्कृत्य] अग्रतो विधाय गोत्रभिद् इन्द्रः [शत्रुभ्यः] शत्रूणां सकाशात् [जयश्रियं] जयलक्ष्मीं [प्रत्यानेष्यति] प्रतीपमानेष्यति [बन्दीम् इव] [1]नारीमिव हृतामपि प्रत्यानेष्यतीत्यर्थः । पुरस्कृत्येति 'पुरोऽव्ययम्' [पा० सू० १-४-६७] इति गतित्वे 'नमस्पुरसोर्गत्योः' [पा० सू० ८-३-४०] इति सत्वम् । गां भुवं त्रायन्त इति गोत्राः पर्वतास्तान् भिन्नवानिति[2] गोत्रभिदिन्द्रः ॥५२॥

१ 'हठहृताम्'–अपा–व  २ भिनत्तीति–न

वचस्यवसिते[1] तस्मिन्[2] ससर्ज गिरमात्मभूः ।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय या[3] ॥५३॥

१ ०स्युपरते–पा  २ तस्य–स  ३ सा–भ. स अ. ना

वचसीत्यादि ॥ तस्मिन् बार्हस्पते[1] [वचसि] वचने अवसिते समाप्ते सति [आत्मभूः] ब्रह्मा [गिरम्] वाचं [ससर्ज] अब्रवीत्[2] । या गीः सौभाग्येन साफल्येन [गर्जितानन्तरां] गर्जितादनन्तरं पयतो भाविनीं वृष्टिं जिगायातिशिश्ये । गुरुप्रार्थनानन्तरस्य[3] सफलीकरणात्[4] । जिगायेति 'सन्लिटोर्जेः' [पा० सू० ७-३-५७] इति कुत्वम् ॥५३॥

१. बार्हस्पत्ये–धा मुद्रा.  २ उवाच–ल.  ३. ०नाऽऽन्तरस्य–मुद्रा.
४ अनुष्ठानात्–भ. व न ल

तमेव गिरमाह–

संपत्स्यते वः कामोऽयं कश्चित् कालः प्रतीक्ष्यताम् ।
न त्वस्य सिद्धयै[1] यास्यामि सर्गव्यापारमात्मना ॥५४॥

१. सिद्धौ–भ. अ. ना. धा मुद्रा.

संपत्स्यते च इत्यादि ॥ सेनानीसमुत्पत्तिलक्षण. कामः मनोरथ [वः] भवतां [संपत्स्यते] घटिष्यते। सम्प्रति [कश्चित्] मनाक् [काल] समयः [प्रतीक्ष्यताम्] परिपाल्यताम्[1] । यस्मा[2]दहमेतस्य कार्यस्य [सिद्धयै] सिद्धिनिमित्तं [सर्गव्यापार] सृष्टिलक्षणं व्यापार[3] [आत्मना] स्वय न [यास्यामि] व्रजामि ॥५४॥

१ प्रतिपाल्यताम—शा. मुशा  २ यद—भ व  ३ ०लक्षणव्यापारम्—भ व ल

कस्मादित्याह—

इतः स दैत्य प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥५५॥

इत स इत्यादि ॥ सः [दैत्य.] यत्तारकासुरः[1] इत मत्तः [प्राप्तश्रीः] वरप्रदानादासादितसमृद्धिः इत च मत्त एव [क्षय] नाशं न अर्हति । यस्मादास्तामन्यः फलवृक्षः विषवृक्षः विषतरु अपि [संवर्ध्य] वृद्धिं नीत्वा स्वयं [छेत्तुं] निर्दलितुम्[2] असाम्प्रतम् अयुक्तम् न छिद्यते । साम्प्रत- शब्दोऽयं युक्तार्थः स्वभावाद् गर्भीकृतकर्मशक्तिरिति । तेनैव कर्मणोऽभि[3]- हितत्वाद् विषवृक्ष[4] इति द्वितीयाभाव. । वर्धनक्रियापेक्षयाप्यसौ[5] नार्हति मुख्यकर्मणोऽभिहितत्वादेन ह्युक्तम्—'प्रधानशक्त्यभिधाने गुणशक्तिर भिहितवत् प्रकाशते ।' यथा—'रिपुरानीय वध्यताम्' इति। वृक्षविशे- षणत्वे[6] च सामान्योपक्रमादसाम्प्रतमिति स्थितिनिर्देशः[7] ॥५५॥

१ तारक—ल,  २ लवितुम्—व भ व शा. मुशा  ३ कर्माऽभि०—न  ४ विषवृक्षात—शा मुशा  ५ 'भदितुम्'—अपा—भ व ल  ६ ०त्वऽपि—मुशा  ७ यथास्थिति निर्देश—मुशा

अथ कस्मात् त्वयैवायमुपद्रव कृत इत्याह—

वृतस्तेनेदमेवाहं[1] मया चास्मै प्रतिश्रुतम् ।
वरेणशामितं[2] लोकानलं दग्धुं हि तत्तपः ॥५६॥

१ प्राह्—व म मुशा  २ वरेण शमितम्—न ल म स.

वृतं तेनेत्यादि ॥ तेन तारकेण[1] इदम् एव वृत याचितम्। यथा सप्तवासरशिशुवर्जं देवानामप्यवध्यो भूयासमिति। मया अपि अस्मै[2] तथैव प्रतिश्रुतम् अङ्गीकृतम्। यस्मात् [तत्तपः] तस्य तपः [वरेण] वरदानेन अशमितम् अनिर्वापितं[3] सत् लोकान् भुवनानि दग्धुम् अलं शक्तम्[4]। तपसस्तावत्फलेनावश्यं भाव्यम्। यदि च वरेण तत्र जडीक्रियते ततोऽधिकोपद्रवक्षमं स्यात्। अस्मै इति 'प्रत्याङ्भ्यां श्रुवः .....'[पा० सू० १-४-४०] इति सम्प्रदानम् ॥५६॥

१. 'प्राक् ऊर्ध्वम्'–अपा.–न ब. 'प्राक् पूर्वम्'–अपा.–शा मुद्रा
२ तस्मै–शा. मुद्रा ३ निर्वापितम्–न ल ४ समर्थम्–भ ब
५ ततस्तदधिका०–मुद्रा

अस्माकमेव[1] तर्हि तद्वधशक्तिर्विधीयतामित्याह—

संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥५७॥

१. अस्मास्वेव–न ब शा मुद्रा

संयुग इत्यादि ॥ [संयुगे] समरे [सांयुगीनं] कृतोत्साह भयतां मध्ये कः [प्रसहेत] सोढु शक्नुयात्। [नीललोहितरेतसः] नीललोहितरेतः शर्वस्य शुक्रं तस्य निषिक्तस्य क्षेत्रे प्रक्षिप्तस्य[1] [अंशाद्] योंऽशो भागोऽवतारस्तस्मात् ऋते तं वर्जयित्वा। हरतनयो यदि परं तं जेतुं शक्त[2] इत्यर्थः। अतस्तं सांयुगीनं संग्रामपण्डितम्[3]। साध्वर्थे 'प्रतिजनादिभ्यः खञ्' [पा० सू० ४-४-९९]। अंशादिति ऋते शब्दयोगे पञ्चमी ॥५७॥

१ क्षेत्रक्षिप्तस्य–भ ल. ब, क्षेत्रे क्षिप्तस्य–शा मुद्रा. २. शक्नुयाद–न.
३. रणपण्डितम्–भ ल न. ब शा मुद्रा

अथ यदीन्द्रोपेन्द्रादयो न शक्तास्तत्र कथं हरांशोऽपि सक्तः स्यादित्याह—

स हि देवः परं ज्योतिस्तमःपारे प्रतिष्ठितम्[1] ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥५८॥

१ व्यवस्थितम्–म.

स हि देव इत्यादि ॥ यस्मात् महादेवः तमःपारे प्रतिष्ठितम् अविद्यातीतं[1] परम् उत्कृष्टं सूक्ष्मं ज्योतिः तेजः परमात्माख्यमतश्च न मया न च विष्णुना [परिच्छिन्नप्रभावर्द्धि] [2]निश्चयीकृतमहिम्नाम् ऋद्धिः सम्पद् यस्य स तथोक्तः । अतश्च य एवं महाप्रभावस्तदीयोऽंशः कथं विपक्षविदारणो न स्यात् ॥५८॥

१ अनाद्यन्तम–शा मुधा. २. 'परिच्छिन्ना'०–अपा.–न ल, परिच्छिन्ना निश्चिता'–अपा.–व. शा मुधा

तदंशासम्भवे चोपायमाह—

उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥५९॥

उमारूपेणेत्यादि ॥ [उमारूपेण] पार्वती[1]वपुषा ते यूयं [संयमस्तिमितं] समाधिनिश्चलं शम्भोः [मनः] चेतः [आक्रष्टुम्] अपहर्तुं यतध्वम् उद्यच्छध्वम् । [अयस्कान्तेन] अयस्कान्तमणिना[2] लोहवत् अय इव[1] । ■ इति सर्वनाम्ना प्रयत्नपरतां सूचयति । अयसः कान्तोऽयस्कान्तः 'अतः कृकमि .....'[2] [पा० सू० ८-३-४६] इत्यादिना [सकारः][2] ॥५९॥

१. गौरी०–व शा मुधा २...२ 'अय.... इव'–नास्ति–मुधा
२. कृकमीत्यप्राप्तेऽप्युपचार, कस्कादिषु पाठात्–व शा मुधा, कृकमीत्यादिना सकार –व म

गौर्या अलाभाद्युवत्यन्तरेण किं हरचेतःकर्षणं शक्यं[1] न वेत्याह–

उमे एव क्षमे सोढु[2]मुभयोर्वीर्यमाहितम् ।
सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ॥६०॥

१ 'किम्'–अपा–शा मुधा. २ वोढु०–म, ना स

उमे एवेत्यादि ॥ उभयोः सम्बन्धि वीर्यं रेतः [आहितं] क्षिप्तं सत् उमे एव स्त्रियौ सोढुं क्षमे धारयितुं समर्थे। कयोः के इत्याह। सा वा शम्भोः[1] तदीयाः तनुर्मम ब्रह्मणोः वीर्यमप्सु क्षिप्तमासीत्। आपश्चाष्टमूर्तेरेव मूर्तिः। एतच्च प्रसंगादौपम्यविधेः सद्योक्तम्[2]। यथापो मद्वीर्यं सोढुं क्षमा, एवं गौर्येव हरतेजः इत्यर्थः। वाशब्दावत्र समुच्चये। प्रधानश्चायं पक्षो यत् समुच्चययोः समानि समुच्चयपदानि[3]। यथा—

आहूतोऽपि सहायैरोमित्युक्त्वा विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति[4] ॥६०॥

—ध्वन्यालोकः-१-१३ (अनन्तरम्)

१ 'शाम्भवी चाप्रूपा'-अपा-शा मुशा. २ ०विधिःसद्योक्तम्-मुशा
३ प्रधानश्चाय पक्षा यदौपम्यसमर्थकानि (समर्थकानि ?) पदानि ।-व यद्द्योत्यसमानि द्योतकानि-मुशा

तस्यात्मा सिति[1]कण्ठस्य सेनापत्यमुपेत्य वः ।
मोक्ष्यते[2] सुर[3]बन्दीनां वेणीर्वीर्यविभूतिभिः ॥६१॥

१ शितिo-म स २ मोक्ष्यति-शा मुशा. ३ स्वर्गo-शा मुशा

तस्यात्मा सितीत्यादि ॥ तस्य एवं विधस्य [सितिकण्ठस्य] शम्भो[1] आत्मा पुनः[2] [वः] युष्माकं [सेनापत्य] चमूनाथत्वम् [उपेत्य] प्राप्य बद्धानां [सुरबन्दीनां] सुरसुन्दरीणां [वेणीः] कबरीः [वीर्यविभूतिभिः] शक्तिसमृद्धिभिः [मोक्ष्यते] उन्मोक्ष्यति[3]। बद्धाया हि नार्याः स्वामिनैवोन्मोच्यः कबरी[4]मोक्षः कार्य इत्याचारः। कालकूटपानधराच्छिन्नस्य नीलगल[5]त्वम् ॥६१॥

१. हरस्य-व न. शा मुशा २ 'कार्तिकेय'-अपा-भ य ३ मोक्ष्यति-शा मुशा ४ वेश०-न ५ कण्ठ०-न.

इति व्याहृत्य विबुधान् विश्वयोनिस्तिरादधे ।
मनस्याहितकर्तव्यास्तेऽपि प्रति दिवं ययुः[1] ॥६२॥

१ प्रतिययुर्दिवम्-अ. ना शा मुशा.

इति व्याहृत्येत्यादि ॥ [विबुधान्] देवान् [इति] इत्थं [व्याहृत्य] उक्त्वा [विश्वयोनिः] वेधाः तिरोदधे अन्तर्हितः । [ते] देवाः अपि [मनसि] चेतसि [आहितकर्तव्याः] कृतकार्याः [दिवं] सुरभुवनं[1] प्रति [ययुः] जग्मुः ॥६२॥

१ स्वर्गम्-न भ. ल. शा मुद्रा

तत्र निश्चित्य कंदर्पमगमत् पाकशासनः ।
मनसा कार्यसंसिद्धित्वराद्विगुणरंहसा ॥६३॥

तत्रेत्यादि ॥ ततः तत्र[1] देवनाथः कथं हरगौरीसमागमः कार्य इति मन्त्रिभिः सह निश्चित्य [पाकशासनः] शक्रः[2] [मनसा] चेतसि[3] (सा ?) तदा [कंदर्पं] स्मरम् अगमत्, कामं सस्मारेत्यर्थः । कीदृशेन मनसा । [कार्यसंसिद्धित्वराद्विगुणरंहसा] कार्यस्य हरगौरीसमागम[4]लक्षणस्य या संसिद्धिर्निष्पत्तिः, तत्र या त्वरा शीघ्रता तया द्विगुणरंहसा महास्कन्देन[5] । अगमदिति लुङि लृदित्यादङादेशः । पाको नामासुरस्तस्य यथादिन्द्रः पाकशासनः ॥६३॥

१ नाके'-अपा-शा मुद्रा. २ इन्द्र-व भ व शा मुद्रा. ३. चेतसा-भ व शा. मुद्रा ४. ०मगम०-भ न व ५ महाजवेन-न, महास्यदेन-मुद्रा

अथ सललित[1]योषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा[2] ॥६४॥

१. न ललि०-म स, सुललित०-धा. २ पुष्पकेतु-चा शा मुद्रा

अथ सललितेत्यादि ॥ अथ अनुस्मृतः [पुष्पधन्वा] कामः [प्राञ्जलिः] अञ्जलिं विधाय [शतमखम्] इन्द्रम् उपतस्थे ढुढौके । संगतकरणे लिट्[1] ।

१. तङ्-मुद्रा ल्ट-धा.

किं कृत्वा । प्राञ्जलित्वात् कण्ठे [चापं] धनुः [आसज्य] निधाय। कीदृशम् [सललितयोषिद्भ्रूलताचारुशृङ्गम्] सललिता[2] विलासान्विता या योषितोऽङ्गनास्तासां भ्रूलतावत् चारुशृङ्गं रम्याटनिकौटिल्यं[3] चक्रीकरणाच्च ।[4] कीदृशे कण्ठे [ रतिवलयपदाङ्के ] रतिरस्य भार्या तस्या वलयपदानि कटकमुद्रा [एव] अङ्कश्चिह्नं यस्य तदाश्लेषवशात् । कीदृशः कुसुमध्वजः। [सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः] वयस्यः योऽसौ मधुर्वसन्तस्तस्य हस्ते न्यस्तोऽर्पितश्चूताङ्कुर एवास्त्रं शरो येन स तथोक्तः । मालिनीवृत्तमिति भद्रम्[5] ।

२ सलीला-भ. ३ ०कौटिल्यात्-मुद्रा ४ वशीकरणाच्च-मुद्रा
५ 'इति भद्रम्'—नास्ति-मुद्रा , श्रेय -शा

आनन्ददेवायनिवल्लभविरचितायां कुमारसंभवपञ्जिकायां कामागमो [नाम] द्वितीयः सर्गः[1] ॥

१ इति श्रीकुमारसम्भवे तृतीय सर्ग-व. न, इति कुमारसम्भवे महाकाव्ये कविश्रीकालिदासविरचिते पञ्जिकायामानन्ददेवायनिवल्लभकृतौ सुबोधदुर्बोधे टीकायां द्वितीय सर्ग समाप्त । -भ 'पञ्जिकायाम्'—नास्ति-ब आनन्ददेवाय निवल्लभविरचितायां कुमारसम्भवलघुटीकायां उद्धृतसारायां ..... । -ल इत्यानन्ददेवात्मजवल्लभदेवविरचितायां कुमारसम्भवटीकायाम्.. .. मुद्रा ..... देवकृतायां...शा. इति कुमारसम्भवे महाकाव्ये आनन्ददेवाय[नि]वल्लभविरचितायां कुमारसम्भवटीकायां ब्रह्मसाक्षात्कारो नाम द्वितीय सर्ग समाप्त. ।-न

॥ श्रीः ॥

आनन्ददेवायनिवल्लभविरचितायां कुमारसंभवपञ्जिकायां

# ॥ तृतीयः सर्गः ॥

तस्मिन्मघोनस्त्रिदशान्विहाय सहस्रमक्ष्णां युगपत्पपात ।
प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु[1] ॥ १ ॥

१. ०तेऽपि—क ना

तस्मिन्नित्यादि ॥ [1]मघोनः शक्रस्य[2] अक्ष्णां सहस्रं तस्मिन् कामे युगपत् समकाल[3]मेव पपात जगाम । नयनदशशत्या[4] तमपश्यदित्यर्थः । [त्रिदशान्] देवान् [विहाय] हित्वा । युक्तं चैतत् । यतः प्रभूणाम् आश्रितेषु भृत्येषु[5] गौरवं प्रायेण [चलम्] अस्थिरम्[6] । कुतः [प्रयोजनापेक्षितया] प्रयोजनाधीनतया कार्यवशेन । तदुक्तम्—

'औरस्या[7]नपि पुत्रांस्ते त्यजन्त्यनुपकारिणः ।
[8]अनुगृह्णन्ति तु प्रीताः परानप्युपकारिणः[9] ॥' –[रामा० २–२३–३३]

सर्गेऽत्रोपजातयो वृत्तम्[10] ॥ १ ॥

१ ततो'—अपा—दा मुद्रा २ इन्द्रस्य—व न ल.—शा मुद्रा, देवेन्द्रस्य—म ३ एककालम्—भ व, समकालम—शा मुद्रा ४. 'समप्रतया'—अपा—व न ल शा. मुद्रा ५ सेवकेषु—व शा मुद्रा. ६. बाहुल्येन चपलम—म ७ औरसान्—व न शा मुद्रा ८..९. 'अनु ... कारिण'—नास्ति—शा मुद्रा १ 'प्रायश —अपा—व न ल शा. मुद्रा

स वासवेनासनसंनिकृष्टमितो निषीदेति निसृष्टभूमिः[1] ।
भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम्[2] ॥२॥

१ विसृष्टभूमि—म स २. ०तैनमेवम्—व स

वासवेनेत्यादि ॥ अतोऽसौ स्मरः[1] [भर्तुः प्रसादम्] प्रभुप्रसादं मूर्ध्ना शिरसा [प्रतिनन्द्य] अभिवन्द्य मिथः रहसि एनम् आखण्डलं वक्तुं [प्राक्रमत] प्रारेभे[2] । तदेव[3] स्वाम्यनुग्रहमाह । इतः अत्र मदीयविष्टरनिकटे [निषीद] त्वमुपविश इति स्वयं [वासवेन] शक्रेण निसृष्टभूमिः दत्तस्थानः । आसनस्य सन्निकर्षो[4] यत्र तदासनसन्निकृष्टम्, आसनसमीप इत्यर्थः । इत[5] इति आद्यादित्वात् तस्[5] । प्राक्रमत इति 'प्रोपाभ्यां समर्थाभ्याम्' [पा० सू० १-३-४२] इत्यात्मनेपदम् ॥२॥

१ तत स स्मर –ब, तत स्मर –न २. आरेभे–ब न. ब. शा मुशा
३. तमेव–शा मुशा ४ सन्निकृष्टम्–शा मुशा ५...५ 'इत... तस्'–नास्ति–शा. मुशा

किमुवाचेत्याह—

आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितु[1]माज्ञया ते ॥३॥

१ सवर्धित०–म अ ना

आज्ञापयेत्यादि ॥ गौरवकरणात्[1] हे [पुंसां] पुरुषाणां ज्ञातविशेष[2] यत् [ते] तव [लोकेषु] जगति[3] करणीयं कर्तव्यम् अस्ति तत् [आज्ञापय] निरूपय[4] । यस्मात् [संस्मरणप्रवृत्तम्] अनुध्यानोद्भवम्[5] [अनुग्रहं] प्रसादं [ते आज्ञया] त्वदादेशेन संवर्धितुम् [इच्छामि] कामये । [6]एष एव किल मयि महाननुग्रहो यत् स्मरणीयेन भवता स्मृता वयम् । तदधुनाऽऽदेशश्चेत् कुत्रचिद्दीयते तव द्विगुणीकृतोऽसौ भवति । संवर्धितुमिति अन्तर्भावितण्यर्थः । 'उदितो वा' [पा० सू० ७-२-५६] इतीडागमः[7] । ज्ञातविशेषेति आत्मन उत्कर्षः सूचितः[6] ॥३॥

१. 'गौरवकरणात्'–नास्ति–शा. मुशा. २. विदितान्तर–शा. ज्ञानश्रेष्ठ–मु शा ३. भुवनेषु–मुशा. ४. वयम–मुशा ५. ध्यानोद्भवम्–न म ल ब ६. ६ 'एष...सूचित'–नास्ति–मुशा ७ 'इति विकल्पेनेडागम' इति वैयाकरणसूचित पाठ ।

इदानीमात्मोचितां शक्ति प्रश्नपूर्वकमाह[1]—

केनाभ्यसूया फल[2]कांक्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती ॥४॥

१. प्रमाणपूर्वकम्–भ. ल. प्रणामपूर्वकम्–व., 'नास्ति'–शा. मुद्रा.
२ पद०–भ. व. स.

केनाभ्यसूयेत्यादि ॥ केन [फलकांक्षिणा] स्वर्गापवर्गेच्छुना [नितान्तदीर्घैः] चिरसञ्चितैः तपोभिः [ते] तव अभ्यसूया[1] अक्षमा[2] [जनिता] उत्पादिता । यावत् [आहितसायकस्य] आरोपितशरस्य[3] [मत्कार्मुकस्य] मत्कोदण्डस्य अस्य [निदेशवर्ती] आज्ञाविधेयः [भवति] भस्तु[3] । मदीयशरपातेनाज्ञाविधेयत्वात् । असूया कण्ड्वादिभ्यो यक्[4] असूयाशब्दः ॥४॥

१. 'ईर्ष्या'–अपा –व. शा मुद्रा. २. 'अक्षमा'–नास्ति–शा. मुद्रा.
३ ०बाणस्य–ल. ३...३ सभृतशरस्येत्यर्थः । एतदुक्त भवति–न., तव कश्चिद्वराराधोऽस्ति । आज्ञापय । यावदधुनैवाज्ञां करोमीत्यर्थः । –मुद्रा.
४. ब्र० पा० सू० ३–१–२७

असंमतः कस्तव मुक्तिमार्गं पुनर्भवक्लेशभयात्प्रपन्नः ।
बद्धश्चिरं तिष्ठतु सुन्दरीणामारेचितभ्रूललितैः[1] कटाक्षैः[2] ॥५॥

१. ०भ्रूचतुरैः–व. भ. स २. विलासैः–ब. स

असम्मत इत्यादि ॥ [1]कः वा तव असम्मतः अनिष्टो [पुनर्भवक्लेशभयात्] भूयः संसारे [2]जन्ममरणादिखेदत्रासात्[3] [मुक्तिमार्गं] मोक्षमार्गं प्रपन्नः] यियासति । यावत् [सुन्दरीणां] कामिनीनां कटाक्षैः अपाङ्गेक्षितैः[4] [बद्धः] निगडितो [तिष्ठतु] भवतु । कीदृशैः । [आरेचितभ्रूललितैः] आरेचिताभिर्नर्तिताभिर्भ्रूललितैर्मनोहरैः । चतुरवनितानयनोपान्तावलोकनेन किलास्य तन्मयत्वात् कुतोऽपवर्गः । आरेचितः नर्तितः भ्रमित इति सम्बन्धः[1] ॥५॥

१.. १. अत्र मुद्रितशारदायां भवंथैव भिन्न. पाठः । २. जनन०–ल. न ब. ३. मारणादिभीत.–न. ४. रामापाङ्गेक्षितैः–ल. ब.

अध्यापितस्योशनसापि नीतिं प्रयुक्तरागप्रणिधिर्द्विषस्ते[1]।
कस्यार्थधर्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्धः ॥६॥

१ ०प्रणिध–चा ना मुना

अध्यापितस्येत्यादि ॥ अपि[1] [वद] कथय कस्य [ते] त्वदीयस्य [द्विषः] अरेः [उशनसा] भार्गवेण अपि [अध्यापितस्य] अर्थशास्त्रं बोधितस्य[2] धर्मार्थौ [पीडयामि] क्लेशयामि[3] [सिन्धोः ओघः] सरित्पूरः [प्रवृद्धः] उल्लसितः [तटौ] सैकते इव। [प्रयुक्तरागप्रणिधिः] प्रयुक्तो राग एव प्रणिधिश्चरो[4] यस्य। अनुरागवशाद्धि कामैकसक्तत्वात् धर्मार्थहानि[1] ॥६॥

१ १ अत्र मुद्रितशारदाया सर्वथव भिन्न पाठ। २ निशितस्य–म व ल ३ क्षिपयामि–ल ४ दूत अपा ल म

कामैकपत्नी[1]व्रतदुःखशीलां लोलं मनश्चारुतया प्रविष्टाम्।
नितम्बिनीमिच्छसि मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्त[2]बाहुम् ॥७॥

१ कामैकपत्नीम–व　　२ ०विषक्त०–अ ना मुना

कामैकपत्नीत्यादि ॥ का[1] नितम्बिनीं सुश्रोणीं [मुक्तलज्जां] मुक्तलज्जत्वात् कण्ठे स्वयग्राहनिषक्तबाहुम् इच्छसि। स्वयं गृह्णाति इति स्वयग्राही। विभाषा ग्रह[2] [पा० सू० ३-१-१४३] इति ण॥ जलचरे ग्राह एव न तु जलचर [एव] ग्राह स्वयग्राह। स्वयंग्राहो निषक्तो लग्नो बाहुः यस्यास्ता स्वयमेव श्लिष्यन्तीं[2] का समर्थकामिच्छसीत्यर्थः। कीदृशीं ताम् [एकपत्नीव्रतदुःखशीलाम्] एक [एव] पतिर्यस्या सा एकपत्नी, तस्या व्रतमेकपत्नीव्रत तदेव दुःखं शीलयति[3] अभ्यस्यति या ताम् पतिव्रतामित्यर्थः। तत्र च लोलं चपल [मनः] चेत [चारुतया] सुरूपत्वात् प्रविष्टाम्। तस्य च लोलत्वम् अहल्यादिमुनिपत्नीकामनात् प्रसिद्धम्[1] ॥७॥

१ १ मुद्रितशारदाया सर्वथव भिन्न पाठ। २ श्लिष्यन्तीम–न
३ शीलयते–म ल व

कयासि कामिन्सहसापराधा[1]त्पादानतः कोपनयाऽवधूतः ।
तस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥८॥

१ सुरतापराधात्–म स 'सरसापराधात'–मुद्रा

कयासीत्यादि ॥ हे कामिन् । कामुक[1], कया कामिन्या [सहसापराधात्] प्रत्यग्रदोषत्वात्[2] [पादानतः] चरणपतितस्त्वम् अवधूत. तिरस्कृतः। तस्याः [शरीर] वपुः [दृढानुताप] तीव्रपश्चात्तापत्वात्[3] [प्रवालशय्याशरणं] किसलयशयनीयपरायणं [करिष्यामि] विदधामि[4]। सा हि त्वत्प्रार्थनामगणयित्वाऽनुतप्यमाना[5] सन्तापशान्तये[6] कुसुमपल्लवशय्यामभिलषिष्यतीति[7] ॥८॥

१ १ मुद्रितशारदाया सर्वथैव भिन्न पाठ । वराङ्गनाकामुक–भ न ल, व
२ सरस आर्द्रोऽपराधो यस्याऽसौ सरसापराध प्रत्यग्रदृष्टव्यलीक –मुद्रा शा.
३ पश्चात्तापवशात्–भ न व ल ४. विदधे–भ न व ल
५ मदिपुष्पयिताङ्गी सती–न ल ६ मदनेपुष्पयिताङ्गी तत्तापशान्तये–भ व

प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥९॥

प्रसीदेत्यादि ॥ हे वीर । [प्रसीद] प्रसाद कुरु। त्वदायुध वज्रम् एतत् [विश्राम्यतु] प्रशाम्यतु[1] आस्ताम्। कतम किं जातीय. [सुरारि.] असुर मदीयै. शरै. मोघीकृतबाहुवीर्यः अस्मत्पूरतम्पशमितभुजबल सन् कोपस्फुरिताधराभ्य स्त्रीभ्य. अपि बिभेतु। यदा हि कुपिता मानिन्य[2] ओष्ठ कम्पयन्त्यस्तमीक्षन्ते[3] तदैवाऽसावखिलं कार्यमुपेक्ष्य मयाञ्च प्रसादनपरो भवति। प्रसीद विश्राम्यतु इति प्रार्थने लोट्। तथा बिभेतु इति प्राप्तकाले लोट्। दैत्यदानवराक्षसादीनां सुराणां बहुत्वाज्जातिपरिप्रश्नता सम्भवतीति कतम इति डतमजुत्पत्तिः[4] ॥९॥

१ 'उन्'–अपा –न ल व भ व, तदास्ताम्–मुद्रा. २ मानिन्य–द मा मुद्रा ३ समीक्षन्ते–शा मुद्रा ४ 'त्रिलोकी तृणदर्शेषा मरुवान् नरदिश्यते । ते.पि कुप्यत्प्रियानेत्रत्रिभागभाजिभीरव ॥'—यथा –भ. व पु म ६

अथ चेदात्थ कस्मात्तवैवंविधा शक्तिरित्याह—

तव प्रसादा[1]त्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥१०॥

१. भवत्प्रसादात्—शा. मुद्रा

तव प्रसादादित्यादि ॥ [कुसुमायुधः] पुष्पास्त्रः अपि अहं तव प्रसादात्[1] एकं सहायं मधुं वसन्तम् एव [लब्ध्वा] प्राप्य[2] पिनाकपाणेः शिवस्य अपि धैर्यच्युतिं कुर्याम्। अतश्च अन्ये अपरे वराकाः[3] धन्विनः धानुष्का[4] मम के। अकिञ्चित्करा इत्यर्थः। चापहस्त हरं यत्राहं जेतुं समर्थः तत्रान्ये मम कृपणा धानुष्काः किमपकुर्युरित्यर्थः[5]। तव प्रसादात् इत्यनौद्धत्यपरम्[6]। मधुश्चैत्रस्तेन वसन्तो लक्ष्यते। मधुमाधवात्मकत्वात्। तस्य कुर्यामिति सम्भावने लिङ्। पिनाकं शार्ङ्गं धनुः शूलं वा। धन्वानं विद्यते येषां ते धन्विनः। व्रीह्यादित्वादिनिः[7] ॥१०॥

१ प्रमादेन-त्वया —व भ न. ब ल २ आसाद्य—न द भ ब ग शा मुद्रा. ३ 'वराका'—नास्ति भ ल ब. ४. धनुर्ग्रहा —भ ल ब, ग ५ किं मम कुर्युः —व शा मुद्रा, किं कुर्युः —ल ६ अनौद्धत्यपरम्-न ब न ह शा मुद्रा ७ द्र. पा० सू० ५-२-११६

अथोरुदेशादवतार्यपादमाक्रान्तिसंभावितपादपीठम्[1]।
संकल्पितेऽर्थे[2] विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥११॥

१ पादपीठ—अ ना २. सङ्कल्पितार्थे—भ.

अथोरुदेशादित्यादि ॥ [अथ] ततः [आखण्डलः] शक्रः इदं वक्ष्यमाणं जगाद। कीदृशम् [संकल्पितेऽर्थे[1]] चिकीर्षिते वस्तुनि [विवृतात्मशक्तिं] व्याख्यातनिजसामर्थ्यं[1] 'कुर्यां हरस्यापि......धैर्यच्युतिम्' [कुमार० ३-१०] इति [2]'यद्वतात्मनोऽभिलषितेऽर्थे प्रकटीकृतनिजमाहात्म्यम्[2]'। अतश्चादराति-

१. माहात्म्यम्-व, स्वमाहात्म्यम्—न निजमाहात्म्यम्—शा. मुद्रा २..२ 'यद्वता...माहात्म्यम्'—नास्ति—शा. मुद्रा.

[शय] वशात् ऊरुदेशात् ऊरुतः [पाद] चरणम् अवतार्य [वभाषे] भाषितवान्[3] । कीदृशं पादम् । [आक्रान्तिसम्भावितपादपीठम्] आक्रान्त्याक्रमणेनाधिष्ठानेन सम्भावितमनुगृहीतं गुरुत्वं नीतं पादपीठं येन । एष एव तस्यानुग्रहो यदुपरिचरणविन्यासः[5] ॥११॥

३ भाषणम्—मुशा ५. 'किमब्रवीदित्युत्साहयन्नाह'—अपा—शा मुशा

सर्वं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
वज्र[1] तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥१२॥

१ पूनम्—अ ना

सर्वं सखे इत्यादि ॥ सखे इत्यामन्त्रणं गौरवार्थम् । हे वयस्य । यत् त्वमात्थ सर्वम् एतत् त्वयि उपपन्नं घटते[1] । यस्मात् मम अस्त्रे [उभे] द्वे एव, वज्रं त्वं च । [उभयोः] विशेषमाह–वज्र [तपोवीर्यमहत्सु] तपोबलदुर्जयेषु मुनिषु[2] कुण्ठं भग्नम्[3]शक्तम् । मुनिषु[4] प्रहर्तुमशक्यत्वात् । त्वं पुनः [सर्वतोगामि] सर्वविषयमस्त्रम् तापसेष्वपि रागोत्पादनात् । कुलिशं[5] तु 'लिश गतौ' [धा० पा० १४२२] कुषु त्रिजगत्सु लिशति गच्छतीति कुलिशमिति स्वरूपेणासामान्योक्तिः । त्वं च कीदृशः । भवान् तेजस्वी भा दीप्तौ [धा० पा० १०५१] भातीति भातेर्डवतुः । अस्त्रापेक्षया भूतसमुच्चयः[5] । साधकं कार्यनिष्पादकमिति[6] ॥१२॥

१ सुघटम्—ल न व ब शा मुशा    २ तापसेषु—भ न शा मुशा
३ 'भग्नम्'-नास्ति–न ब शा मुशा    ४ तापसेषु–शा मुशा    ५...५ 'कुलिश समुच्चय'–नास्ति–शा मुशा    ६ 'अस्त्रापेक्षया अस्त्रवत्वात्'–अपा–न, शा, मुशा, अस्त्रापेक्षया स्थितित्वम्–न. ल ब. व

अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥१३॥

अवैमि त इत्यादि ॥ तथा च ते सारं बलं [अवैमि] जाने । अतः त्वां [गुरुणि] महति कार्ये[1] [आत्मसमम्] आत्मानमिव [नियोक्ष्ये] व्यापारयिष्ये[2] । तथा च [भूधरताम्] अखिलो[3]र्वीवहने शक्तिम्[4] [अवेक्ष्य] आलोक्य

१ 'इत्थे'–अपा–न ब भ ल मुशा    २ व्यापारये–न. ल ब शा मुशा
३ निखिल०–भ न ब शा, मुशा    ४ ०वहनसमर्थत्वम्–मुशा

विष्णुना [देहोद्वहनाय] आत्मवपुर्धारणार्थम् [शेषः] अनन्तः [व्यादिश्यते] आज्ञाप्यते[५] । भुवं धारयतीति भूधरः[६] । बहुलमन्यत्राऽपि[७] ॥१३॥

५ नियोक्ष्ये इति 'स्वराद्यन्तोपसृष्टात्' [महा० भा० १–३–६४] इत्यात्मनेपदम् । –न व भ ल शा मुशा ६ व्याकरणदृष्ट्या समीचीन पाठ 'धरतीति धर, भुव धर भूधरः' इति । ७ 'सञ्ज्ञाच्छन्दसा इति णिलुक्'–अपा–शा मुशा

आशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामी[१]प्सितमर्थमत्र[२] ॥१४॥

१ ०मुच्चैस्तरामी०–अ ना २ ०नमेतदेव–म

आशंसतेत्यादि ॥ [त्वया] भवता [वृषाङ्के] हरे [बाणगतिं] शरप्रसरम् [आशंसता] कथयताधुना [कार्यं] प्रयोजनं [नः] अस्माकं [प्रतिपन्नकल्पम्] अङ्गीकृतम्[१] । यतः यज्ञांशभुजां देवानाम् [ईप्सितम्] अभिलषितम् [अर्थं] कृत्यम् अत्र निबोध जानीहि । यत उच्चैर्द्विषां बलवदरीणामिति भङ्ग्या तमेवार्थं सूचयति । निबोधेति[२] भौवादिकस्य रूपम् । कष्टादयमर्थः[३] ॥१४॥

१ अङ्गीकृतप्रायम्–न ल व शा मुशा २ .२ 'बुध बोधने' [धा पा०–८७५] इत्यस्य स्वरितेतो निबोधेति रूपम् । –ना मुशा

कस्मादयं हरायत्तोऽर्थ एषामित्याह[१]—

अमी हि वीर्यप्रभवं हरस्य[२] जयाय सेनान्यमुशन्ति देवाः ।
स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥१५॥

१. ०यत्त प्रयोजनमा०–ना मुशा २ भवस्य–म. मुशापाटी

अमी हीत्यादि ॥ अमी देवाः हरस्य [वीर्यप्रभवं] रेतःसमुद्भवं [सेनान्यं] दण्डनायकं[१] [जयाय] जयार्थम् उशन्ति वाञ्छन्ति । स च[२] [त्वदेकेषु-

१. सेनापतिम्—न व भ व शा मुशा २ 'हर'–अ ना –शा मुशा

निपातसाध्यः] त्वदीयैकशरनिक्षेपेण[3] [साध्यः] चालयितुं शक्यः, कलनीयः । यतः ब्रह्मणि आत्मविज्ञाने [योजितात्मा] नियोजितात्मा, आत्मनिक्षिप्तचेताः । अतश्च त्वदन्यः कः वशीकर्तुमीशो भवेत् । तथा ब्रह्माङ्गभूस्तनूजो यस्य स ब्रह्माङ्गभूः । ब्रह्मणो वा अङ्गभूरिति केचित् । वयं तु ब्रूमः । ब्रह्मणोऽङ्गानि[4] पञ्चपट् मन्त्रविशेषाः शैवागमप्रसिद्धा[5]स्तेषां भूः प्रभवः, तेषां तत्सम्भवत्वा[6]न्मन्त्राणाम् । वशन्तीति 'वश कान्तौ' [धा. पा. १०८०] ॥१५॥

३. त्वदीयेनैकेनैषेपुनिपातेन—शा मुद्रा  ४ ब्रह्माण्यङ्गानि च—भ. न य. ल. व, शा. मुद्रा  ५ शैवप्रसिद्धा—न व य, नास्ति—शा मुद्रा. ६ तत्प्रभवत्वात्—य व शा. मुद्रा, तत्परत्वात्—न

तस्मै हिमाद्रेः प्रयतां तनुजां यतात्मने[1] रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवा हि दिष्टम्[2] ॥१६॥

१ जितात्मने—स  २ भुवोपदिष्टम्—म स व

तस्मै हिमाद्रेरित्यादि ॥ अतश्च तस्मै हराय [हिमाद्रेः तनुजां पार्वतीं [रोचयितुम्] अभिलषयितुं [यतस्व] यत्नं कुरु हि यस्मात् [योषित्सु] स्त्रीषु मध्ये [तद्वीर्यनिषेकभूमिः] तस्य हरस्य शुक्र[1]क्षेपोर्वी सा एव क्षमा इति [आत्मभुवा] ब्रह्मणा [दिष्टं] दृष्टं वा । ननु[2] रम्भादिषु दिव्यनारीषु विद्यमानासु सतीषु कथं तस्य रुच्यर्यं सैवेत्याशङ्क्याह [योषित्सु] स्त्रीषु मध्येत्यादि ।[2] यतात्मने इति तद्व्यापारस्येन सामर्थ्यमाह । [यतस्व] न हि सनियमस्य[3] स्वयं प्रवृत्तिः । तस्मै इति 'रुच्यर्थानां प्रीयमाणः' [पा० सू० १-४-३३] इति चतुर्थी[4] ॥१६॥

१ ध्यम्यक्शुक्र०—शा मुद्रा  २......२ 'ननु रम्भादि'—नास्ति—शा. मुद्रा  ३ सनियमयो—व. शा मुद्रा, सनियमाया—त्र  ४. सम्प्रदानत्वम्—व. शा मुद्रा 'केचित् भुवा हि दिष्टम् इति पठन्ति'—अपा—व.

न चासौ दूरस्था येन तद्रोचने[1] दुष्करा स्यादित्याह—

गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।
अन्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः ॥१७॥

१. रोचना—शा. मुद्रा.

गुरोर्नियोगादित्यादि ॥ गुरोः [नियोगात्] पितृनिर्देशेन [नगेन्द्रकन्या] पार्वती स्थाणुं[1] तपस्यन्तम् [अन्वास्ते] सेवते। इति अप्सरसां [मुखेभ्य] मुखात् [श्रुतं] आकर्णितम्। ननु भवतामग्रे ताभि कथं निवेदितमित्याह। यस्मात् [स॰ वर्गः] असौ सुरवधूसमूह[2] मत्प्रणिधि मम चरः। अधित्यका अद्रेः उपरितनभूमौ[3] ॥१७॥

१ पिनाकिनम्—व न शा मुद्रा   २ सुरवधूसाय—व ल. भ न
३ उपाधिभ्यां त्यकन्नासन्नारूढयो [पा० सू० ५-२-३४]। च शब्द पूर्वापेक्षया समुच्चये, एवमन्यत्र।' —अपा.—व न भ व शा मुद्रा, प्राय भिन्न पाठ मुद्रितशारदायाम।

तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोयमर्थोत्तर[1] भव्य एव।
अपेक्षते प्रत्ययमङ्गलब्ध्यै[2] बीजाङ्कुरः प्रागुदयादिवाम्भः ॥१८॥

१ अर्थान्तरभाव्य—म अ ना अर्थान्तरभव्य—स   २ प्रत्ययमुत्तम त्वा—व म स अ ना

तद्गच्छेत्यादि ॥ हे अर्थोत्तर प्रधानप्रयोजन काम [तद्] तस्मात् सिद्ध्यै सिद्धये [गच्छ] व्रज[1]। [देवकार्यं] सुरकृत्य [कुरु] विधेहि। यस्मादयम् अर्थ कुमारजन्मलक्षण. भव्य भविता एव। [2]कथं स्वयमेव न निष्पद्यत इत्याशङ्क्याह[2]। केवलम् अङ्गलब्ध्यै आत्मोत्पत्तये भवन्तं प्रधान[3] प्रत्ययं कारणं [अपेक्षते] प्रार्थयते। यथा[4] कुम्भकारकरव्यापारपरम्पराप्रचलित दण्डचक्रचीवरादयो घटस्य निष्पत्तये सहकारकारणानि तथा त्वमेव तस्मिन्[4]। [उदयात्] बीजाङ्कुरोत्पत्ते [प्राक्] पूर्वम् [अम्भ इव] जलमिव। उपादानकारणाद् बीजाङ्कुरेण भाव्यमेव, तोयं तु सहकारि[5], तेन विना नासौ भवितु शक्नोति। तत्र तस्यापेक्षया। भव्य शब्द कर्तरि निपात[6] ॥१८॥

१ प्रयाहि—व व भ शा मुद्रा   २ कथ आह—नास्ति—व न भ व शा मुद्रा   ३ 'भवन्त प्रधानम'—नास्ति—व न भ व   ४ 'यथा त्वमेव तस्मिन्—नास्ति—व न भ. व ना. मुद्रा   ५ सहकारिकारणम्.—व भ सहकारिणम्—मुद्रा   ६ कर्तरीति—भ कर्तरि निपातित —व व—ना मुद्रा —कर्तरि साधित —न, कर्तरि भविष्यति इति निपातित —ल [द्र पा० सू० ३-४-६८]

इदानीमुत्साहयन्नाह[1]—

अस्मि[2]न्सुराणां विजयाभ्युपाये तवैव नामा[3]स्त्रगतिः कृती त्वम् ।
अप्यप्रसिद्धं[4] यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥१९॥

१. वाक्यद्वयमाह-व भ शा. मुशा. 'इदानी ..आह'—नास्ति-व. २. तस्मिन्—म. ३. नामा०—व. स. ४ अपि प्रसिद्धम्—स मुशापाठौ.

अस्मिन्नित्यादि ॥ [सुराणां] देवानां [विजयाभ्युपाये] विजयोपाये [अस्मिन्] हरे तवैव [नाम] अस्त्रगतिः[1] । अतश्च कृती कृतार्थः प्रवीणः त्वम् । यस्मात्[2] अप्रसिद्धं स्वल्पमपि कर्म यावत् अनन्यसाधारणम् अन्येन कर्तुमशक्यं तदपि [ कर्तुं यशसे] यशस्कारि, किं पुनर्महत् । [3]ननु तावत् प्रायेण यशोधनानां तापसेष्वभिचारको बाणप्रसरस्त्याज्यत्वात् तुच्छोऽकीर्तये भवेत् । तदेतन्न युक्तमित्याह । यस्मात् अप्रसिद्धम् अपि स्वल्पमपि [यशसे] कीर्तये[3] ॥१९॥

१ 'न स्वव्यस्य'—अपा—व न भ. ल. व., शा मुशा. २. तस्मात्—न. नामशब्दः न ३ ३ 'ननु...कीर्तये'—नास्ति—व न ल. व. शा. मुशा. नामशब्दः सभावने, तवैतत्कर्म सभाव्यमित्यर्थः । हरस्य विजयोपायत्वमत्रकारण कारणत्वात् । कृतमस्यास्तीति कृती कृतार्थ ।'—अपा.-व. न भ. ल. शा मुशा

सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म न चातिहिंस्रमहो बतासि[1] स्पृहणीयवीर्यः ॥२०॥

१. ययासि—अ ना

सुरा इत्यादि ॥ अहोबत[1]शब्दावेकार्थावत्र विस्मयाधिक्यं ब्रूत ।[1] महदाश्चर्यमेतत् यत् त्वं [स्पृहणीयवीर्यः] अभिलषणीयपराक्रमः । तथा हि सर्व एव[2] [सुराः] देवाः महाप्रभावाः एते [समभ्यर्थयितारः] अर्थिनः । [त्रयाणां विष्टपानां] त्रिभुवनस्य [कार्यं] प्रयोजनम् । तत्रापि [ते] तव [चापेन] धनुर्मात्रेण कर्म व्यापारः । तदपि न [अतिहिंस्रं] हिंसात्मकं प्रत्युत प्रीतिकारि ॥२०॥

१. विस्मये—शा. मुशा. २. एवैते—व.

तव[1]प्रसादाादत्युद्दिश्य तमाह[2]—

मधुश्च ते मन्मथ साहचर्यादसावनुक्तोऽपि सहाय एव ।
समीरणः प्रेरयिता[3] भवेति व्यादिश्यते केन हुताशनस्य ॥२१॥

१. भवत्प्र०—शा. मुद्रा. २. आह—शा. मुद्रा. ३. नोदयिता—म. शा. चोदयिता—मुद्रा अ. ना.

मधुश्चेत्यादि ॥ मदाज्ञां विनापि हे मदन अयं [मधुः] वसन्तः [अनुक्तः] अयाचितः अपि [साहचर्यात्] सहचरत्वात्[1] सहाय एव, न तूदासीनः । तथा हि [हुताशनस्य] अग्नेः [प्रेरयिता] उद्दीपयिता भव इति केन [समीरणः] वायुः [व्यादिश्यते] आज्ञाप्यते । तौ किल सहचरौ । नहि वातं विनाग्निर्ज्वाज्वल्यते[2] । सह साकमयते इति सहायः ॥२१॥

१. 'तव'–अपा –म शा मुद्रा २ ज्वलति—न. व., ज्वल्यते—शा. मुद्रा.

तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।
ऐरावणा[1]स्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥२२॥

१ दिग्वारणा०—व. स. शा. मुद्रा., ऐरावता०—म.

तथेतीत्यादि ॥ तथा इति एवमस्तु सम्पादयामि त्वदादेशमिति [मूर्ध्ना] शिरसा [भर्तुः आज्ञां] स्वामिनिदेशं [शेषां] माल्यम् इव [मदनः] स्मरः [आदाय] गृहीत्वा [प्रतस्थे] प्रययौ । प्रसाददत्ता मङ्गलार्थं माला शेषे[1]त्युच्यते । इव सहार्थे, शेषामिव मालया सह । साम्प्यादायेत्यर्थः । प्रयाणकाले हि माला दीयत इति स्थितिः । तस्य च प्रजतः अङ्गं स्पृष्टं शिरो वा प्रीतिसूचनार्थम् । [हस्तेन] पाणिना [इन्द्रः] शक्रः पस्पर्श परामृशत् । कीदृशेन । [ऐरावणास्फालनकर्कशेन][2] ऐरावणस्य[3] प्रोत्साहनेन तेजो विवृद्धये यच्चास्फोटस्तद्वशात्कठोरेण ॥२२॥

१ शेषा, तामिवेति महोक्तिः—व. न. व. ल., शा. मुद्रा. २. यदास्फालन-माघातस्तद्वशात्कर्कशेन कठोरेण—व. ल न, शा. मुद्रा. ३. दिग्वारण ऐरावणस्तस्य—शा. मुद्रा.

स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः ।
अङ्ग[1]व्ययप्रार्थितकर्म[2]सिद्धिः स्थाण्वाश्रमं हैमवतं जगाम ॥२३॥

१. स्वाङ्ग०-स.  २ ०कार्य०-म चा

स माधवेनेत्यादि ॥ स कामः स्थाण्वाश्रमं हराश्रमं[1] [जगाम] ययौ । कीदृशम् हैमवतम् । कीदृशेन [अभिमतेन] इष्टेन [सख्या] मित्रेण [माधवेन] वसन्तेन रत्या जायया च विषममिदं कर्म संदिग्धमुत्तरणमिति साशङ्कम् [अनुप्रयातः] अनुगतः । साशङ्कं सभयम् यतः [अङ्गव्ययप्रार्थितकर्मसिद्धिः] देहनाशेनापि प्रार्थिता[2] चिकीर्षिता कर्मसिद्धिर्येन । मरणमप्यङ्गीकृत्यावश्यं सुरकार्यं करवाणीति । अत एव तयोर्भयम्[3] । माधवशब्दो वसन्तेऽपि प्रवृत्तः[4] ॥२३॥

१. हिमवद्भव हरतपोवनम्—शा मुना  २ 'अङ्गव्ययेन'—अपा –न व व शा. मुना  ३. एवाशङ्का—व न व. ल, शङ्का—शा मुना. ४ 'मधोर्ञ् च' [पा. सू ४–४–१२९] मधुमाधवेयोर्जादय सुकविपरम्परया भाषायामपि प्रयुज्यन्ते । –अपा –शा मुना

तस्मिन्वने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलवर्ती[1] ।
संकल्पयोनेरभिमानभूतमात्मानमाधाय[2] मधुर्जजृम्भे ॥२४॥

१ समाधिप्रतिकूलवृत्ति—अ ना  २ ०मादाय—व. अ ना मुनापाठी

तस्मिन्वने इत्यादि ॥ ततः [तस्मिन् वने] तदाश्रमे[1] मधुः पुष्पादिरूपेण आत्मानम् आधाय उत्पाद्य जजृम्भे उल्ललास । तत्र वनेऽकाले वसन्तः प्रादुरभूदित्यर्थः[2] । कीदृशः । [संयमिनां] शान्तानामपि [मुनीनां] ऋषीणां [तपःसमाधेः] तपसः समाधेश्च मनसः[3] ऐकाग्र्यं समाधिः ।[4] प्रतिकूलवर्ती विपक्षः । उत्कण्ठाजननात् । तं तु संकल्पयोनेः मनोभवस्य अभिमानभूतं दर्पकल्पं दर्पमिव, औपम्ये भूतशब्दः । तद्वशात् तस्य दुर्जयत्वात्[5] ॥२४॥

१. तत्राश्रमे—व न भ. शा मुना  २. प्रादुर्बभूव—व न. शा. मुना  ३ ३. 'मनस समाधि'—नास्ति—शा मुना.  ४ समाधिरेकाग्रता–अपा.–शा मुना, 'ध्यान धारणा समाधिरिति त्रयाणामेकत्र संयम । तपोर्थं जपोपवासाद्यर्थं समाधिरेकाग्र्य तस्य प्रतिपक्षभूत –अपा –शा

तमेव मधुमधुना वर्णयितुमुपक्रमत[1] इत्यादि—

कुबेरजुष्टां[2] दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलंघ्य ।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥२५॥

१ मुपक्रमते—शा मु॰   २ ०गुप्ताम्—भ स, ०नाथाम—अ ना

कुबेरजुष्टामित्यादि ॥ दक्षिणा दिग् अपाची मुखेन वक्त्रेण गन्धवहं वातम् उत्ससर्ज चिक्षेप । यतो हि मलयाचलान्मारुतो[1] वहति[2] । कदा समयं कालं विलंघ्य अतिक्रम्य । क्व सति । कुबेरजुष्टां धनदाध्युषितां [दिशम्] आशाम् [उष्णरश्मौ] सूर्ये [गन्तुं] यातुं [प्रवृत्ते] प्रस्तुते सति । वसन्ते ह्युत्तरां दिशं रविः सेवते । तदा तस्य तां सेवितुमकालो दक्षिणायनस्य प्रस्तुतत्वात्[3] अतश्चोत्प्रेक्षते[4] । व्यलीकनिःश्वासम् इव मन्यूच्छ्वासमिव, प्रियकृतापराधनिःश्वसितमिव । यदा हि नायकः समयं शपथं व्यतिक्रम्य कुबेरेण निन्द्यवपुषा सेवितां हीनाङ्गनां रागेण गच्छति, तदा दक्षिणा अनुकूला नायिका मन्युना निःश्वसिति । बेरं शरीरम्[5] ॥२५॥

१ मलयमारुतो—शा मु॰   २ भवति—न   ३ प्रकृतत्वात्—भ ब ना मु॰ प्रवृत्तत्वात्—न   ४ त्प्रेक्ष्यते—भ ल मु॰   ५ 'व्यलीकं प्रियकृतापराधः । गन्धवहादयः पर्यायाः द्रष्टव्याः'—अपा —शा मु॰

असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण ॥२६॥

असूतेत्यादि ॥ [अशोकः] अशोकतरुः [सद्यः] सपदि [स्कन्धात्] विटपात् । [प्रभृति] आरभ्य [कुसुमानि] पुष्पाणि [सपल्लवानि] सपत्राणि[1] असूत[2] मुमोच । कालस्य बलवत्तयासौ [आसिञ्जितनूपुरेण] रणितमञ्जीरेण [सुन्दरीणां पादेन] युवतिचरणेन [संपर्कं] प्रहारं न [अपैक्षत] आर्थयत । नूपुरालक्तकपादताडितो ह्यसौ पुष्यति ॥२६॥

१ पत्रसहितानि—न ब ना मु॰   २ उदपादयत्'—अपा —ब ना मु॰

सद्यः[1] प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥२७॥

१ सद्य—भ ब ल

सख्युः प्रवालेत्यादि ॥ [नवचूतबाणे] नवं चूतकुसुममेव बाणः शरः कामस्य तस्मिन् [समाप्ति नीते] समाप्ते[1] समग्रे जाते मधुः [द्विरेफान्] अलीन् [निवेशयामास] न्यवेशयत्[2]। उत्प्रेक्षते[3]। सख्युः [मनोभवस्य] चेतोभुवः नामाक्षराणि इव संज्ञालिपिरिव[4]। शरे हि स्वामिनो नाम लिख्यते । शरे[5] च पत्रै[6]र्भाव्यम् । तत्र [प्रवालोद्गमचारुपत्रे] प्रवालोद्गमः किशलयाविर्भाव एव चारूणि पत्राणि यस्य* ॥२७॥

१ समापिते–अपा –ब न. ल ब, शा मुशा  २. निवेशयत–भ ल ब
३ उत्प्रेक्ष्यते–न  ४ वर्णानिव–ब न ल, शा मुशा, संज्ञावर्णानिव–ब
५ बाणे–ब न ब शा मुशा  ६ पक्षी०–ब न ल ब, शा मुशा.
■ 'तस्मिन्'–अपा –न ब ल म ब, यस्मिन्–शा मुशा

वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया[1] स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥२८॥

१ निर्ग-धमिति–शा मुशा

वर्णप्रकर्षे इत्यादि ॥ [कर्णिकार] कर्णिकाराख्यं पुष्प[1] [वर्णप्रकर्षे] रूपसौन्दर्ये सति अपि [निर्गन्धतया] असुरभित्वात् [चेतः] मनः दुनोति स्म, अपीडयत् । सुगन्धिस्तर्हि कथं नाकारीत्याह । गुणानां सामग्र्यविधौ] साकल्यकरणे प्रायेण [विश्वसृजः] वेधसः [पराङ्मुखी] विमुखः [प्रवृत्तिः] प्रसरः । न ह्यसौ सर्वान् गुणानेकत्र कुरुते । अर्थान्तरन्यास[2]। अत्र चान्यदुपक्रान्तमन्यच्चार्थान्तरन्यस्तम् । अतश्चैवं वक्तव्यम्—

'मुख्येन हीनं गुणिनं गुणेन दृष्ट्वा न तप्येत हि क सचेता ।'

यदि वा—

'तेनैव सर्वो रमते गुणेन येनाशु राजन्ति गुणान्तराणि' ॥२८॥

१ कर्णिकारकुसुमम्–ल  २ अर्थान्तरन्यासभासश्चाय बोद्धव्यो न त्वर्थान्तरन्यास, तदर्थरहितत्वात् । प्रधानार्थसमर्थको हि साधर्म्यवैधर्म्याभ्यामर्थान्तरन्यास । –ब ब, अर्थान्तरभागश्चाय बोद्धव्यो न तु मुख्य., व्यवहितत्वात् । प्रधानार्थसमर्थको हि साधर्म्यवैधर्म्याभ्यामर्थान्तरन्यास –न ल, अर्थान्तरन्यासाभावश्चाय बोद्धव्य, मुख्यविहितत्वात्–म.

बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥२९॥

बालेन्दुवक्रेत्यादि ॥ पलाशानि पलाशकोरकाणि[1] बभुः रेजिरे । कीदृशानि । अविकासभावात्[2] [बालेन्दुवक्राणि] नवेन्दुकला[3]कुटिलानि [अतिलोहितानि] स्वभावाच्चातिरक्तानि । अतश्चोत्प्रेक्षते । पतिनिभेन[4] वसन्तेन सुरभिणा [समागतानां] सङ्गतानां [वनस्थलीनां] काननवधीनां सद्यः तत्क्षणं दत्तानि नखक्षतानि इव । करजपदानि हि वक्राण्यतिरक्तानि[5] च भवन्ति ॥२९॥

१ पुष्पाणि–न, ब भ ल ब २ 'अविकासात्'–अपा –शा मुद्रा
३ शशिकला–न ब भ ल ब शा मुद्रा ४. पतिना–न ब ब भ.
५ वक्राणि लोहितानि–न. ब ल भ ब शा मुद्रा

लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं निवेश्य[1] ।
रागेण बालारुण[2]कोमलेन चूतप्रवालोष्ठमलंचकार ॥३०॥

१ प्रकाश्य–ब म. अ. ना २ ०बालातप०–शा. मुद्रा

लग्नेत्यादि ॥ मधुश्रीः वसन्तलक्ष्मीः मुखे प्रारम्भे [तिलकं] तिलकाख्य पुष्पं वृक्षं वा निवेश्य रचयित्वा । ततः [बालारुणकोमलेन] अभिनवारुण[1]-सदृशेन रागेण लौहित्येन [चूतप्रवालोष्ठं] चूतकिसलयाधरम् अलंचकार प्राभूषयत्[2] । कीदृशं तिलकम् । [लग्नद्विरेफाञ्जनभक्तिचित्रम् ] लग्ना ये द्विरेफा भ्रमरास्त एव कार्ष्ण्यादञ्जनभक्तिः कज्जलविच्छित्तिस्तया चित्रं रम्यम् । तिलकं परागनिर्भरत्वादलिवृन्दसेव्यम् । चूतं च किशलयितमिति वाक्यार्थः । यापि नायिका[3] विलासान्विता सा शोभार्थमञ्जनबिन्दुविचित्रमुखे तिलकं विशेषकं निवेश्य ताम्बूलादिरागेणोष्ठमलंकुरुते । कोमलं सदृशम्[4] ॥३०॥

१ ०नवातप०–शा मुद्रा २. अभूषयत्–ब. न ल शा मुद्रा ३ नारी–न ल. ब. भ शा मुद्रा ४ कोमल सदृश –ल ब शा. मुद्रा, सदृशमत्र–न भ. ब

मृगाः प्रियाल[1]द्रुममञ्जरीणां रजःकणैर्विघ्नितदृष्टिपाताः।
मदोद्धता प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥३१॥

१ प्रियाल०—शा मुद्रा पियाल०—म

मृगा इत्यादि ॥ [मदोद्धताः] मदप्रचण्डाः [मृगाः] हरिणाः प्रत्यनिलं वाताभिमुखं [वनस्थली] काननानि[1] विचेरु बभ्रमुः। वातमनुव्रजत्वात्[2]। कीदृशाः। प्रियालद्रुम[3]मञ्जरीणां [रजःकणैः] रेणुलवैः [विघ्नितदृष्टिपाताः] विघ्नितः प्रतिहतो दृष्टिपातो नेत्रक्षेपो येषां, वातेन रजोतिभरत्वात्,[4] प्रतिहतनेत्रप्रसराः। [5]तर्हि कथं तदभिमुखं बभ्रमुरित्याह। मदोद्धताः मदप्रचण्डाः। मत्तो हि मृगः वातं प्रतिधावतीति स्वभावः[5]। [वन ?] स्थली कीदृशीः। [मर्मरपत्रमोक्षाः] मर्मर सशब्दपत्रमोक्षः पर्णपातो यासाम्। तदा हि शुष्काणि पर्णानि[6] निपतन्ति नवानि च जायन्ते ॥३१॥

१ कानने—न २ वातमनुमुखत्वात—न व ▪ भ शा मुद्रा
३ प्रियालवाक्यतरु०—शा मुद्रा ४ वातस्य परागनिभरत्वात्—न व भ ल शा मुद्रा ५ ५ 'तर्हि .स्वभाव.'—नास्ति—व न भ व ल शा मुद्रा ६ पत्राणि—शा मुद्रा

चूताङ्कुरस्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥३२॥

चूताङ्कुरेत्यादि ॥ [पुंस्कोकिल] कोकिलयुवा यन्मधुरं चुकूज मनोज्ञं ववाशे चूताङ्कुरस्वादकषायकण्ठ मधुरगलः तदेव [मनस्विनीमानविघातदक्षं] मानिनीरोष[1]विनाशचतुरम्। [स्मरस्य] कामस्य [वचनम्] अनुनयवाक्यं [जातं] सम्पन्नं, तदाकर्णनेन प्रियेषु संमुखत्वात्[2]। वर्णवद् रसोऽपि कषायः। कण्ठादीनां कषायकटुकमधुरादिव्यवहारः औपचारिकः। पुंस्कोकिलशब्दे पुंशब्दो विस्पष्टार्थः ॥३२॥

१ ०मान०—व शा मुद्रा २ समुखीभावात्—न. ल भ व शा मुद्रा

हिमव्यपायाद्विशदाधराणामापाण्डुरी[1]भूतमुखच्छवीनाम् ।
स्वेदोनवः[2] किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥३३॥

१ ०पाण्डरी–म. ब ना. २. स्वेदोद्गमः–म. अ. ना.

हिमेत्यादि ॥ [किंपुरुषाङ्गनानां] किन्नरीणां [विशदाधराणां] निर्मलोष्ठीनां [पत्रविशेषकेषु] पत्ररूपेषु विशेषकेषु तिलकेषु स्वेदोनवः नूतनः स्वेदः पदं चक्रे स्थानं व्यदधात्। प्रथमं तत्र सुदर्शनत्वात्। कीदृशीनाम्। हिमव्यपायाद् शीतापगमात्[1] [विशदाधराणां] निर्मलोष्ठीनाम्। हेमन्ते हि अधरयोराभिजात्याद् विवर्णता जायते। तथा [आपाण्डुरीभूतमुखच्छवीनां] किञ्चित्पाण्डुरिता वदनकान्तिर्यासाम्। नन्वाकालिकत्वात्, पत्रस्यतिलकेषु शीतापगमात् पूर्वं[2] तुषारकालस्याभावात् कथमत्र तद्धर्मवर्णनम्[3]। सत्यमेतत्, किन्तूपक्षेपमात्रेणासामायिकत्वमपि वसन्तावतारं विधायानन्तरं सामान्यरूपेणैवं वर्णयतीत्यदोषः ॥३३॥

१. तापागमात्–न ब. म.॰ब. २. मधुप्रवृत्ते.–अपा. ब. न. म. शा मुद्रा.
३ हिमवर्णनम्–न ल. भ. ब. व ४ सामायिकत्वमभिधायानन्तरम्–शा. मुद्रा.

तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसंस्तम्भितविक्रियाणां कथंचिदीशा मनसां बभूवुः ॥३४॥

तपस्विन इत्यादि ॥ स्थाणुवनौकसः हराश्रमनिवासिनो मुनयः ताम् आकालिकीम् असमयजां [मधुप्रवृत्तिं] वसन्ताविर्भूतिं [वीक्ष्य] आलोक्य[1] [कथंचित्] कृच्छ्रेण [मनसा] चेतसाम् ईशाः वशयितारो रक्षितारः बभूवुः अभवन्। यतो मधुकालस्य बलवत्त्वात् [प्रयत्नसंस्तम्भितविक्रियाणां] प्रयत्नेन संस्तम्भिता प्रशमिता विक्रिया विकारो येषां मनसाम्। ईशत इति ईशाः प्रभवः। अकाले भवा आकालिकी। अध्यात्मादित्वाद् ठक्[2] ॥

१. अवलोक्य–न. व. ल. भ. ना. मुद्रा. २. 'आकालिकडाद्यन्तवचने' [पा॰ सू॰ ५–१–११४] इत्येतस्यात्र न सङ्गतार्थम्–शा. मुद्रा.

तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥३५॥

तं देशमित्यादि ॥ [आरोपितपुष्पचाप] आरोपित सज्जीकृत पुष्पमय चाप येन तस्मिन् [मदने] स्मरे [रतिद्वितीये] रतिसहिते अथ च सपत्नीके। तथा[1] च पत्न्यामपि द्वितीयादभेदेऽपि पवित्रे[1] । त देशम् आश्रमे [प्रपन्ने] प्राप्ते सति मृगहरिणहंसादीनि [द्वन्द्वानि] मिथुनानि भावम् अभिप्राय क्रियया कर्मणा विवव्रु प्रकटीचक्रु आचचक्षु । कीदृशम् । [काष्ठागतस्नेहरसानुविद्धं] काष्ठा परा कोटि गत प्राप्तो योऽसौ स्नेह प्रीतिस्तथा रसश्च रागश्च ताभ्यामनुविद्ध भावित रतिरागसहित[2] मित्यर्थ ॥३५॥

१ १ तथा पवित्र –नास्ति–व म भ क ब ना मुशा २ ०गभित०– व न भ ब ल था मुशा

क्रियया विवव्रु '[कुमार ३–३५] इति सामान्येनोक्तं' तदेव विशेषेणाह––

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृंगेण संस्पर्श[2]निमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥३६॥

१ इत्युक्तम–शा मुशा २ च स्पश०–म भ ना चा मुशा

मधु द्विरेफ इत्यादि ॥ [कुसुमैकपात्रे] कुसुममेवैक साधारण पात्रं चषक तत्र [स्वा प्रिया] भ्रमरीम् [अनुवर्तमान ] सह [द्विरेफ ] मधुप[1] [मधु ] मकरन्द [ पपौ ] अपिबत् । तथा [कृष्णसार ] कृष्णसाराख्यो मृगश्च [संस्पर्शनिमीलिताक्षीं ] सस्पर्शमुकुलितलोचना[2] [मृगीं] प्रिया [शृङ्गेण] विषाणेन अकण्डूयत अकषत् । सहपान कण्डूयनं च रिरंसासूचकम् । तयोरेवानुवर्तन चित्तग्रहणमावर्जनं वा । अकण्डूयतेति[3] कण्ड्वादिभ्यो यक्' [पा० सू० ३–१–२७] अकण्डूयतेति कर्तरि लङ् । कृष्णाश्चासौ सारश्चेति विगृह्य 'वर्णो वर्णेन' [पा० सू० २–१–६९] इति समास ॥३६॥

१ मधुक –व क २ ०नयनाम–न भ ल व सा मुना ३ कर्तरि जित्वात्'–अपा –ना मुना

ददौ सरः[1]पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥३७॥

१ रसात्पङ्कज० म स

ददौ स इत्यादि ॥ करेणुः करिणी [गजाय] पत्ये गण्डूषजलं मुखास्थं ददौ व्यसरदपीप्यत्[1] । कीदृशम् । [सरःपङ्कजरेणुगन्धि] सरसि पङ्कजानि पद्मानि तेषां रेणुः परागस्तद्गन्धो विद्यते यत्र तत् सरसिरुहपरागपरिमलम् । रथाङ्गनामा चक्रवाकः अर्धोपभुक्तेन सामिभुक्तेन बिसेन मृणालेन [जायां] प्रियां [संभावयामास] आवर्जयत्[2] ॥३७॥

१ ०यभजत–व भ   २ आवर्जयामास –अपा –भ

गीतान्तरेषु[1] श्रमवारिलेशैः किञ्चित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्ब[1] ॥३८॥

१ गीतान्तरे च–ना मुना   १ चुचुम्ब–म

गीतान्तरेष्वित्यादि ॥ गायन्त्याः [प्रियामुखं] प्रियाया वदनं [किंपुरुषः] किन्नरो रागात् चुचुम्ब पपौ । कीदृशम् । [किञ्चित्समुच्छ्वासितपत्रलेखं] स्वेदाम्बुकणैरीषत्समुच्छ्वासिता विकासिता पत्रलेखा यत्र तत् । तथा [पुष्पासवाघूर्णितनेत्रशोभि] पुष्पभावितेन मद्येन घूर्णिताभ्यां नेत्राभ्यां[1] शोभते यत् तत् तथोक्तम् । [गीतान्तरेषु] गीतमध्येषु[2] ॥३८॥

१ आघूर्णिताभ्यां भ्रमिताभ्यां नयनाभ्याम्–ना मुना   २ केचित्–गीतान्तरेषु 'गम' इति पठन्ति । –अपा –व भ ज गीतान्तरे गीतमध्ये–ना मुना

पर्याप्तपुष्पस्तबकस्तनाभ्यः[1] स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥३९॥

१ ०स्तनीभ्य–मुना म

पर्याप्तेत्यादि ॥ किं बहुना । आस्तां तावत्सचेतनाः, स्थावररूपाः तरवः अपि लतावधूभ्यः वल्लीजायाभ्यः सकाशात् विनम्रशाखाभुजबन्धनानि संकुचित[1]प्रतानबाह्वालिङ्गनानि [अवापुः] लेभिरे । ताभि[2] शाखाभिस्तानाश्लिष्यन्तो रोहन्ति । कीदृशीभ्य इति वधूसाधर्म्यमाह । [पर्याप्तपुष्पस्तबकस्तनाभ्यः] पर्याप्ताः परिपूर्णाः पुष्पस्तबकाः कुसुमगुच्छा[3] एव स्तना यासां ताः । तथा [स्फुरत्प्रवालोष्ठमनोहराभ्यः] स्फुरन्ति कम्पमानानि प्रवालानि किसलयान्येवाधरास्तैर्मनोहरा[4] ललिताः ताभ्यः ॥३९॥

१ आकुञ्चित०–भ ब, कुञ्चित०–न शा मुशा २ ता हि–व भ ब शा मुशा ३ ०गुल्माः–व शा मुशा, ०गुच्छा–न ४ मनोहराभ्यो रुचिराभ्य–व न भ ब ल शा मुशा

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥४०॥

श्रुताप्सर इत्यादि ॥ अस्मिन् क्षणे वसन्ताविर्भावसमये[1] हरः भगवानीशः[2] [श्रुताप्सरोगीतिः] निशमित[3]सुरललनागेयध्वनिः अपि प्रसंख्यानपरः समाधिनिष्ठः [बभूव] आसीत् । न त्वन्यत्रगतमनाः[4] । यस्माद् ये [आत्मेश्वराः] आत्मन[5]श्चित्तस्येश्वरा वशिनस्तेषां वसन्तादिउत्सवादयो विघ्नाः श्रेयःप्रत्यूहाः [समाधिभेदप्रभवः] समाधिभेदे नियमभङ्गे एकाग्रताभङ्गे प्रभव शक्ता न कदाचिदपि [भवन्ति] सम्पद्यन्ते[6] । आत्माधीनदेहात्र यतीन्द्रियाणि लक्ष्यन्ते ॥४०॥

१ ०काले–व न भ ब शा मुशा २ भगवान्भव–न ३ निशमित०–न, निष्करित०–शा मुशा ४ न तु विकृतमना–व न शा मुशा, नान्यगतमना–भ ५ यतात्मन–न भ ६. चलचित्तस्य हि विघ्नाविर्भावः । प्रसंख्यानादयो विक्षेपरूपा अपि काव्ये एकाग्रतालक्षणपरा' ।'–अधा–व न भ ब ल शा मुशा

लतागृहद्वारि[1] गतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान् व्यनैषीत् ॥४१॥

लतागृहेत्यादि ॥ [अथ] ततः नन्दी प्रतीहारः [गणान्] प्रमथान् [मुखार्पितैकाङ्गुलिसंज्ञया] वदननिहिततर्जनीसंकेतेन एव मा [चापलाय] चापलार्थं मा इति व्यनैषीत् न्ययमयत् । न किञ्चिद् व्याहर्तव्यम् । अकारणे प्रयत्नः[1] कीदृशः । असौ [नन्दी] लतागृहद्वारि गतः लतागृहस्य द्वारदेशे गतोऽवस्थितः प्रतीहारत्वात्, तस्य तथा [वामप्रकोष्ठार्पितहेमवेत्रः] वामप्रकोष्ठे गोलके कर्पूरांशमध्येऽर्पितो[2] निहितो हेम्नः सुवर्णस्य वेत्रं दण्डो येन । वेत्रं दारुविशेषस्तं च बाहुल्येन[3] द्वास्था गृह्णन्ति । सौवर्णादौ त्वौपचारिको वेत्रशब्दस्य व्यवहारः । 'प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः'[4] । अत्र चारुत्वार्थं[5] प्रतिभासादेकाङ्गुलिशब्दस्य प्रयोगं न साधु मन्यते । मूर्ध्नि सर्गे ह्येकाङ्गुलिशब्दसंकेतः[1] ॥४१॥

१ एवमकारप्रश्लेषेणात्र न किञ्चिदध्याहार्यं वर्तते'–अप –व न. व भ. शा मुद्रा
२ गोलाग्निम्–न भ व व शा मुद्रा ३ बाहुल्यार्थं–अप –श न
४ 'प्रकोष्ठ... बन्धयोः'–इति मात्य इति अमरकोषस्य रामश्रमीटीकायाम् उद्धृतम् । अमर० २–६–८०  ५ अता 'मुखाग्रसंस्थापिततर्जनीक' इति पाठो युक्त । –न शा. मुद्रा

निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।
तच्छासनात्काननमेव सर्वं चित्रार्पितारम्भ[1]मिवावतस्थे ॥४२॥

१. ०तारम्भ०-अ ना

निष्कम्पवृक्षमित्यादि ॥ ततो नन्दिनिर्देशात् [सर्वम्] सकलम् एव [काननं] वनं [चित्रार्पितारम्भम्] आलेख्यलिखितसंस्थानम् इव [अवतस्थे] संजातम् । तथा हि । [निष्कम्पवृक्षं] निश्चलानोकहं निभृतद्विरेफं विनीतचञ्चरीकं मूकाण्डजं निःशब्दशकुनि [शान्तमृगप्रचारं] निवृत्तहरिणादिभ्रमणम् । 'समवप्रविभ्यः स्थः' । [पा० सू० १–३–२२] इति वचनादवतस्थ इत्यात्मनेपदम् ॥४२॥

दृष्टिप्रदीपं[1] परिहृत्य तस्य कामः पुरः शुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥४३॥

१ ०प्रपातम्–म. स ०प्रतीपम्–अ ना

दृष्टिप्रपातमित्यादि ॥ ततः [कामः] मदनः [भूतपतेः] शिवस्य [ध्यानास्पदं] समाधिस्थानं [विवेश] प्रविवेश। [तस्य] भगवतः [दृष्टिप्रपातं] नेत्रज्योतिः पुरः शुक्रम् इव प्रयाणे परिहृत्य यथाऽसौ पुरो[1] न पश्यतीत्यर्थः। विजिगीषोरपि यात्रायां सम्मुखो भार्गवो नेष्यते। यदुक्तम्—

> 'प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च।
> अपि शक्रसमो राजा हतसैन्यो निवर्तते॥'

कीदृशम्। प्रान्तेषु पर्यन्तेषु[2] [संसक्तनमेरुशाखं] संसक्ता लग्ना नमेरुतरुशाखा यत्र ॥४३॥

१. भगवान्-अथा-ब भ. व. शा मुद्रा   २ निकटेषु-न ब भ ल. शा मुद्रा.

स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम्।
आसीनमासन्नशरीरपातस्त्रियम्बकं[1] संयमिनं ददर्श ॥४४॥

१ त्रिलोचनम्-ब.

स देवदार्वित्यादि ॥ स कामः तत्र संयमिनं नियमस्थं ध्यानासक्तं त्रियम्बकं त्रिनेत्रं [ददर्श] अद्राक्षीत्। कीदृशम्। [देवदारुद्रुमवेदिकायां] देवदारुद्रुमस्य वेदिकायाम् अवस्थितम् [शार्दूलचर्मव्यवधानवत्यां] व्याघ्राजिनाच्छादितायां, शार्दूलः चित्रको वा। आसीनम् उपविष्टम् [आसन्नशरीरपातः] आसन्नो निकटः शरीरपातो देहपतनो यस्येति कामविशेषणमिदम्। पादपूरणार्थम् इयादीनां छन्दसि विधानात् भाषायां त्रियम्बकशब्द इति प्रयोगो दुर्लभः। [तस्मात्] 'महेश्वरम्' इति पठनीयम्। '[1]त्रिलोचन इत्युपरचितन्यासेन तृतीयनेत्रत्वात्कामदेहदाहं सूचयति'[1] ॥४४॥

१...१. 'त्रिलोचन......सूचयति'-नास्ति-ब न भ व ल. शा मुद्रा

अथ श्लोकत्रयेण समाधिस्थं भगवन्तं वर्णयितुमाह—

पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम्[1]।
उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥४५॥

१ ०तायतं सन्नमित०-भ म

पर्यङ्कबन्धेत्यादि ॥ त्र्यम्बकं ददर्शेत्युक्तम् । तत्र तं कीदृशम्[1] । [पर्यङ्कबन्धस्थिरपूर्वकायं] पर्यङ्कबन्धेन वासुकिपर्यस्तिकारचनया[2] स्थिरो निश्चलः पूर्वकायो यस्य तम् । पूर्वकाय पूर्वभाग । पर्यङ्को नामासनविशेष । तथा [ऋज्वायतासन्नमितोभयांसम् ] ऋजू स्पष्टौ आयतौ विशालौ आ ईषत्सन्नमितौ सम्यक अन्यूनाधिक्तया नमितौ उभौ अंशौ यस्य येन वा तम् । तथा [उत्तानपाणिद्वयसंनिवेशात्] उत्तानस्योर्ध्वमुखस्य हस्तद्वयस्य सन्निवेशात् संस्थानाद्धेतो [अङ्कमध्ये] उत्संगान्तरे [प्रफुल्लराजीवमिव] विकसित नलिनम्[3] इव प्रफुल्ल राजीव यस्य तत् तथाविधमिति ॥४५॥

१ देव ददर्श'-अपा -व न म. व गा मुसा २ रचनेन-न ब व म धा मुसा ३ कुशेशययुतम-व म धा मुसा

भुजङ्गमो[1]न्नद्धजटाकलापं कर्णा[2]वसक्तद्विगुणाक्षसूत्रम् ।
कण्ठप्रभासङ्ग[3]विशेषनीलां मृग[4]त्वचं ग्रन्थिमतीं दधानम् ॥४६॥

१ ०मावद्ध०-व च ०मोद्वद्ध०-स २ करा०-च ३ ०भिन्न ०-स ०भङ्ग०—अना ४ कृष्ण०-म स

भुजङ्गमोन्नद्धेत्यादि ॥ अन्यच्च कीदृशम् । भुजङ्गमोन्नद्धजटाकलाप भुजङ्गमेनाहिना[1] उन्नद्ध ऊर्ध्वं बद्धो जटाजूटो यस्य येन वा तं तद् वा । [कर्णावसक्तद्विगुणाक्षसूत्रं] कर्णेऽवसक्तं लगित निहितं द्विगुणं द्विगुणी कृतमक्षसूत्रं जपमालिका येन तम् । अक्षपूर्णं सूत्रमक्षसूत्र द्विगुणत्व च तस्य सूत्रे ग्रन्थिवशाद् द्विगुणीकृत्य [कर्णे] प्रवेशात् । तथा [मृगत्वचं] मृगस्य त्वक् हरिणस्य चर्म[2] दधानम्[3] । कीदृशी त्वचम् [ग्रन्थिमतीं] ग्रन्थिर्विद्यते यस्यास्ता ग्रन्थिना आवृताम् । [कण्ठप्रभासङ्गविशेषनीलां] कण्ठकान्त्युपलेपेन चाधिकनीलाम्[4] ॥४६॥

१ वासुकिना-न व भ ल धा मुसा २ एणाजिन-भ ल धा मुसा ३ 'वसन'-अपा -भ 'परिदधतम्'-अपा न धा मुसा ४ कण्ठस्य । कृष्णया प्रभया अभ्यक्ता स्नपिता हरितामत एव विशेषनीलामधिककृष्णाम । देवो हि नीलगल । अभ्यक्तार्थोऽत्र गौण । अभ्यङ्गेति पाठे तृतीयासमास । ग्रथिमतीं स्वच्छदेन विधृताम ग्रन्थियुताम'-अपा -व -न व भ गा मसा

किञ्चित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्षी[1]कृतघ्राणमधोमयूखैः ॥४७॥

१. ०लक्ष्यी०—म स. शा मुशा

किञ्चित्प्रकाशेत्यादि ॥ अन्यदपि कीदृशं तम् । [नेत्रैः] नयनैः लक्षीकृतघ्राणं विषयीकृतनासिकाग्रम् । कीदृशैः । किञ्चित् ईषत् संकुचितपुटत्वात् [प्रकाशस्तिमितोग्रतारैः] प्रकाशया दृश्या स्तिमिता निश्चला उग्रा[1] उद्भटा तारा कनीनिका चक्षुगोलकानि येषां तैस्तथा [भ्रूविक्रियायां] भ्रूवोर्विक्रियायां ध्यानासक्तत्वात् [विरतप्रसङ्गैः] विरतोऽपगतः प्रसङ्गो येषां तैः तथा[2] [अविस्पन्दितपक्ष्ममालैः] अविस्पन्दिता निश्चलाः पक्ष्ममाला नयनावरणलोमलेखा येषां तैः । एवं [लक्षीकृतघ्राणमधोमयूखैः] लक्षीकृतघ्राणत्वादधस्तान्मयूखा[3] रश्मयो येषां तैः[4] ॥४७॥

१. चण्डा—ब भ व न शा मुशा  २ 'विरतप्रसरैः—अपा—भ. ब  ३ प्रसृतामयूखा अक्षवो—भ ब मुशा शा  ४ नेत्रैर्लक्षीकृतघ्राणमीक्षतै नासापुटम् । यदुक्तम्—'सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन' (भ गी. ६–१३) इति—व ......दिशश्चावलोकयेत्—भ 'त्रिनेत्रत्वात बहुवचनम् ।' —अपा.—भ शा मुशा

अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरङ्गम् ।
अन्तश्चराणां मरुतां निरोधान्निवा[1]तनिष्कम्पमिव प्रदीपम् ॥४८॥

१ ०निवात०—म म शा मुशा

अवृष्टिसंरम्भेत्यादि ॥ अथ किम्भूतम् । [अन्तश्चराणां] देहान्तश्चारिणां [मरुतां] वायूनां प्राणापानव्यानोदानसमानलक्षणानां निरोधात्[1] नियमनात् प्रणाशादेवंविधम् इव निश्चलं तं ददर्श । कथमिवेत्याह ।[अवृष्टिसंरम्भ-मम्बुवाहम्] अविद्यमानं वर्षाटोपं[2] जलदम् इव । तथा [अनुत्तरङ्गम्][3]

१ 'धारणादेवविधजलदोदधिप्रदीपनिभम'—अपा—शा मुशा.  २ वर्षणार्थं गर्जिनाडम्बरो यस्य त—व. न ब शा मुशा.  ३ 'अविद्यमपि'—अपा. शा मुशा

अनुद्गतकल्लोलम् [अपां] जलानाम् आधारं जलनिधिम् इव। अनुद्गता स्तरङ्गा यस्य तमनुत्तरङ्गम्। तथा [निर्वातनिष्कम्पम्] निर्वाते वाताभावे ▪ति स्थिरं प्रदीपम् इव प्रद्योतकमिव[४] ॥४८॥

४ दीप तु निर्वानित्वात निष्कम्पमविचलम। भगवान हि नि शब्दश्वासप्र श्र मप्रसररहितो निष्पन्दश्चेति उपमाश्रयम। –अपा न व भ व ▪ निष्पन्द सर्वेन्द्रिय –शा मशा

कपालनेत्रान्तरलब्धमार्गैर्ज्योतिष्प्ररोहैरुदितैः शिरस्तः।
मृणालसूत्राधिकसौकुमार्यां[१] बालस्य लक्ष्मीं[२] ग्लपयन्तमिन्दोः ॥४९॥

१ ०सौकुमार्यान्–अ ना २ लक्ष्मान–शा ज ना

कपालनेत्रेत्यादि ॥ अन्यदपि किम्भूतम्। बालस्य कलामात्रशेषस्य शेखरीकृतस्य[१] इन्दोः लक्ष्मीं कान्तिं ग्लपयन्तं तिरोदधानम्[२]। कं शिरस्तः उत्तमाङ्गात् उदितैः निर्गतैः [३][ज्योतिष्प्ररोहैः] ज्योतिषां तेजसां प्ररोहैरङ्कुरैः। कीदृशैः। [कपालनेत्रान्तरलब्धमार्गैः][४] कपालानि नरशिरांसि तेषां यानि नेत्राणि नयनरन्ध्राणि तैर्लब्ध समासादित पन्था यै। लक्ष्मीं कीदृशीम्। [मृणालसूत्राधिकसौकुमार्यां] मृणालसूत्रेभ्यो बिसतन्तुभ्योऽधिकमतिरिक्त सौकुमार्यं कोमलता यस्यास्ताम्। ज्योतिष्प्ररोहैरिति 'नित्य समासे' [पा० सू० ८-३-४५] इति षत्वम्। ॥४९॥

१ मौलिनाशिन ना मुना २ लक्ष्य न–न व शा मुना ३ मार्गेणा–हि समाधौ उत्तमाङ्गात तेन ८ ङ्गमि।'–अपा –न म थ ८ ना मुना ४ कपा मूर्धास्थि तस्य नेत्राणि रन्ध्राणि त मध्येन ल्धमार्गैः निर्गत। ता तु बिसन्तु तोऽप्यधिककामलाम। ज्य निष्प्ररोहैरिति नि य समास [पा० सू० ८–३–४५] इति षत्वम। ग्लपय तमिति ग्लानावनुवपा च इति मिरिना।–ना मुना

मनोनवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम्।
यमक्षरं क्षेत्रविदो[१] विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥५०॥

१ वदविदो–अ स चा

मनोनवेत्यादि ॥ तमात्मानं देहस्थं[1] आत्मनि स्ववपुषि पश्यन्तम् । कं तमित्याह । क्षेत्रविदो योगिनो यमक्षरमविनाशिनं परं ब्रह्मरूपं विदुर्जानन्ति । किं कृत्वा । अवलोकयन्तम् । मनो हृदये निवेश्य । अत एव कर-नेत्रश्रोत्रास्यनासिकास्तननाभिभिः पायूपस्थयुतैः द्वारैः नवभिर्वपुभिः इत्यैतेषु नवद्वारेषु निषिद्धवृत्ति निवर्तितप्रसरम् । यतः समाधिना एकाग्रतया वश्यम्, आयत्तम्[2] । कुलकम् ॥५०॥

१. देहेश्वरम्–शा. मुशा    २ वशनीयम्–शा मुशा.

स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाऽप्यधृष्यम्[1] ।
नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरावापमपि[2] स्वहस्तात् ॥५१॥

१ ०मास्यदृश्यम्–शा    २. शर चापमपि स

स्मरस्तथेत्यादि ॥ ततो मदनः ईदृशं [मनसा अपि अधृष्यम्] चेत-साप्यनभिभाव्यं [अदूरात्] निकटादवलोक्य [साध्वससन्नहस्तः] भयात् कम्पमानकरत्वात् शरावापं सायकयष्टिं धनु[1]र्यात्मिवाणैर्भ्रष्टमपि संभ्रम-वशान्नाचेतयत् । शराः उप्यन्तेऽनेनेति शरावापः[2] । बाहुलकाच्चेति घञ् ।

१. चापम्–शा मुशा    २. 'क्षेप्यो मुष्टि शराणां धनुरेव वा । 'हलश्च' [पा० सू० ३–३–१२१] इति घञ् ।' अथ –शा. मुशा.

निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥५२॥

निर्वाणेत्यादि ॥ अथास्मिन्नवसरे सखीद्वयानुगता पार्वती अदृश्यत । भगवत्सेवार्थमागतेत्यर्थः । अस्य स्मरस्य वीर्यं बलं निर्वाणभूयिष्ठं प्रशांत-प्रायम् अपि वपुर्गुणेन शरीरसौन्दर्येण संधुक्षयन्तीवोद्दीपयन्तीव यथा आलम्बनविभावसंपत्तेः । निर्वाणशब्दोऽवाते निष्ठायाम् 'निर्वाणोऽवाते [पा० सू० ८–२–५०] इति नत्वम्, अतिशयेन बहु भूयिष्ठं सुप्तसुप्तवि

समासः[1] । 'बहोर्लोपो भू च बहोः' [पा० सू० ६-४-१५८] 'इष्ठस्य यिट् च' [पा० सू० ६-४-१५९] । निर्वाणेन भूयिष्ठं निर्वाणभूयिष्ठमिति तृतीयासमासः ॥५२॥

१. 'सुप्सुपेति समासः'–शान्ति–शा, पुरा

तदेव रूपलावण्यादि श्लोकचतुष्टयेनाह—

अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्धुवारं[1] वसन्तपुष्पाभरणं वहन्ती ॥५३॥

१ ० सिन्दुवारम्–शा ब मा

अशोकेत्यादि ॥ कीदृशी गौरी[1] । [वसन्तपुष्पाभरणम्] पाटलित-पुष्पाण्येवाभरणमलंकरणं बिभ्रती वहन्तीति सम्बन्धः । कीदृशं तत् । [अशोक......रागम्] अशोकपुष्पैः लोहितत्वात्[2] निर्भर्त्सितस्तिरस्कृतः पद्मरागमणिर्यत्र । तथापि [आकृष्ट... कारम्] पिञ्जरत्वादाकृष्टा आनीता हेम्नः सुवर्णस्य द्युतिः कान्तिर्येन तथाविधं कर्णिकारं यत्र । [मुक्ता... वारम्] सितत्वाच्च मुक्ताकलापीकृतं सिन्धुवारं यत्र । लोहितवर्ण-पद्मरागाः [illegible] ॥५३॥

१ 'कीदृशी गौरी'–शान्ति–[illegible] २ '[illegible]'–[illegible]

आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
पर्याप्त[1]पुष्पस्तबकावनम्रा संचारिणी पल्लविनी[2] लतेव ॥५४॥

१. [illegible] २. [illegible]

सञ्चारित्वारोपो यथा । 'हिरण्मयी साललतेव जङ्गमा [भट्टीकाव्यम् २–४७]
इति भट्टेः ॥५४॥

स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरपुष्प[1]काञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव[2] कार्मुकस्य ॥५५॥

१ ०दाम०–म ब ना.   २ मौर्वीं द्वितीयामिव–म ब

स्रस्तामित्यादि ॥ [नितम्बात् स्रस्ताम्] श्रोणीभागाच्चलितां[1] [केसरपुष्पकाञ्चीम्] बकुलकुसुमरशनां [पुनः पुनः] असकृदवलम्बमाना उत्क्षिपन्ती । उत्प्रेक्ष्यते । स्थानविदा निक्षेपास्पदज्ञेन स्मरेण मदनेन निजधनुषो द्वितीयां मौर्वीं ज्यामिव । न्यासीकृतां निक्षेपं स्थापिताम् । सा हि वैदग्ध्यसरूपतारुण्याविर्भावैः स्थानं स्मरनिक्षेपस्य ॥५५॥

१ श्रोणीतटादवलम्बिताम्–न

सुगन्धिनिःश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥५६॥

सुगन्धीत्यादि ॥ [लीलारविन्देन] विलासनलिनेन [द्विरेफम्] प्रतिक्षणम् असकृद् [निवारयन्ती] अपास्यन्ती । यतो [बिम्बाधरासन्नचरम्] बिम्बफललोहितेऽधरे आसन्नं निकटं च चरं च भ्रमन्तम् । कुत इत्याह । [सुगन्धि . ...तृष्णम्] सुगन्धौ निश्वासे विवृद्धतृष्णं संजातगन्धं[1], अत एव ससंभ्रमरशाल्लोलदृष्टिश्चकितेक्षणा सहजत्वात्सौगन्धस्यैकान्तिकत्वे सति सुगन्धीति 'गन्धस्येदु' [पा० सू० ५-४-१३५] इतीत्वम् । बिम्बतुल्योऽधरो बिम्बाधर इति शाकपार्थिवत्वात्समासः । तदेतेन रूपवर्णनेन संवनन-योग्यत्वं[2] देव्या दर्शितम् । कुलकम् ॥५६॥

१ ०गर्वम्–मुना   २ हरवशीकरणयोग्यत्वम्–न. म

तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्री पदमा[1]दधानाम् ।
जितेन्द्रिये[2] शूलिनी पुष्पकेतुः[3] स्वकर्म[4]सिद्धिं पुनराशशंस[5] ॥५७॥

१ ह्रीतिमिवा०–म ना   २. यतेन्द्रिये–मुना शा   ३. पुष्पचाप–म
४ स्वकार्य०–म   ५ आचचसे–म

तां वीक्ष्येत्यादि ॥ तामेवंविधां गौरीम् [वीक्ष्य] अवलोक्य [पुष्पकेतु] कुसुमध्वजश्चेतोहरणलक्षणां स्वकर्मसिद्धिं[1] पुनराशशंस समभावयत्। यत. [सर्वावयवानवद्याम्] सर्वेष्ववयवेषु[2] अनवद्यामनिंद्यां मनोज्ञाम्, अत एव [रते] स्मरवध्वा अपि ह्रीपदं लज्जास्पदं आदधाना कुर्वन्तीम्। ह्रिय पद ह्रिपदम्। आशशंसेति 'शंसु स्तुतौ' [धा० पा० ७२९] इत्यस्य रूपम्, न त्वाङ 'शसि इच्छायाम् [धा० पा० ६२६] इत्यात्मनेपदिनः[3]। ॥५७॥

१ जितेन्द्रियस्यापि हरे–अपा–शा मुशा २ 'हस्तपादादिषु'–अपा–शा मुशा ३ मुया हरस्यापीत्येतदपेक्षया पुनस्त्वम' अपा–शा मुशा

उपासितुं सा च पिनाकपाणिं[1] समाससाद प्रतिहारभूमिम्।
योगात्स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥५८॥

१ साऽपि पिनाकपाणिम–व भविष्यत पत्युरुमा च शंभा–म ■ ना

उपासितुमित्यादि ॥ यदैव देवी [पिनाकपाणिम्] भगवन्तं [उपासितुम्] सेवितुं प्रतिहारभूमिं द्वारप्रदेशम् [समाससाद] प्राप तदैव [स] देवोऽपि हृत्पद्मस्थं परं ज्योतिरात्माख्यमालोक्य योगात्समाधे रुपारराम व्यावर्तत[1]। परमात्मतेजोदर्शनपर्यन्तो हि योगविधि। चशब्दावेककालसूचनार्थौ। एकेन हि समुच्चयमात्रं प्रतीयेत, न तु क्रिययोरेककालता। उपारराभेति 'व्याङ्परिभ्यो रमः' [पा० सू० १-३-८३] 'उपाच्च' [पा० सू० १-३-८४]। प्रतिहारो द्वारम् ॥५८॥

१ व्यवतत–ना मुशा

ततो भुजङ्गाधिपतेः फणाभि[1]रधः कथंचिद्धृतभूमिभागम्[2]।
शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद ॥५९॥

१ फणाग्रै०–म म चा अना २ ०भाग म चा ब ना

ततो भुजङ्गेत्यादि ॥ ततो ज्योतिर्दर्शनादनन्तरमीश्वरो निबिडं दृढं पर्यङ्कबन्धमासनविशेषम्[1] अङ्गसक्तिशारचनां बिभेद समापयत्[2]। कीदृशम्।

१ 'आसनविशेषम्'–नास्ति–ना मुशा २ अत्याक्षीत्–न म

नागनाथस्य शेषाहेः फणाभिः शिरोभिः अधः पाताले कथंचिद्धृतो भूमिभागो येन यत्र वा । तत् गौरवं हि महात्मनां सहजं विशेषतः समाधिसमये भवति । भगवान् कीदृशः । शनैर्न तु सहसा [कृतप्राणविमुक्तिः] कृता प्राणानां वायूनां विमुक्तिस्त्यागो येन सः । समाधौ हि मरुतां निरोधः । भुजङ्गाधिपतिशब्दे राजपुरुषवत्षष्ठीसमासः ॥५९॥

३. 'येन यत्र वा'-नास्ति-म. न शा मुशा

तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमित[1]प्रवेशाम् ॥६०॥

१ ०मत०-न म स अ ना

तस्मै शशंसेत्यादि ॥ [शैलसुताम्] सेवार्थमागतां गौरीं[1] प्रणिपत्य[2] हराय नन्दी व्यजिज्ञपयत् । शंसित्वा च तां प्रावेशयत् । यतः शंभो[3] भ्रूक्षेपमात्रानुमितप्रवेशाम् । तस्मै इति क्रियाग्रहणं सम्प्रदानत्वम् ।

१ शैलाधिपतिसुताम्-न० २ प्रणम्य-अपा-न ३ प्रभो-न शा मशा

तस्याः सखीभ्यां प्रणिपात[1]पूर्वं स्वहस्तभूतः[2] शिशिरात्ययस्य ।
व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥६१॥

१ ०पात०-अ ना २ स्वहस्तलून-म च अ ना स

तस्या इत्यादि ॥ ततो देवं प्रणम्य [सखीभ्याम्] वनदेवताभ्यां पार्वतीवयस्याभ्यां [त्र्यम्बकपादमूले] हरचरणमूले [पल्लवभङ्गभिन्नः] किसलयखण्डमिश्रः कुसुमप्रकारो व्यकीर्यत व्यक्षेपि । कीदृशः । शिशिरात्ययस्य वसन्तस्य स्वहस्तभूतः पाणिनिभः । तन्मयत्वात् तस्य । अत्ययोऽन्तः । उच्चयशब्दः कवीनां प्रमादजः । 'हस्तादाने चेरस्तेये' [पा०सू० ३-३-४०] इति[1] घञ्, अचो[1] बाधितत्वात् । भावानयने द्रव्यानयनमित्युच्चितानि पुष्पाणि व्यकीर्यतेत्ययमर्थः । भज्यत इति भङ्गः खण्डः । भिन्नो विशेषितः मिश्रः[2] ॥६१॥

१ इति वचनात्-न २ 'मिश्र'-नास्ति-व शा मुशा

उमापि नीला[1]लकमध्यशोभि विस्रसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥६२॥

१ लोला०—स म

उमापीत्यादि ॥ न केवलं सख्यौ यावत् [उमा अपि] पार्वत्यपि [वृषभध्वजाय] वृषकेतुं [मूर्ध्ना प्रणामं चकार] अवन्दत । कीदृशी । [नीलालकमध्यशोभि] कृष्णसीमन्तरचितं प्रत्यग्रकर्णिकारकुसुमं प्रणामवशाद्विस्रसयन्ती चालयन्ती । प्रणामादेव मूर्ध्नः श्रोत्रभ्रष्टकिसलयत्वम् ॥६२॥

अनन्यभाजं पतिमाप्नुहीति सा तथ्य[1]मेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति पाके[2] विपरीतमर्थम् ॥६३॥

१ माय०-अ. ना २. लोके—म था

अनन्यभाजमित्यादि ॥ भवेन शम्भुना[1] अपि प्रणतेरनन्तरं [अनन्यभाजम्] अनन्यसाधारणं [पतिं] भर्तारं [प्राप्नुहि] लभस्व इति सा तथ्यमेव [अभिहिता] उक्ता[2] । तस्याः पश्चात्तेनैवोद्वाहितत्वात् । न चैतदाश्चर्यं यस्मात् [ईश्वरव्याहृतयः] ईश्वराणामाढ्यानां समर्थानामुक्तयः पाके फलकाले विपरीतम् अन्यमेव अर्थं न पुष्णन्ति न फलन्ति । देवश्चेश्वरः क्लेशकर्मविपाकदोषैरस्पृष्टत्वात्[3] । अन्यां भजत इत्यन्यभाक् । ततो नञ् समासः ॥६३॥[4]

१ हरेण-व २. अवदत-व ३. क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । [पा॰यो॰सू॰ १-२४]-व म ४. अत्यन्तभिन्नः पाठ— शा. मुद्रा

कामस्तु बाणावसरं प्रतीक्ष्य[1] पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः[2] शरासनज्यां मुहुराममर्श ॥६४॥

१. ०रक्षोश—मुद्रा २. ०लक्ष—अ. ना

कामस्त्वित्यादि ॥ गौरीश्वरौ कृतवन्दनाविशेषौ दृष्ट्वा[1] [कामः] भवतः पुनः [बाणावसर] शरक्षेपसमयं प्रतीक्ष्य:[2] [शरासनज्यां] स्वधनुर्मौर्वीं [मुहु:] असकृत् [आममर्श] पस्पर्श । उमासमक्षं [हरबद्धलक्ष्यः] हर एव बद्धं लक्ष्यं येन सः । अत एव [पतङ्गवद्वह्निमुखं] शलभवदग्निवक्त्र[3] [विविक्षुः] पिपासुः । न हि रुद्रे प्रहृत्य[4] स्वास्थ्यम् ॥६४॥

१ चक्रतु–व भ ल शा मुशा   २ ०समयप्रतीक्ष–शा. मुशा
३ ०मध्य–व भ ब ल शा मुशा   ४ तत्रापहृत्य–ब शा मुशा

अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।
विशोपितां[1] भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥६५॥

१. विशोपिताम्–स.

अथोपनिन्य इत्यादि ॥ अथ ततः [गौरी] देवी [गिरिशाय] स्थाणवे[1] [मन्दाकिनीपुष्करबीजमालां] गंगापद्माक्षवलयं ढौकनिकार्थम् उपनिन्ये अढौकयत् । यतोऽसौ तपस्वी तादृशैरेव वस्तुभिः प्रीयते । ताम्ररुचा लौहित्येनेति अभिलाषप्रतिपादन[2]परम् । भानुमतः मयूखैः विशोषितामिति स्वरूपकथनमात्रमिदम्[3] । ननु[4] प्रायेण वस्तूपग्रहणं करेण संभवति । तत् किमिति करग्रहणम् । सत्यम्, सुखप्रतिपत्तिकृतप्रतिज्ञो भगवान् काव्यकर्ता तत्कथमध्याहारेण वर्तयितुमारभते यतस्तदा बालः संशयीत । अतः सुख-प्रतिपत्त्यर्थं प्रतिज्ञाभङ्गभयाद् । किञ्चाध्याहारस्वरूपेणावकथनं स्वरूपोहः प्रायेण व्याकरणेषु दृश्यते न तु काव्येष्वेन सर्वत्र वेदितव्यम्[4] ॥६५॥

१ 'निजपाणिना'–अपा –न शा मुशा   २ ०ज्ञनकस्वप्रदर्शन०–म न. ब
३ स्वरूपमात्रोचित–ब. न. भ. शा मुशा   ४ 'ननु वेदितव्यम्'–नास्ति
–व. न ब भ. ल. शा मुशा.

प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥६६॥

प्रतिग्रहितुमित्यादि ॥ ततः प्रणयिप्रियत्वात् प्रियभक्तत्वात् यदैव देवोऽक्षमालां तां आदातु[1]मुपचक्रमे प्रारेभे तदैव [पुष्पधन्वा] काम[2]

१ आघातु०–मुशा   २ कामदेव–व शा मुशा

[धनुषि] कार्मुके [संमोहनं] संमोहनाख्यं [अमोघं] अवन्ध्यं [बाणं] शर समधत्त अयोजयत्[३] । पुष्पैर्धनुर्यस्य स पुष्पधन्वा । उन्मादनसम्मोहनतापनशोषणमारणाख्याः पञ्चशराः पञ्चशरस्य प्रसिद्धाः ॥६६॥

३ प्रायोजयत्–शा. मुशा

हरस्तु किञ्चित्परिवृत्त[१]धैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥६७॥

१. ०परिलुप्त०–भ

हरस्त्वित्यादि ॥ अथः [हरः] भगवान् [उमामुखे] पार्वतीमुखे[१] दृष्टिमक्षिपत् । यतः स्मरशरप्रहारवशात् किञ्चित्[२] परिवृत्तधैर्यः ईषद्[३] चलितगाम्भीर्यः । [चन्द्रोदयारम्भे] शशिकरस्पर्शत्वात् [अम्बुराशिः] उदधिः इव । [बिम्बफलाधरोष्ठे] बिम्बवत् लोहितोऽधरोष्ठो यस्येत्य-भिलाषप्रदर्शनपरं[४] मुखविशेषणम् । अथार्थे तुशब्दः द्विपक्षे सुकमर्यादत्वात् ॥६७॥

१ ०वक्त्रे–व. भ न व. शा मुशा        २ 'मनाक्'–अपा.–न. ब व भ प
३ 'ईषद्'–नास्ति–शा. मुशा        ४ ०प्रतिपादनपरम्–ब. शा मुशा

विवृण्वती शैलसुतापि भावमङ्गैः स्फुट[१]बालकदम्बकल्पैः ।
साचीकृता[२] चारुतरेण तस्थौ मुखेन[३] पर्यस्तविलोचनेन ॥६८॥

१. स्फुरद–म, कुचद–अ ना.  २ साचीक्रिया०–अ. ना   ३ वदनेन–अ

विवृण्वतीत्यादि ॥ [शैलसुता] गौरी अपि लज्जावशात् मुखेन साचीकृता तस्थौ तिर्यग्भूताऽभवत् । अत एव [पर्यस्तविलोचनेन] पर्यस्ते अधः पतिते लोचने यस्य तेन[१] [चारुतरेण] अतिरम्येण तेनोपलक्षिता, विवृण्वती प्रकटयन्ती भावम् अभिप्रायम् अङ्गैः अवयवैः । यतो रोमाञ्चितत्वात् स्फुटबालकदम्बकल्पैः विदलद्बालकदम्बकुसुमसदृशैः । रोमाञ्चत्वात् सादृश्यमिति[१] ॥६८॥

१ ..१ कीदृशी रोमाञ्चित गात्र. स्फुटद्बालकदम्बकल्पैः विदलद्बालकदम्ब-कुसुमनिर्भरतयर्वैर्भावमभिप्रायमभिलाष विवृण्वती प्रकटयन्ती । रागवत्वादि रोमाञ्चोत्पत्ति । कदम्बाना रोममदनत्वादुपमानत्वम् । अपि पूर्वदिशया समुच्चयं ।–व भ न ल व शा मुशा

अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥६९॥

अथेन्द्रियेत्यादि ॥ अथ गौर्यभिलापकरणं[1] [इन्द्रियक्षोभम्] इन्द्रियविकारमपेक्ष्य[2] [अयुग्मनेत्रः] त्र्यक्षः [वशित्वात्] जितेन्द्रियत्वात् [बलवद्] बलेन निगृह्य वशीकृत्य [स्वचेतोविकृतेः हेतुं] निजमनोविकारकारणं दिदृक्षया[3] [दिशां] ककुभाम् [उपान्तेषु] पर्यन्तेषु दृष्टिं ससर्ज[4] चक्षुरक्षिपत् । बलं विद्यते यत्र तद्बलवन्निग्रहणम् । वशोऽस्यास्तीति वशी शक्तः[5] ॥६९॥

१ ०लापकार्यम्-शा मुशा   २ 'अपेक्ष्य'—नास्ति-शा मुशा
३ विक्षिपया-व म विचिचीषु-मुशा   ४. चिक्षेप-व म न व शा
मुशा ५ शा॰स-व शा. मुशा.

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम्[1] ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥७०॥

१ ०जानुम्-स

स दक्षिणेत्यादि ॥ ततो भगवान् [आत्मयोनिं] मनोभवं [ददर्श] अदर्शत[1] । कीदृशम् । प्रहर्तुमभ्युद्यतम् । अतश्चापकर्षणवशात् [दक्षिणापाङ्गनिविष्टमुष्टिं] दक्षिणेऽपाङ्गे नेत्रपर्यन्ते निविष्टो मुष्टिर्यस्य । [नतांसं] नतो वामांसो यस्य । [आकुञ्चितसव्यपादम्] आ ईषत् कुञ्चितो वक्रः सव्यो वामः पादो[2] यस्य । [चक्रीकृतचारुचापं] चक्रीकृतं मण्डलितं चारु शोभनं धनु[3]र्येन ॥७०॥

१ ऐक्षत-व म भ. शा. मुशा.   २ सव्यपादो-मुशा
३ ०चापम्-व. न भ

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥७१॥

तपःपरामर्शेत्यादि ॥ ततो भगवतोऽस्य [तृतीयादक्ष्णः] ललाटनेत्रात् स्फुरन् उद्दण्डज्वालो ज्वलन्[1] [उदर्चिः] चलन् [कृशानुः] अनलः [सहसा] झटिति [निष्पपात] निर्जगाम । यतः [तपःपरामर्शविवृद्धमन्योः] तपसः परामर्शेन खण्डनेन[2] विवृद्धो दुःसहकोपो[3] यस्य । अतश्च [भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य] भ्रूभङ्गेन भ्रूभेदेन दुर्दर्शनवक्त्रस्य । किलेत्यागमे ॥७१॥

१ ज्वलज्ज्वालो–शा. मुद्रा २ खण्डनया–शा. मुद्रा.
३ तीव्रकोपस्य–व. भ ब. शा मुद्रा.

क्रोधं[1]प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥७२॥

१ कोप–अ. ना

क्रोधमित्यादि ॥ [प्रभो] देव[1] [क्रोधं] मन्युं [संहर संहर] प्रशमय क्षमस्वेत्यादि [गिरः] वाचो यावत् [मरुतां] देवानां [खे] आकाशे चरन्ति[2] प्रसरुः तावत् पवासौ [भवनेत्रजन्मा] हरनयनभवः [वह्निः] अनलः [मदनं] मन्मथं [भस्मावशेषं चकार][3] अधाक्षीत्[4] । संहर संहरेति संभ्रमे द्वित्वम् ।[5] चरन्तीति भूतेऽत्र प्रयोगो न न्याय्यः । यतोऽतीते विहिताभिः परोक्षादिभिर्भाव्यम्[5] । 'न यावदेतावुदपश्यदुत्पितौ'[6] [शिशु० १-१५] इति माघे यावत्तावच्छब्दौ निपातितौ क्रिययोस्तुल्यकालतामाहतुः ॥७२॥

१. 'भगवन्'–अपा –शा मुद्रा २. 'प्रसरन्ति स्म'–अपा –न. व. भ. शा मुद्रा ३. 'भूतिशेषम्'–अपा. न. व. भ. ल. शा. मुद्रा. ४. अदाक्षीत् ददाहेत्यर्थः.–शा. मुद्रा. ५...५ चरन्तीति लट् प्रत्ययो न तथा न्याय्यः, भूते लिडादिभिर्बाधितत्वात् । –ल. व. न. भ. ब. शा. मुद्रा.
६. पूर्णश्लोक :–

न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनिश्चिरतनस्तावदभिन्यवीविशत् ॥–शिशु० १-१५

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥७३॥

तीव्राभिषङ्गेत्यादि ॥ तदा च [मुहूर्तं] क्षणमात्रं [मोहेन] मूर्च्छया [अज्ञातभर्तृव्यसना] अननुभूत[1]पतिविनाशान् रतिः [कृतोपकारा इव]

१. अचेतित०–व. न. शा मुद्रा

विहितोपकृतेव [बभूव] आसीत्। यतः चक्षुरादीनां इन्द्रियाणां वृत्तिं दर्शनादिव्यापारं [संस्तम्भयता] जडीकुर्वता[2] प्रशमयता [तीव्राभिषङ्गप्रभवेण] तीव्रो दुस्सहोऽभिषङ्गोऽभिघातो दुःखं ततः प्रभवो जन्म यस्य तेन[3] ॥७३॥

२. 'जडीकुर्वता'–नास्ति—शा. मुद्रा. ३. 'इति मोहविशेषणम्'—अपा.–व. म शा. मुद्रा.

तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।
स्त्रीसंनिकर्षं परिहर्तुकामः सो[1]ऽन्तर्दधे भूतपतिः सभूतः ॥७४॥[2]

१. परिहर्तुमिच्छन्–म स. शा. मुद्रा. २. ७३–स शा. मुद्रा.

तमाशु विघ्नमित्यादि ॥ ततोऽसौ [भूतपतिः] गणनाथः[1] [स्त्रीसंनिकर्षं] अङ्गनासमीपं [परिहर्तुकामः] तित्यक्षुः सभूतः गणसहितः अन्तर्दधे तिरोहितो बभूव। तं [तपसः विघ्नं] तपोविघ्नं मदनम् अवभज्य विनाश्य वज्रः इव अशनिः यथा वनस्पतिं तरुं भनक्ति। वज्रशब्दोऽर्धर्चादिः ॥७४॥

१. भगवन्–न. व. ब. भ. शा. मुद्रा.

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य[1] ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित् ॥७५॥[2]

१. समीक्ष्य–ज. ना. २. ७४. शा. मुद्रा.

शैलात्मेत्यादि ॥ अथ [शैलात्मजा] पार्वती [शून्या] शून्यचित्ता [भवनाभिमुखी] गृहसम्मुखं[1] [कथञ्चित्] कृच्छ्रेण [जगाम] ययौ। किं कृत्वा। उच्छिरसः उन्नत[2]कन्धरस्य उन्नतचित्तस्य पितुः अभिलाषम् 'ईश्वरायैनां दास्यामि' इति मनोरथं विफलीकृतं [समर्थ्य] विचार्य [आत्मनः] आत्मीयं च ललितं सविलासं [वपुः] देहं व्यर्थं समर्थ्य 'किमेतेन निरर्थ-

१. गृहाभिमुखम्–न. भ. ब. शा. मुद्रा. २. उद्‌ग्र०—शा. मुद्रा

कमनोहरेण वपुषा कार्यम्'[३] इति । तथा सख्योः वनदेवतयोः [समक्षं] प्रत्यक्षमेव[४] 'अयं मे पराभवः' इति हेतोः [अधिकजातलज्जा] अधिका जाता लज्जा ह्रीः यस्याः सा । अन्यदर्शने हि तथा परिभवो हृदयमाक्रामति[५] । संपूर्वस्यार्थयतेः समर्थ्येति रूपम् । वसन्ततिलकावृत्तम् ॥७५॥

३. शरीरकेन मम प्रयोजनम्—ब. न. ब. भ. ल. शा. मुशा. ४. अन्वक्षम् —ब. न. ब. भ. ल. शा मुशा. ५. आस्कन्दति—ब. न. ब. शा. मुशा.

सपदि[१] मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद्वेगदीर्घीकृतात्मा[२] ॥७६॥

१. अथ स– ब. शा. मुशा. पा. २. ०कृताङ्गः—म.

सपदीत्यादि॥ तत एवंविधं वृत्तान्तमवगम्य[१] [अद्रिः] हिमवान् अनुकम्प्यां लालनीयां [दुहितरं] सुतां [दोर्भ्याम्] बाहुभ्याम् [आदाय] गृहीत्वा प्रतिपथगतिरासीत् प्रतीपगामी बभूव गृहानुपययौ[२] इत्यर्थः । कीदृशीं ताम् । [रुद्रसंरम्भभीत्या] शर्व[३]क्षोभत्रासात् मुकुलिताक्षीं सङ्कुचितनेत्रां अत एव [अनुकम्प्याम्] अनुकम्पायोग्याम् । सुरगजः ऐरावणः [दन्तलग्नां] विषाणधृतां [पद्मिनीं] नलिनीं [बिभ्रत्] उद्वहन् यथा प्रतिपथगतिर्भवत्येवमद्रिराजोऽभूत् । पद्मिनीशब्देनेयमादौ पश्चान्येव तात्स्थ्यादुच्यन्ते । पथ आभिमुख्येन प्रतिपथम् । 'ऋक्पूरब्धूः पथामानक्षे' [पा० सू० ५-४-७४] । प्रतिपथं गतिर्यस्य स तथोक्तः । वेगेन क्षोभेन दीर्घीकृतं प्रसारितमिवाङ्गं वपुर्येन । अय[४] च वेगदीर्घीकृतो आत्मा येन स[४] । मालिनीवृत्तम् ॥७६॥

१. ०मवगवत्य—शा. मुशा. २. गृह ययावित्यर्थः—शा. मुशा. ३. हर० —न. म. शा. मुशा. ४. ...४. 'अय...स'—नास्ति—शा. मुशा.

आनन्ददेवायनिवल्लभदेवविरचितायां पञ्जिकायां कामदहनाङ्कः
तृतीयः सर्गः[१] ।

१. कुमारसंभव विवृतौ तृतीय सर्गः—व०, आनन्ददेवायनिवल्लभकृतायां कुमारसंभवटीकायां तृतीयसर्गः समाप्तः—न. शा. मुशा. कुमारसंभवपञ्जिकायां...... —भ. ब.,.......म्पुटीकायां...ल.

॥श्रीः॥

आनन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपञ्जिकायां

# ॥चतुर्थः सर्गः॥

अथ[1] तत्र विषमनयनानलज्वालाहुतीकृते दुर्विनीते शम्बरसूदने, तत्र भगवति क्वापि गते सति त्रिपुरदहने, विदितवृत्तान्ते चागत्य महेश्वराय पितुस्तां सुतामादाय निजभवनमुपेयुषि नगाधिराजे, संजातमोहायाः कन्दर्पभार्यायाः यद्वृत्तान्तं तदत्र सर्गे प्रतिपादयितुमाह[1]—

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता[2] ।
विधिना प्रतिपाद[3]यिष्यता नववैधव्यमसह्यवेदनम् ॥१॥

१ ...१. 'अथ'आह'–नास्ति–व. न. म ब. क ॰शा. मुद्रा.  २. प्रबोधिता –चा  ३. प्रतिबोध०–चा

अथ मोहेत्यादि ॥ अथ [मोहपरायणा] मोहनिष्ठत्वात् । विवशा परा-धीना[1] सती [कामवधूः] रतिः क्षणमात्रेण विधिना वेधसा [असह्यवेदनं] दुःसहत्वात् [नववैधव्यं] प्रत्यग्रं च वैधव्यमभर्तृकत्वं बोधयितुं[2] [विबोधिता] प्राप्तचैतन्या[3] कृता । मुहूर्तमात्रे हि तया वैधव्यं नाज्ञायि । विगतो धवः पतिर्यस्याः सा[4] । सर्गेऽत्र वैतालीयमर्धसमं वृत्तम् ॥१॥

१ अस्वाधीना–व. म शा मुद्रा  २ प्रतिपादयितुम्–शा मुद्रा.
३ ०चेतना–शा. मुद्रा  ४ 'विधवा । प्रतिपादयिष्यतेति लृडत्र क्रियायां क्रियार्थायाम्'–अधा–शा. मुद्रा

अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयोः प्रियमत्यन्तनिमग्न[1]दर्शनम् ॥२॥

१ ०विलुप्त०–म. अ ना

अवधानेत्यादि ॥ [प्रलयान्तोन्मिषिते] प्रलयो मोहस्तदन्ते उन्मिषिते विकसिते नेत्रे यस्याः सा । दिदृक्षया अवधानपरे एकाग्रे [चकार] व्यधात्।

उपमानमित्यादि ॥ हे प्रिय । तव[1] करणं काय[2] यत् [कान्तिमत्तया] कान्त्या[3] [विलासिनां] कामिनाम् उपमानम् अभूत् । 'कामदेवसदृशोऽयम्' इति । तद् इदम् इदृशीं भस्मरूपां दशाम् अवस्था गतं[4] तथापि न अहं विदीर्ये स्फुट्ये[5] । अतः स्त्रिय [कठिनाः] कठिनचित्ताः[6] । करणानीन्द्रियाणि विद्यन्ते यस्य तत् करणं वपुः । विदीर्य इति कर्मकर्तरिरूपम् । खलुशब्दो विषादे[7] ॥५॥

१ त्वदीयम्–व न भ ब. ल शा मुशा   २ शरीम्–व न भ शा मुशा
३. रूपवत्तया–न. व शा मुशा   ४ गतम–व न भ ब ल शा. मुशा
५ स्फुटे–शा मुशा.   ६ कठिनचित्तवृत्त य–व., कठिनोऽपचित्ता वर्तन्ते–भ, कठोरचित्ता–न. शा मुशा   ७ 'काव्यालकारे वा'–अपा –व.

क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुवः ॥६॥

क्व नु मामित्यादि ॥ हे नाथ[1] । [त्वदधीनजीवितां] भवदायत्तप्राणां मां विनिकीर्य हित्वा [क्षणभिन्नसौहृदः] क्षणमात्रेण भिन्नं क्षतं सौहृद येन स भवान् क्व क्वचित् [विद्रुतः] गतः[2] पलायित । यथा [क्षतसेतु-बन्धनः] सेतुबन्धनं क्षपयित्वा [नलिनीं] पद्मिनीं परित्यज्य [जलसंघातः] तोयपूरः विद्रवति ।[3]सौहृदस्य प्रीतेः सेतुरुपमानम्[3] । सुहृदः कर्म सौहृदं प्रीतिः । 'संज्ञापूर्वको विधिरनित्य' इत्युभयपदवृद्ध्यभाव । विनिकीर्येति 'कृ 'विक्षेपे' [धा पा. १०१४] अस्य रूपम् । नु विषादे ॥६॥

१ 'हे नाथ'–नास्ति–शा मुशा   २ 'गत'–नास्ति–शा मुशा
३ . . . ३. सौहृदस्य उपमानम्'–नास्ति–व न

कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥७॥

कृतवानित्यादि ॥ अन्योन्यमप्रीति[1]विधानं किल त्यागकारणम् । तच्चावयोर्नास्ति[2] । अत• [विलपन्त्यै] दुःखितां मां कस्मादागत्य दर्शनेन नाह्लादयसीति वाक्यार्थ । विप्रीणातीति विप्रियम्[3] ॥७॥

१. ०अप्रीति०–शा मुशा   २ न सममस्ति–भ ब व शा मुशा
३ 'विरुद्धाचरणम्'–अपा –व.

स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेसरदूषितेक्षणान्यवतंसोत्पलताडनानि वा[1] ॥८॥

१ ०ताडिनानि च–अ ना चा म

स्मरसीत्यादि ॥ अथ गोत्रस्खलितेषु नामविपर्ययेषु [मेखलागुणै] रसनादामभिः बन्धनं नाथ[1] [अवतंसोत्पलताडनानि] कुवलय[2]प्रहार च स्मरसि । एतच्च मन्युकारणं तव भवति[3] । यतः सपत्नीनाम्ना समाहूतया मेखलया बद्धोऽसि कर्णोत्पलेन च ताडितो यदि[4] तप्यसि तर्हि तवैव विचारकर्तृत्वं कथम्[4] । [च्युतकेसरदूषितेक्षणानि] च्युतेन केसरेण दूषिते ईक्षणे यैरिति ताडनविशेषणम् । शेखरं कर्णदेशाश्रितः कर्णपुष्पावतंसः ॥८॥

१ 'नाथ'–नास्ति–शा मुशा २ कर्णकुवलय०–अ न भ व शा मुशा
३ तथास्ति–शा मुशा ४ ४ यदि...कथम्'–नास्ति–भ व व न शा मुशा

हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥९॥

हृदय इत्यादि ॥ हे प्रिय[1] । वल्लभत्वात्सदैव [हृदये वससि] चेतसा[2] त्वा वहामि इति [मत्प्रियं] मम प्रियं [यद् अवोचः] यदभ्यधाः तद् अहं कैतवं धूर्तत्वं[3] व्याजम् अवैमि जाने । यस्मात् न चेत् यदि एतत् न उपचारपदम् आवर्जनवाक्यं तत् त्वं [अनङ्गः] नष्टशरीरोऽहं कथं [अक्षता] अदग्धा । आधारव्यसनेनाधेयस्यापि बाधया भवितव्यम्[4] । कितवस्य कर्म कैतवम्[5] ॥९॥

१ 'हे प्रिय'–नास्ति–शा मुशा २ चेतसि–न व शा मुशा ३ धौर्त्यम्–भ
४ भाव्यम्–शा मुशा ५ अवाच इति वच् [परि] भाषणे' [धा पा १०६३] इत्यस्य रूपम्'–अपा –व न शा मुशा

परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥१०॥

परलोकेत्यादि ॥ भवद्विनाशेन[1] वा न काचिदपि क्षतिर्मम । यतः [परलोकनवप्रवासिनः] पर[2]लोकगामिनः अपि तव [पदवीं] पन्थानम् अहं [प्रतिपत्स्ये] अनुसरणादाश्रयिष्ये प्रापयिष्ये[3] । [जनः] लोकः पुनः एषः [विधिना] वेधसा वञ्चितः यतः [त्वदधीनं] भवदायत्तं [देहिनां] प्राणिनां सुखम् । सति कामे विषयाः सुखावहाः[4] । त्वयि अधीनं त्वदधीनं सप्तमी [तत्पुरुषः] । अक्षशौण्डैश्च[5] समासः । ततः "[अषड...] अभ्युत्तरपदात्' [पा. सू. ५-४-७] खः । अधिरीश्वरे । त्वं सुखस्येश्वर इत्यर्थः[6] ॥१०॥

१. नाशेन–ब., नाशे–शा. मुद्रा. २. यम०–शा. मुद्रा ३ प्राप्स्यामि–ब शा. मुद्रा. ४. सुखकारिणः–ब. भ. शा. मुद्रा. ५ द्र. पा० सू०–२–१–४० ६. 'एवमन्यत्र'–अपा.–शा. मुद्रा.

रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥११॥

रजनीत्यादि ॥ हे प्रिय । [रजनीतिमिरावगुण्ठिते] निशीथे[1]ऽन्धकारावच्छादिते [पुरमार्गे] पत्तनमार्गे[2] [कामिनां] वल्लभानां [वसतिं] सद्म [प्रियाः] अभिसारिकाः प्रापयितुं त्वदृते कः ईश्वरः शक्तः । यतस्ता मेघगर्जितकातराः सति हि त्वयि न तिमिरं गण्यते । तथा चोक्तम्–'क्व प्रस्थितासि करभोरु' इति काव्यम् ।[3] न जलधरगर्जितमयम् । त्वदृते इति ऋते कर्मशब्दे पञ्चमी[4] ॥११॥

१. निशा०–ब भ. म. शा. मुद्रा. २. नगरपथे–अ. ब. भ. ब. शा मुद्रा. ३. द्र. क्व प्रस्थितासि करभोरु घने निशीथे प्राणाधिपो वसति यत्र मनःप्रियो मे । एकाकिनी वद कथं न बिभेषि बाले नन्वस्ति पुङ्खितशरो मदनः सहायः ॥ अमरुशतकम् ७१.–आदि–शा. मुद्रा. ४. द्र. पा. सू. २–३–२९. प्रिया इति शिवो गणकः । मन्दसंयोगश्च हिमर्तवा ।–शा. मुद्रा.

नयनान्यरुणानि घूर्णयन्वचनानि स्खलयन्पदे पदे ।
असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना ॥१२॥

नयनानीत्यादि ॥ [असति] दूरे भूते [त्वयि] भवति [मधुना] इदानीं [प्रमदानाम् ] अङ्गनानां विधवानाम् इव वारुणीमदः सुराकृता[1] क्षीवता [विडम्बना] उपहासः । यतः [अरुणानि] लोहितीकृतानि[2] [नयनानि] नेत्राणि [घूर्णयन्] तरलयन् [पदे पदे] प्रतिपदं च [वचनानि] वचांसि स्खलयन् । 'पापि[3] [पी[3] पिब सुसुस्वदं ममुमुखासवं देहि मे, त्यतत्यज वदवूस, भभभभाजनं काचनम् । इति स्खलितजल्पितं मदवशात् कुरंगी दृशा, प्रगे हसितहेतवे सहचारीभिरध्यैयत' ॥ एवं शृङ्गार विना त्रपाकर[4]मेतत् ॥१२॥

१ मदिराकृता–ब न ब   २ लोहितीकृत्य–शा मु॰   ३ ३ 'पापि ध्यैयत'–नास्ति–भ ब क शा मु॰। ४ उपहासक०–भ ब

अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति ॥१३॥

अवगम्येत्यादि ॥ हे अनंग नष्टतनो त्वं तव प्रियबन्धोः वपुः देहं कथीकृतं कृतकथाशेषमात्रम् [अवगम्य] विज्ञाय [बहुले अपि] कृष्णपक्षातिक्रमेऽपि [निशाकरः] शशाङ्कः नूनं [तनुतां] कार्श्यं दुःखं कृच्छ्रेण[1] मोक्ष्यति त्यक्ष्यति । यतो निष्फलोदयः । तेन ह्युदितेनोत्कण्ठादिकं कार्यम् । तच्च नासति त्वयि । वपुषः कथनात् कथाशब्दः वाच्यत्वम्[2] । अकथा कथाकृतं कथीकृतम् । 'अस्य च्वौ' [पा॰ सू॰ ७-४-३२] इति ईत्वम् । दुःखमित्यत्र क्रियाविशेषणत्वात्कर्मत्वम् ॥१३॥

१ कृच्छ्रेण–मुशा   २ ०वाच्यम–न   ०वाच्यत्वम–मु॰   कथामात्र धापाल–शा

हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥१४॥

हरितारुणेत्यादि ॥ प्रिय । [वद] कथय इदानीमेव [नवचूतप्रसवः] चूततरोर्नवप्रसवः कुसुमं कस्य अन्यस्य [बाणतां] शरत्वं [गमिष्यति] यास्यति । त्वमेव किल चूताङ्कुरास्त्रः । कीदृशोऽसौ । [हरितारुणचारुबन्धनः] किञ्चिद्धरितं नीलं ईषच्चारुणं चारु मनोज्ञं बन्धनं वृन्तं यस्य ।

तथा [कलपुंस्कोकिलशब्दसूचितः] मधुरपरपुष्टरवसूचितः । तस्याऽपि सुरताविर्भावात्[1] तदङ्कुरास्वादा[2]च्च तस्य कलत्वम् ॥१४॥

१ सुरभिभावाविर्भावात्–न ल भ २ सहकारस्वादा०–म, स्वरभावा०–शा मुशा.

अलिपंक्तिरनेकशस्त्वया गुणकृत्ये[1] धनुषो नियोजिता ।
विततै:[2] करुणस्वनै[3]रियं गुरुशोकामनुरोदितीव माम् ॥१५॥

१ ०कृत्यै–ब स   २ विरुतै–ब म स   ३ ०स्वरै०–ब शा मुशा

अलिपंक्तिरित्यादि ॥ यथा [अलिपंक्तिः] भ्रमरावली विततैः दीर्घैः [करुणस्वनैः] करुणैः स्वनैः गुञ्जारवैः[1] [गुरुशोकाम्] अतिदुःखितां माम् अनुरोदिति इव । मम पश्चाच्छोचतीव । अनुरोदनं हि स्त्रीणां सुप्रसिद्धम् । विरुतैरिति पाठे करुणस्वरैरिति पठनीयम् । स्वराः षड्जादयः । कस्तस्याः परिचयो यदनुरोदितीत्याह–भूयः धनुषः गुणकृत्ये मौर्वीकार्ये [अनेकशः] बहुधा नियोजिता । क्वणदलिकुलं[2] हि कामकार्मुकम् । अनुरोदितीति 'रुदादिभ्यः सार्वधातुके' [पा. सू. ७–२–७६] इतीडागम । अकर्मका अपि धातवः सोपसर्गाः सकर्मका[3] भवन्तीति । मामिति कर्मपदम्[4] ॥१५॥

१ गुञ्जितै–न ल ब म   २ क्वणददिकुलगुणम्–ब न ल मुशा
३ सकर्मकत्वम्'–अपा मुशा.   ४ 'माम...पदम्'–नास्ति–शा मुशा

प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां[1] मधुरालापविसर्ग[2]पण्डिताम्[3] ॥१६॥

१. कोकिलान–स   २ ०निसर्ग–०म   ३ पण्डितान–स

प्रतिपद्येत्यादि ॥ [मनोहरं] रम्यं [वपुः] देहं [प्रतिपद्य] आसाद्य [रतिदूतिपदेषु] रतिदूतिस्थानेषु [पुनः] भूयः अपि [कोकिलां] परपुष्टाम् आदिश प्रहिणु । यतोऽसौ [मधुरालापविसर्गपण्डितां] मधुरालापविसर्गे कलवचनमोक्षे[1] कलवचनकथने प्रवीणाम् । कलवचना किल दूती क्रियते । 'निसर्गे'ति पाठे निसर्गः स्वभाव । रतिरित्यात्मानं निर्दिशति[2] । रमणं वा रतिः । कामस्य हि कोकिलैव दूतिः । तद्रुतनिशमनेन रिरंसोत्पादनात् । दूतीपदशब्दे 'उणादयो बहुलम्' [पा० सू० ३–३–१] इति ह्रस्व ॥१६॥

१ पण्डिताम्–अपा–ब न. शा. मुशा   २ निदर्शयति–ब.

शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।
सुरतानि च तानि ते रहः स्मर संस्मृत्य न शान्तिरस्ति मे ॥१७॥

शिरसेत्यादि ॥ [प्रणिपत्य] प्रणतिपूर्वं [याचितानि] अभ्यर्थितानि [सवेपथूनि] कम्पयुक्तानि [उपगूढानि] आलिङ्गितानि[1] अन्यानि च नानारूपाणि [सुरतानि] मोहनानि[2] [संस्मृत्य] अनुस्मृत्य [स्मर] प्रिय। [न मे शान्तिरस्ति] नाहं निर्वृतिमुपलभे[3] । प्रथमोऽत्र च शब्दः परिचुम्बनाद्यनुक्तसमुच्चयार्थः । उपगूढशब्दो भावे संस्मृत्य न शान्तिरस्तीति भिन्नकर्तृकत्वात् क्त्वाप्रत्ययो दुर्लभः । यदि वा शमिक्रियापेक्षयेव पौर्वकाल्यमेतत्संस्मृत्य नाहं शाम्यामीत्यर्थः । एवमन्यत्र यथाशक्ति योज्यम् ॥१७॥

१ तव आलिङ्गनानि–व ना मुद्रा  २ मनोहराणि–व.  ३. निर्वृतिं लेभे–व. म ना. मुद्रा

रचितं रतिपण्डित त्वया स्वयमङ्गेषु ममेदमार्तवम् ।
ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥१८॥

रचितमित्यादि ॥ हे [रतिपण्डित] रतिकर्मकुशल । [कुसुमप्रसाधनं] कुसुमालंकरणम् इदम् आर्तवं वासन्तिकं [त्वया] भवता स्वयम् एव मम [अङ्गेषु] अवयवेषु [रचितं] विनिवेशितं[1] ध्रियते तिष्ठति । तव [चारु] सुन्दरं[2] वपुः पुनः न दृश्यते न लक्ष्यते । अहो कष्टमेतद् देहभृतामसारता । ऋतुप्राप्तस्योत्पत्तिरार्तवम् ॥१८॥

१ 'रचितम्'–अपा–मुद्रा.  २ मनोहरम–व न. म. ना. मुद्रा

विबुधैरसि यस्य दारुणैरसमाप्ते प्रतिकर्मणि[1] स्मृतः ।
तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥१९॥

१. 'परिकर्मणि'–म व म. भ

विबुधैरित्यादि ॥ यस्य[1] असमाप्ते प्रतिकर्मणि[2] प्रसाधने त्वं [दारुणैः] निर्दयैः [विबुधैः] नाकिभिः [स्मृतः] आराधितः[3] तम् इमं मे [दक्षिणेतरं]

१. चरणस्य–अपा–व.  २ परिकर्मणि–म–व.  ३. आध्यात.–व, चिन्तित.–व ना. मुद्रा.

सव्यं वामं [चरणं] पादम् [एहि] आगत्य [निर्मितरागं] सालक्तकं[४] [कुरु] विधेहि । स हि तमलंकुर्वन्निन्द्रेणाऽनुस्मृतः । दारुणत्वमत्र प्राणान्तकरे कर्मणि विनियोगात् ॥१९॥

४ समाप्तालक-मुशा

अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयिणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे[१] दिवि ॥२०॥

१ विलुभ्यसे-स

अहमेत्येत्यादि ॥ [पतङ्गवर्त्मना] पतङ्गोऽग्निः स एव वर्त्मा मार्गस्तत्समीपप्राप्त्युपायभूतत्वात् । तेन अहम् [एत्य] आगत्य [ते] [अङ्काश्रयिणी] भवत्समीपवर्तिनी[१] [पुनः] भूयो भवामि यावत् [चतुरैः] निपुणैः [सुरकामिनीजनैः] अप्सरोलोकैः [दिवि] नाके [प्रिय] कान्त । न विलोभ्यसे ॥२०॥

१ भवदुत्सङ्गवर्तिनी—न व भ का० मुशा

मदनेन विनाकृता[१] रतिः क्षणमात्रं किल जीवितेति[२] मे ।
वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥२१॥

१ विना क्षितः —स        २ जीवतीति —स

मदनेनेत्यादि ॥ हे [रमण] वल्लभ[१] । यद्यपि त्वाम् [अनुयामि] अहमनुसरामि[२] तथापि [वचनीयं] वाच्यता [इदम्] इयं [मे] मम लोके [व्यवस्थितं] रूढेव यत् कामे स्वर्गीभूतेऽपि रतिः [क्षणमात्रं] मुहूर्तमपि जीविता इति । तादृशे हि प्रेम्णि तदेव हृदयविशरणमुचितम् ॥२१॥

१ कामदव-भ        २ अनुमरणेनानुगच्छामि-व न भ म ल
३ हृदयस्फोटनेन मरणमुचितम । विनाकृतेति सुप्सुपेति समास-व न वा मुशा अनुयामीति वर्तमानसामीप्ये , [पा० सु० ३-३-१३१] इति लट -न

क्रियतां[१] कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्किता गतिमङ्गेन च जीवितेन च ॥२२॥

१ क्रियते — व०

क्रियतामित्यादि ॥ परलोकान्तरितस्य परत्र[1] व्यवहितस्य [ते] तव कुसुमवसनाङ्गरागादिकम् [अन्त्यमण्डनम्] अवसानभूषणं कथं मया [क्रियतां] विधीयताम् । यतः [अङ्गेन जीवितेन च] जीवितदेहाभ्यां [समं][2] युगपत् [अतर्कितां गतिं गतोऽसि] नष्टोऽसि । अन्यस्तु मृतोऽपि शरीरमात्रेण तिष्ठतीति[3] ॥२२॥

१ परलोके—व, नास्ति—मुद्रा २ 'सह'—अपा - व ३. तिष्ठति—म मुद्रा

ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः[1] ।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितानि तत्[2] ॥२३॥

१ ०धन्विन—व २ विलोकित च यत्—म

ऋजुतामित्यादि ॥ [ते] तव [उत्सङ्गनिषण्णधन्वनः] अङ्के चापमवस्थाप्य [शरं] सायकम् [ऋजुतां नयतः] स्पष्टीकुर्वतः [मधुना] सुरभिणा सस्मितां कथां [नयनोपान्तविलोकितानि] अपाङ्गेक्षणानि च इति सर्वं तदहं[1] [स्मरामि] अनुस्मरामि । नेत्रान्तेक्षणं स्मरस्य रतेर्वा [प्राहम्] ॥२३॥

१ सर्वमहम् — व मुद्रा

क्व नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥२४॥

क्व नु त इत्यादि ॥ क्व असौ [ते] तव [हृदयंगमः] अतिप्रियः [सखा] वयस्यः [मधुः] वसन्तः । तव [कुसुमायोजितकार्मुकः] कुसुमैः विरचितं चापं येन । [खलु उग्ररुषा] क्वचिदतिक्रोधेन[1] [पिनाकिना] रुद्रेण सोऽपि[2] [सुहृद्गतां गतिं गमितः] त्वयैव सह नीतः । दग्धस्तेन सोऽपीत्यर्थः[2] ॥२४॥

१. ० रोषेण—ब न धा. मुद्रा. २......२. सोऽपि तावकीमवस्थां नीत । मा सोऽपि तेन दग्ध इत्यर्थ ।—म. व. न धा मुद्रा

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवार्दितः[1] ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥२५॥

१. दिग्धशरैरिवाहत —म.

अथ तैरित्यादि ॥ [अथ] ततः [मधुः] वसन्तः [आतुरां] दुःखितां [रतिं] मित्रजायाम् अभ्युपपत्तुं त्रातुं[1] प्रतिबोधयितुं वा [पुरः] तदग्रतः आत्मानम् अदर्शयत् आविरभूत्। यतस्तदीयैः[परिदेविताक्षरैः] प्रलापवचोभिः [हृदये] वक्षसि [अर्दितः] पीडितः दिग्धफलैः विषलिप्त[2]शरैः इव । 'अर्पितः'[3] इति पाठेऽर्पितो गृहीतो विद्ध इत्यर्थः[3] ॥२५॥

१. परित्रातुम्–व. भ. ब. ज शा. मुद्रा.    २. विषक्षिप्त०–च
३. अर्पित...इत्यर्थः'—नास्ति–शा. मुद्रा.

तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥२६॥

तमवेक्ष्येत्यादि ॥ ततः [तं] मधुम् [अवेक्ष्य] आलोक्य [सा] रतिः [भृशं] नितरां [रुरोद] शुशोच[1] [स्तनसंबाधं] स्तनसंकटं च [उरः] वक्षः [जघान] अताडयत् । यस्मात् [स्वजनस्य] बन्धोः [अग्रतः] पुरः[2] दुःखं [विवृतद्वारम् इव उपजायते] उच्छृङ्खलमिवोत्पद्यते । अनवरतप्रवृत्तेः ॥२६॥

१. अश्रूणि मुमोच–न०    २. पुरत –शा. मुद्रा

इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।
यदिदं[1] कणशः प्रकीर्यते पवनैर्भस्म कपोतकर्बुरम्[3] ॥२७॥

१. तदिद–म.    २ कणतो विकीर्यते–म. ब म.    ३. ०पाण्डुरम्–व.

इति चैनमित्यादि ॥ एनं च वसन्तमिदं सा उवाच अब्रवीत्[1] । हे [वसन्त] सुरभे । पश्य[2] किं तव [सुहृदः] मित्रस्य स्थितं सम्पन्नम् । यदिदं [कपोतकर्बुरं] कपोतधूसरं तदीयं भस्म [पवनैः] वातैः कणशः कणं कणं प्रकीर्यते विक्षिप्यते । भस्ममयः स त्वत्सुहृत्सम्पन्न इत्यर्थः ॥२७॥

१. प्रत्यवादीत–न.    २. विलोक्य–अपा.–थ.    ३. विकीर्यते–म.

अयि सम्प्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥२८॥

अयि संप्रतीत्यादि ॥ [अयि स्मर] हे प्रिय। संप्रति अधुना [दर्शनं देहि] आत्मानं दर्शय। यस्मात् [एषः] असौ [माधवः] सुरभिः तव [पर्युत्सुकः] उत्कण्ठितो दर्शनेनाह्लादनीयः। यतः [नृणां] नराणां

१ 'सा...माह'–नास्ति–शा. मुद्रा २ व्यसनेन धूमिताम्–म०, ०प्रदूषिताम्–मुद्रा

[दयितासु] प्रेयसीषु [प्रेम] प्रीतिः [अनवस्थितम्] अस्थिरा न तु [सुहृज्जने] मित्रलोके। तेन मम [नाम] दर्शनं मा दाः, मधुमागत्य पश्य[१] ॥२८॥

१ आह्लादय–मुद्रा

स्यादेतत् किं ममैतेन सुहृत्त्वं कृतमित्याह—

अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।
विसतन्तुगुणस्य कारितं धनुषः पेलव[१]पुष्पपत्रिणः ॥२९॥

१, कोमल०–व., पेशल०–व

अमुना नन्वित्यादि ॥ अमुना वसन्तेन ननु [पार्श्ववर्तिना] निकटस्थेन तव धनुष एवंविधस्यापि ससुरासुरं जगदाज्ञां कारितम् निदेशे स्थापितम्। वशीकृतमित्यर्थः। वसन्ते कामस्य दुस्सहत्वात्। कीदृशस्य। बिसतन्तुरेव गुणो यस्य [पेलवपुष्पपत्रिणः] पेलवानि[१] मृदूनि पुष्पाण्येव पत्रिणः शरा यस्य। ननुरमर्षे हेतौ वा ॥२९॥

१ पेशलानि–व०

सा वसन्तमाह[१]—

गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मामविषह्यव्यसनप्रधूमिताम्[२] ॥३०॥

१ 'सा...माह'–नास्ति–मुद्रा. २. ०प्रदूषिताम्–मुद्रा

गत एवेत्यादि ॥ [ते] तव वयस्यः गत एव विनष्ट एव। प्रकारेण यद्वाऽवच्छिन्नं तत्स्वरूपेणाह–न निवर्तते न प्रत्यागच्छति। [इव] यथा

[अनिलाहतः] वातेन नुन्नः[1] दीपः नश्यति, न तु निवर्तते । अहम् अस्य कामप्रदीपस्य परिशेषत्वात्[2] दशा इव वर्तितुल्या । अतश्च [अविषह्यव्यसनप्रधूमितां] दुस्सहेन व्यसनेनार्थेन दुःखेन प्रधूमितां[3] तप्यमानां मां [पश्य] ईक्षस्व । दशा हि दीपे गते प्रधूमिता[4] भवति[5] ।३०॥

१. वातच्छिन्नः–म. ब. वातनुन्नः–मुशा. २. परिशेषात्–व. ३. प्रदूपिताम् –व.–न. शा. मुशा. ४. प्रदूपिता – शा. मुशा. ५ तिष्ठति –व. न. शा. मुशा.

विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता ।
अनपायि हि[1] संश्रयद्रुमे[2] गजभग्ने पतनाय वल्लरी ॥३१॥

१. अनपायिनि — म. २. संश्रिता द्रुमे–स. ब.

विधिनेत्यादि ॥ अद्य विधिना कामवधे मां [विमुञ्चता] त्यजता [अर्धवैशसं] वैशसार्धम् अर्धमारणत्वं[1] कृतम् । यदि[2] मामपि हन्यात्तदुःखाऽननुभवाद्युक्तं तेन चरितं स्यात् । मुञ्चता तु मां सुष्ठु वैशसं विहितम् । मम तु तद्वधे मरणं सामर्थ्यप्राप्तमेव । तथा [संश्रयद्रुमे] आश्रयभूते पादपे [गजभग्ने] करिमथिते सति वल्लरी लता अनपाया अपि अखण्डिताऽपि[3] [पतनाय] पातायैव भवति । आधारस्याधयाधेयस्यापि सामर्थ्यबाधितत्वात् । अर्धेत्यत्रापपाठः । एकतरवधे हि वैशसं न तूभयबाधायाम् ॥३१॥

१. नृशंसत्वम्–व. न. २. यद्यसौ–व. स. न. ३. अपरिखण्डिताऽपि –व. भ. ब. अखण्डापि–शा मुशा.

शोचित्वेदानीमवश्यकर्तव्योपदेशेनाऽऽह—

तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय भर्तु[1]रन्तिकम् ॥३२॥

१. पत्युः०–म. ब. स.

तदिदमित्यादि ॥ किं बहुना । अधुना [भवता] त्वया इदं [बन्धुजनप्रयोजनं] मित्रजायाकार्यं [क्रियतां] विधीयताम् । [विधुरां] दुःखितां मां [ज्वलनातिसर्जनात्] भर्तुः [अन्तिकं] निकटं प्रापय । अनुमरणेन किल पतिलोकप्राप्तिरिति श्रुतेः । ननु चाऽऽभिमुख्ये । तदित्युपसंहारे । विधुरत्वेनाग्निदाने स्वयमसामर्थ्यमाह । अतिसर्गो दानम् ॥३२॥

न चानुमरणं नाम न केनचिदनुष्ठितमित्याह–

शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते[1] ।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥३३॥

१ विलीयते – म स

शशिना सहेत्यादि ॥ [प्रमदाः] स्त्रियः [पतिवर्त्मगा इति] भर्तृमार्गमनुयान्तीत्येतद् यदा [विचेतनैः] अचेतनैः अपि[1] मूर्खैरथ विचेतनै-र्ज्योत्स्नादिभि[1]रप्यनुष्ठितम् । तदा ममानुगमनं नायुक्तम् । तथा हि शशिना मृगाङ्केन [सह] साकं [कौमुदी] ज्योत्स्ना [याति] शाम्यत्येव[2] । [मेघेन] जीमूतेन च [सह] सार्धं [तडित्] प्रलीयते[2] नश्यत्येव । 'कौमुदी कान्तिनिशाकरे सुचन्द्रिका विवक्षिता ।' 'प्रलीयते' इति लीङः कर्तरि ॥३३॥

१ ... १ 'मूर्खै ...... दिभि' – नास्ति – भ ल. न. ब. ल. दा मुग
२. अस्तमेत्येव – ब. भ. म

न चाऽहं मरणकातरेति वक्तुमाह–

अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ ॥३४॥

अमुनैवेत्यादि ॥ [अमुना] एतेन [सुभगेन] अतिवल्लभेन [प्रियगात्रभस्मना] वल्लभदेहभूतिचन्दनेन कषायितस्तनी अनुलिप्तकुचा [नवपल्लवसंस्तरे] सरसकिशलयशयनीये [यथा] इव [विभावसौ] अनले निर्भयं [तनुं] देहं [रचयिष्यामि] विधास्यामि । समातप्तस्य[1] किल किशलय[2]पल्लवसंस्तर उचितः । कषायितं रूपितम् ॥३४॥

१. समालब्धस्य–मुद्रा. २. 'कीसलय' नास्ति–मुद्रा

न च तवाऽग्निदानेन साहाय्यकरणमनुचितमिति वक्तुमाह–

कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः ।
कुरु संप्रति तावदाशु मे प्रणिपाताञ्जलियाचितश्चिताम् ॥३५॥

कुसुमास्तरण इत्यादि ॥ हे सौम्य । भवान् [आवयोः] अस्माकं [कुसुमास्तरणे] पुष्पशय्यायां[1] [बहुशः] असकृदेव हि सहायतां साहाय्यकं[2] गतः प्राप्तः । [संप्रति] तदधुनापि [प्रणिपाताञ्जलियाचितः] प्रणिपातमिश्रितेनाञ्जलिनाभ्यर्थितः सन् चितां मे [कुरु] विधेहीति । सोम इव सौम्यः 'शाखादिभ्यो यत्' [पा० सू० ५-३-१०३] । यच्चीयत इति चिता काष्ठरचना ॥३५॥

१ पुष्पशय्याभि.–व शा. मुद्रा. २. सहायताम्–व, सहायवत्त्वम्–मुद्रा

तदनु ज्वलनं मदर्पितं[1] त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना ॥३६॥

१ ममर्पितम्–म–१,

तदन्वित्यादि ॥ [तदनु] ततः मदर्पितं दत्तं [ज्वलनम्] अग्निं[1] [दक्षिणवातवीजनैः] मलयपवनाक्षेपैः त्वरयेः संधुक्षयेः । यस्मात् [विदितम्] अवगतमेतत् [ते] त्वया [मां] मया विना [स्मरः] कामः [क्षणं] निमेषम् अपि न उत्सहते सोढुं न शक्नोति । अत्र हि 'सर्वे पश्चात्प्रवर्तन्ते' इति भाष्यकारवचनप्रामाण्यादन्वयादयोऽपि षष्ठीसमासाः साधवः । मयार्पितमिति मदर्पितः सप्तमीसमासः । 'समर्पितम्'[2] इति पाठान्तरम् । वीज्यत अनेनेति वीजनम्[3] ॥३६॥

१ वह्निम्–व. २. समर्पितम्–मुद्रा. ३. 'मदिति विनाशब्दयोगे 'पृथग्विना'......[पा० सू० २-३-३२] इति पञ्चमी ।'–अपा.–व. भ. मुद्रा.

इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र य[1]न्मया सहितः पास्यति ते स बान्धवः ॥३७॥

१ यम्–म–१, तम्–म.

इति चापीत्यादि ॥ अग्निं दत्त्वा ततः नौ आवाभ्यां साधारणः एक एव [सलिलस्य अञ्जलिः] जलाञ्जलिः [दीयतां] त्वया देयः । यत् यस्मात् अविभज्य अविभागेन मया सह परत्र परलोके स [ते] त्वत् [बान्धवः] वयस्यः पास्यति । आवयोर्हि सहपानभोजनं सदैवेष्टम् । पृथग्दानेन तु

तद्दुर्घटम् । यदिति हेतुपदम् । 'यम्' इति पाठेऽञ्जलिनिर्देशः । नौ इति 'युष्मदस्मदोः ' [पा सू ८-१-२०] इत्यादिना चतुर्थीद्विवचनान्तस्याऽस्मदो नावादेशः ॥३७॥

परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते सखा ॥३८॥

परलोकेत्यादि ॥ हे माधव । परलोकविधौ और्ध्वदैहिके [स्मरम् उद्दिश्य] मित्रोद्देशेन [विलोलपल्लवाः] चल[1]पल्लवाः[2] सहकारमञ्जरी

१ नव०-भ व   २ ०किसलया व मुद्रा

निवप दद्याः । यस्मात् स हि ते [सखा] वयस्य सदृश [प्रियचूतप्रसवः] चूत[3]पुष्पप्रिय   सहकारश्च चूतभेद एव । अत्यन्तभेद[4] तु निरङ्कमेव वचनं यदन्यस्य प्रियत्वेऽन्यस्य दानम् । प्रेतोद्देशेन दानं निवाप ॥३८॥

३ ०कुसुम०-थ न भ मुद्रा   ४ चूतविशेष एव वाच्य-र

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥३९॥

इति देहेत्यादि ॥ [इति] इत्थं [देहविमुक्तये स्थिता] शरीरत्याग निश्चिता [रतिं] कामवधूं आकाशभवा अदृश्या [सरस्वती] वाणी[1] अन्वकम्पयत् पर्यत्रायत[2] । रतिरक्षणार्थमाकाशात्भारत्युच्चचारेत्यर्थः । [इव] यथा शफरीं मत्स्यीं [ह्रदशोषविक्लवां] जलशोषणाकुलां प्रथमोपनता [वृष्टि] अम्बुद[3]वृष्टिरनुकम्पते । तथाऽसौ ताम् । भवतीति भवा । तस्य निभावितत्वाच्च[4] ॥३९॥

१ वाक—व   २ परित्रातवती-थ   ३ जलाशय०-व भ न द र जलधर०-मुद्रा   ४ 'आकाशात्भवा आकाशभवा' -अपा -मुद्रा

तामेव वाचमाह-

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिरान्भविष्यति ।
शृणु येन स कर्मणा गतः शलभत्वं हरलोचनार्चिषि[1] ॥४०॥

१ ०र्चिषि - न म

कुसुमायुधेत्यादि ॥ हे [कुसुमायुधपत्नि] कामजाये । देहं मा त्याक्षीः । यस्मात् तव [भर्ता] पतिः [न चिरात्] अचिरात् [भविष्यति] सुलभो भविता[1] । येन च कर्मणा [स] असौ [हरलोचनार्चिषां] त्रिनयन[2]दहनज्वालानां शलभत्वं[3] प्राप्तः । [शृणु] तदाकर्णय । कुसुमायुधः पतिर्यस्याः सा कुसुमायुधपत्नी । 'विभाषा सपूर्वस्य' [पा० सू० ४-१-३४] इति ङीप् नकारौ ॥४०॥

१ भविष्यति – व. न. शा मुद्रा. २. त्रिनयननयन०—व त. भ शा मुद्रा. ३. 'पतङ्गत्वम्' – अपा. – व. न. भ. व. शा मुद्रा.

अभिलापमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ॥४१॥

अभिलापमित्यादि ॥ एवमागमो यथा [प्रजापतिः] ब्रह्मा उदीरितेन्द्रियः चलच्चित्तमनाः सन् [स्वसुतायां] निजदुहितरं तिलोत्तमाम् [अभिलापम् अकरोत्] अचकमत । [अथ] ततः तेन वशित्वात् [विक्रियां] चेतोविकारं निगृह्य अभिशप्तः । त्वत्प्रियः एतत् फलं देहदाहलक्षणं [अन्वभूत्] अनुबभूव ॥४१॥

१. देहत्यागलक्षणम्—व. ग. न.

परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः ।
उपलब्धसुखस्तदा स्मरं वपुषा स्वेन नियोजयिष्यति ॥४२॥

इति चाह स धर्मयाचितः स्मरशापान्तशिवां[1] सरस्वतीम् ।
अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ॥४३॥

१. शापावधिदाम्—म.

परिणेष्यतीत्यादि ॥ इति चाहेत्यादि ॥ ततः [धर्मयाचितः] धर्मेण सृष्टिरक्षार्थं वेधा अभ्यर्थितः सन् [स्मरशापान्तशिवां] स्मरशापान्तेन शिवां भद्रां सरस्वतीं वाचम् इति एवम् [आह] उवाच । कां वाचमित्याह– तपसा तत्प्रवणीकृतः आत्मैकपरायणतां नीतः [हरः] शिवः यदा [पार्वतीं] गौरीं [परिणेष्यति] उपयंस्यते तदा [उपलब्धसुखः] प्राप्तविषयसंगसुखः

॥ श्रीः ॥

आनन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपञ्जिकायां

# ॥ पञ्चमः सर्गः ॥

अद्भुत[1] रतिकामोदन्तमारचय्येदानीं देवीवृत्तं वर्णयितुमाह[2]—

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥१॥

१ अद्भुतम्—नास्ति—मुद्रा  २ देवीवृत्तान्तमाह—मुद्रा

तथेत्यादि ॥ अथ [पार्वती] गौरी हृदयेन चेतसा रूपं रामणीयकं निनिन्द जगर्ह ।[1] धिग् मदीयं रूपं येन हरो वशी नाकारि ।[1] [पिनाकिना] शम्भुना तथा पूर्वोक्तप्रकारेण समक्षमेव[2] [मनोभवं] कामं [दहता] प्लुष्यता [भग्नमनोरथा] भग्नो नाशितः 'शिवो मे भर्ता भूयाद्' इति मनोरथो यस्याः सा तथोक्ता । किमित्येवता रूपं निन्दितवती । हि यस्मात् चारुता [प्रियेषु] भर्तृषु सौभाग्यफला प्रियविषये सौभाग्यं वाल्लभ्यमेव फलं यस्याः सा । वल्लभा यदि भवस्य भवेत् ततः कथमसौ मदनं दहेत् । या च न सुभगा तस्याः किं रूपेण । लावण्यसौभाग्ययोः स्वरूपमाह—

[3]'सञ्जल्पन-सन्निरीक्षण-सद्गमनानीति वदन्ति लावण्यम् ।
स्पृहणीयो ग्रन्थसुभगः स्पर्शगुणो भवति सौभाग्यम्' ॥

१ 'धिग्...नाकारि'—नास्ति—व ख. म ग मुद्रा  २. प्रत्यक्षमेव—म व ग
३ सञ्जल्पन... सौभाग्यम्'—नास्ति—व न म व ग मुद्रा, 'नरेन्द्रवत्सराजचरितम्'—अपा—न ख. न ग मुद्रा.

इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥२॥

इयेषेत्यादि ॥ ततोऽसौ समाधिम् आस्थाय[1] आश्रित्य तपोभिरात्मनः अवन्ध्यरूपतां सफलरम्यत्वं[2] [कर्तुं] विधातुम् [इयेष] अचकमत[3] । न चैतदद्भुतम् । यतः अन्यथा तपसा विना [तथाविधं] तादृशं देहार्धदाननिदान प्रेम तादृशः चतु[4]र्दशभुवनाधिपतिः पतिः भगवान् महेश्वर इति कथम् एतत् द्वयम् [अवाप्यते] समासाद्यते, अपि[5] तु न । यतस्तपोमूलमिष्टपदवी । तदुक्तम्—

'यद्दूरं यद्दुराराध्यं यच्च दूरे व्यवस्थितम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥[5]'

चाशब्दः पूर्वोक्तापेक्षया । तादृशतथाविधशब्दौ सामान्यार्थावपि विशेषणयोरुत्कृष्टत्वेन प्रसिद्धत्वाद्विशेषणातिशयनिष्ठावेव ॥२॥

१. 'नियमाधिनियमम्'—अपा —अ. 'नियमम्'—अपा. मुशा. २ सफल रामणीयकम—न मुशा ३ चकमे—व. न. मुशा ४. सप्त०—शा. मुशा.
५ ५. 'अपि...दुरतिक्रमम्'—नास्ति—व. न शा. मुपा, द्र मनु० ११-२३८

निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशं प्रति सक्तमानसाम्[1] ।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥३॥[2]

१ गिरीशप्रतिसक्तमानसाम्—म. २. मुद्रितशारदायामयं श्लोको नास्ति ।

निशम्येत्यादि ॥ [सुतां] दुहितरं गिरीशं ईश्वरं प्रति सक्तमानसाम् आरोपितचित्तामाहितान्तःकरणां सतीं [तपसे तपोऽर्थं [कृतोद्यमां] विहितोद्योगां निशम्य श्रुत्वा मेना वक्षसा हृदयेन च [परिरभ्य] आलिङ्ग्य सुताम् उवाच । किं कुर्वती । महतः गरीयसो दुश्चरात् मुनिव्रताम् जपनियमाम् निवारयन्ती निषेधयन्ती । व्रतं शास्त्रविहितो नियमः ॥३॥

कथमनुशासतीत्याह—

मनीषिताः सन्ति गृहेऽपि[1] देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥४॥

१. गृहेषु—म २. ३—शा मुशा.

मनीषिता इत्यादि ॥ [वत्से] हे पुत्रि । यदि तदर्थं च तपस्यसि[1] तदलं, यतः [गृहे अपि] निजवेश्मन्येव [मनीषिताः] वाञ्छिताः [अभिमताः] देवताः देवाः सन्ति । अतश्च क्लेशात्मकं क्व तपः । क्व च सुकुमारं तावकं त्वदीयं [वपुः] शरीरम् । तदेव दृष्टान्तेन दृढयति । पेलवं सुकुमारं शिरीषपुष्पं [भ्रमरस्य] षट्पदस्य पदम् अवस्थानम् [सहेत] सोढुं शक्नुयात् न [पुनः] तु [पतत्रिणः] शुकादेः पक्षिणः । मनीषितमभिप्रेतं यथा–'मनीषितं द्यौरपि येन दुग्धा' [रघु० ५–३३] इति ॥४॥

१ देवताराधनार्थं चेत्तपस्यति–व भ ल शा मुश

इति ध्रुवेच्छा[1]मनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात्[2] ।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥५॥

१ ध्रुवेच्छा0–म स ल व २ ४-शा मुश

इतीति ॥ श्रुतेच्छां तपोविषये श्रुता इच्छाऽभिलाषो यस्यास्तां श्रुतेच्छां ज्ञाताशया [सुता] दुहितरम् [इति] इत्थम् अनुशासती उपदिशन्त्यपि मेना उद्यमात् उत्साहात् नियन्तुं[1] न शशाक[2] । अतः [ईप्सितार्थस्थिरनिश्चयं] ईप्सितेऽर्थे[3] स्थिरो दृढो निश्चयो व्यवसायो[4] यस्य तत् तादृश मनः कः प्रतीपयेत् व्यावर्तयेत् । प्रतीकरोतीति प्रतीपयति निम्नाभिमुखम् अधः प्रवृत्तं पयः तोयमिव[5] ॥५॥

१ निवारयितुम्–अपा ल २ न प्राभवत्– व शा मुश ३ 'विनी वित वस्तुनि'–अपा –ल न ४. अध्यवसाय –ल ५ च दा·दोऽम्बार्थे'–अपा –ल न

कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥६॥[1]

१ ५–शा मुश

कदाचिदित्यादि ॥ ततः [कदाचित्] कतिपयकालापगमेऽसौ [आसन्नसखीमुखेन] निकटवयस्याद्वारेण [पितरं] जनकम् आत्मनः [अरण्यनिवासं] वनावस्थानम् [अयाचत] प्रार्थयत । किमर्थम् [फलोदयान्ताय] ईश्वराराधनमेव फलं तस्योदय उत्पत्तिः स एव [अन्त] उदयान्तो यस्य तस्मै तादृशाय [तपःसमाधये] तपोऽर्थं समाधये नियमार्थम् । मनोरथज्ञम

इत्यनुज्ञासम्पत्तिं ब्रूत इति ।[1] यो ह्यभिलाषत्वरां न वेत्ति नासावनुजानाति । [मनस्विनी] तेजोऽहङ्कारादिभिर्युक्तं[2] मनो यस्याः सा मनस्विनी मानिनी । सख्योः समक्षं पराभवं नासहतेति भावः । 'अस्मायामेधास्रजो विनिः' [पा० सू० ५-२-१२१] इति विनिः प्रत्ययः । 'तसौ मत्वर्थे' [पा० सू० १-४-१९] इति भत्वाद्रुत्वाभावः ॥६॥

१ अनुज्ञासम्पन्नं सूचयति–ब न, ०सम्पत्तिं सूचयति–मुद्रा २ साभिमानम्–ग न मुद्रा

अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत् ॥७॥[1]

१ ६–सा मुद्रा

अथानुरूपेत्यादि ॥ [अथ] पितृप्रार्थनानन्तरं ततः [गौरी] देवी [शिखरं] शृङ्गमद्रिशिखरं तपोऽर्थं [जगाम] अयासीत् । यतः गरीयसा पूज्येन गुरुणा पित्रा [कृताभ्यनुज्ञा] दत्तानुमता । तेनैव दुष्करे कर्मणि कथमनुज्ञातेति चेदिदमाह–[अनुरूपाभिनिवेशतोषिणा] योग्याभिनिवेशतुष्टेन[1] 'स्थानेऽस्या अभिनिवेशो यातु हराराधनाय' इत्येवं 'धन्योऽहम्' इति निश्चित्य हृष्टः । किं शिखरमित्याह–गौरीशिखरम् इति[3] । शिखण्डिमत् सदा मयूरयुतमिति रम्यत्वोक्तिः ॥७॥

१ ०परितुष्टेन–ब, ०तोषिणा–मुद्रा २ बर्हियुतम्–ग ३ 'गौरीशिखरशब्देन प्रजगति पश्चादनन्तरं लोके प्रसिद्धं गौरीशिखरमिति ।'–अधिक–ग न ना. मुद्रा.

विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम् ।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥८॥[1]

१ ७–सा मुद्रा

विमुच्येत्यादि ॥ [अहार्यनिश्चया] तपस्यहार्यो हर्तुमशक्यो निश्चयो यस्याः सा गौरी[1] [हारं] मुक्ताहारं [विमुच्य] अपास्य नवारुणं [बल्कलं] वल्कचीरं [बबन्ध] दधे[2] । कीदृशं हारम् । [विलोलयष्टिप्रविलुप्तचन्दनं]

१ देवी–ब न २ परिदधे–ब

क्रीडाकम्पानुबन्धाद्विलोलया चटुलया³ यष्ट्या, तदा प्रविलुप्तं उत्पुंसितं चन्दनरागं⁴ येन स तं [बबन्ध] दध्रे। [बालारुणबभ्रु] नवोदितारुणकपिशं⁵ भूर्जत्वचम्। तथा [पयोधरोत्सेधविशीर्णसंहति] स्तनोच्छ्रयेण त्रुटितं सन्धिबन्धं यस्य तत् ॥८॥

३ चपलया—मुद्रा. ४ लतयोरपुनितताङ्गरागम्—मुद्रा ५ ०तानूरुकपिलम्—मुद्रा.

यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम्।
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥९॥¹

१ ८-वा मुद्रा

यथा प्रसिद्धैरिति ॥ [तत्] गौर्याः [आननम्] मुखं प्रसिद्धैः अलंकृतैः [शिरोरुहैः] केशैः कृष्णकोमलकुटिलप्रलम्बनीरन्ध्रैः¹ यथा [मधुरं] मनोज्ञम् [एवं] तथैव जटाभिः अपि [अभूत्] बभूव। तथाहि [पङ्कजं] कमलं [न केवलं षट्पदश्रेणिभिः] भ्रमरावलिभिः एव [प्रकाशते] शोभते यावत् [सशैवलासङ्गं] शैवालसम्पर्केणापि। सह शैवला संगेन वर्तते यत्तच्छशैवलासंगम् ॥९॥

१. कृष्ण.. रन्ध्रैः'-नास्ति-वा मुद्रा

प्रतिक्षणं सा कृतरोमविक्रियां व्रताय मौञ्जीं त्रिगुणां बभार याम्।
अकारि तत्पूर्वनिबद्धया तया सरागमस्या रशनागुणास्पदम् ॥१०॥²

२ ९-वा मुद्रा.

प्रतिक्षणमित्यादि ॥ [प्रतिक्षणं] मुहुर्मुहुर्विहिततपस्विवेषा सा [व्रताय] व्रतार्थं त्रिगुणां मौञ्जीं मेखलां [बभार] उवाह। तया तस्याः [रशनागुणास्पदं] काञ्चीगुणस्थानं सरागं लोहितम् अकारि व्यधायि। यतः [तत्पूर्वनिबद्धया] तत्पूर्वं तदादि निबद्धया¹। अतश्च नितम्बस्य सौकुमार्यात् मौञ्ज्याश्च पारुष्याद्रक्तत्वादानम्² ॥१०॥

१ ०गुणनिबद्धया—व. २ ०रक्तत्वादनम्— मुद्रा.

विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागारुणिताच्च कन्दुकात्[1] ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥११॥[2]

१ कञ्चुकात्–स   २. १०–या मुद्रा

विसृष्टरागादित्यादि ॥ तया अधरात् कन्दुकात् च [कर] पाणिः [निवर्तितः] निषिद्धः अक्षसूत्र[1]प्रणयी व्यसनी [कृत] विदधे । इदानीं[2] तस्योचितत्वात् । आदौ ह्यसौ[3] रागोत्पादनाय ओष्ठासक्तालक्तकः[3] आसीत् । क्रीडार्थं च कन्दुके । कीदृशादधरात् । [विसृष्टरागात्] विसृष्टः त्यक्तः उपेक्षितो रागोऽलक्तकादिर्येन यस्य वा । रज्यतेऽनेनेति रागः । कन्दुकात् [स्तनाङ्गरागारुणितात्] स्तनाङ्गरागेण कुचकुङ्कुमेनाऽरुणितादिति विपरीतोक्तिः । कीदृशः करः । [कुशाङ्कुरादानपरिक्षताङ्गुलिः] कुशाङ्कुरादानेन दर्भसूचीग्रहणेन परिक्षताङ्गुलिः पाटितकरशाखः । प्रीतिर्विद्यते यस्याऽसौ प्रणयी ॥११॥

१. जपमाला०–अ पा–ल   २ तदानीम्— ब. ल, मुद्रा   ३ ०अधर –अपा –ल

महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥१२॥[1]

१ ११–शा मुद्रा.

महार्हेत्यादि ॥ या देवी पूर्वं [महार्हशय्यापरिवर्तनच्युतैः] उत्कृष्ट[1]शयनचलनपतितैः [स्वकेशपुष्पैः] निजकबरीकुसुमैः अपि दूयते स्म अखिद्यत । [सा] असौ तदा [बाहुलतोपधायिनी] भुजलतामुपधानीकृत्य निषेदुषी निषण्णा उपविष्टेव हस्तमूलं भूमावारोप्याऽवष्टभ्य,[2]यतो योगनिद्रा समाधौ उपविष्टैः क्रियते ।[2] केवले निरावरणे शाद्वलरहिते । स्थण्डिले स्थले एव [अशेत] अधः सुष्वाप । [3]व्रतवशेन स्थण्डिलशयनस्योचितत्वात्[3] । महानुत्कृष्टोऽर्हो योग्यो यस्याः सा महार्हा यद्वा बहुयत्ना । बाहुलतामुपधाति शिरसि करोतीति बाहुलतोपधायिनी । दूयते स्म इति 'लट् स्मे' [पा. सू. ३-२-११८] ॥१२॥

१ परार्ध्य०–मुद्रा   २...२ 'यतो... ...क्रियते'–नास्ति–अ. ल शा. मुद्रा
३...३ 'व्रत ...त्वात्'–नास्ति–अ ल शा. मुद्रा ।

तपोवशाद्विभ्रमत्यागोऽत्र कविभिरुह्यते—

पुनर्ग्रहीतुं नियमस्थया तया द्वयेपु[1] निक्षेपमिवा[2]र्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं[3] हरिणाङ्गनासु च ॥१३॥[4]

१ द्वयेऽपि म द्वयोपु—स ब   २ निक्षेप इव—स म ब   ३ दृष्टिम —स ब   ४ १२—दा मुश्रा

पुनर्ग्रहीतुमित्यादि ॥ तया गौर्या [नियमस्थया] व्रतस्थया निकटवर्तिषु [द्वयेषु] उभयेषु द्वयम् इद निक्षेपम् इव न्यासमिव[1] [पुनर्ग्रहीतुं] पुनरादातुम् अर्पितं निहितम्[2] । केषु किमित्याह—तन्वीषु लतासु [विलासचेष्टितं] विभ्रमपरिभ्रमणं । [विलोलदृष्टं] चटुलं च वीक्षितं [हरिणाङ्गनासु] मृगीषु । विशेष्यस्य क्लीबत्वेऽपि द्वयेष्विति सामान्योपक्रमादस्त्रीलिङ्गेन निर्देशः । निक्षिप्यत इति निक्षेपः । द्वयविशेषणत्वान्नपुंसकत्वम्[3] । एतदेव [च] दर्शयितुं लतास्वित्यादि द्वयमित्येकावयवापेक्षया एकवचनम् ॥१३॥

१ न्यासभूतमिव—व मगा   २ स्थापितम—अपा —व मुगा
३ तन्नानुपपन्नम—व अ ए

अतन्द्रिता सा स्वयमेव वृक्षकान् घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्त[1]जन्मना न पुत्रवात्सल्यमपाकरिष्यति ॥१४॥

१ प्रथमाप्त०—स

अतन्द्रितेत्यादि ॥ सा देवी [अतन्द्रिता] अनलसा सती वृक्षकान् अल्पतरून् [घटस्तनप्रस्रवणैः] कलशकुचपयोभिः [स्वयमेव] आत्मनैव [व्यवर्धयत्] पुपोष । येषां [प्रथमाप्तजन्मना] पूर्वलब्धजन्मत्वात् [गुहः] कुमार अपि [पुत्रवात्सल्यं] पुत्रस्नेहं न अपाकरिष्यति ।[1] पूर्वजातो हि मातृप्रियः । पुत्रश्च स्तनप्रस्रवणेन[2] पोष्यते । अल्पा ह्रस्वा वा वृक्षाः वृक्षकाः । तन्द्रा आलस्यम् । तारकादित्वादितच्[3] ॥१४॥

१ न उन्मीकरिष्यति—व न हरिष्यति—गा मुगा   २ ०प्रस्रवेण—म गा मुगा
३ 'ह्रस्वे' कन्प्रत्ययेनैरिति पर्यन्त'—अपा —म व

अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥१५॥[1]

१ १३— गा मुगा

अरण्येत्यादि ॥ [अरण्यबीजाञ्जलिदानलालिताः] अरण्यबीजानि नीवारादिव्रीहयस्तेषां मुष्टिभिः[1] पोषिताः[2] हरिणाः तथा तेन प्रकारेण [तस्याः] गौर्या विशश्वसुः विश्वासमाययुर्विश्रम्भमापुः । यथा तदीयैः [नयनैः] नेत्रैरसौ [कुतूहलात्] कौतुकात् [पुरः] अग्रतः[3] सखीनां [लोचने] लोचनानि अमिमीत पर्यच्छिनत् कस्य विशालानीति । नेत्र[4]मानमत्र सखीनां न त्वात्मनस्तपस्याया अनौचित्यात् । अमिमीतेति माङो लङ् । भृञामित् [पा० सू० ७-४-७६] इह न्याय्याः ॥१५॥

१. अञ्जलिदानेन–अ. ब. २. तोषिता–ब. ३ अग्रे–भ. ४ नेत्रे–शा. मुद्रा.

कृताभिषेकां हुतजातवेदसं त्वगुत्तरासंगवतीमधीतिनीम् ।[1]
दिदृक्षवस्तामृषयोऽभ्युपागमन्[2] धर्मवृद्धेषु वयः समीक्ष्यते ॥१६॥[3]

१. निरीतिनिम्–स. २. अभ्युपागमन्–म. म. ३ १५–शा. मुद्रा.

कृताभिषेकामित्यादि ॥ तां एवंविधां [दिदृक्षवः] द्रष्टुं [ऋषयः] वृद्धमुनयः अपि [उपागमन्] आययुः । कीदृशीम् । [कृताभिषेकां] त्रिकालविहितस्नानां हुतजातवेदसं कृताग्निकार्याम् । [त्वगुत्तरासंगवतीं] वल्कलोत्तरीयवतीम्[1] [अधीतिनीम्] अधीतं विद्यते यस्यास्तामधीतिनीं कृतस्वाध्यायाम् । ननु चिरन्तनास्ते कथं तां बालां द्रष्टुमाजग्मुरित्याह-[धर्मवृद्धेषु] [2]सुकृतसम्भारोन्नतेषु वयः न [समीक्ष्यते] ईक्ष्यते[2] । तदुक्तम्–

'न तेन वृद्धो भवति येनाऽस्य पलितं शिरः ।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥ [-मनु० २ १५६]

१. उत्तरीयं विद्यते यस्याः ताम् । त्वाचमनादियमाणा. कर्मधारयान्मत्वर्थीय प्रयुञ्जत एव । यथा–'बिसकिसलयच्छेदपाथेयवन्तः' [मेघ० १२] इत्यादौ ।–यदि वा त्वचा उत्तरासंगवतीमिति तृतीयासमासः' अथा—मुद्रा. २...२ 'सुकृत... ईक्ष्यते' – नास्ति–मुद्रा.

विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्ट[1]प्रसवार्चितातिथि ।
नवोटजाभ्यन्तरसम्भृतानलं तपोवनं तच्च बभूव पावनम् ॥१७॥[2]

१. ०रभीष्ट-म २ १६–मुद्रा

विरोधीत्यादि ॥ तत् देव्या तपोवनं [पावन] पवित्रं [बभूव] आसीत् । कीदृशम् । [विरोधिसत्त्वोज्झितपूर्वमत्सरम्] अहिमयूरादिभिर्विरोधिभि सत्त्वै प्राणिभि त्यक्तशाश्वतिकपूर्ववैरम् । यदुक्तम्–[अहिंसाप्रतिष्ठाया] 'तत्सन्निधौ वैरत्याग' [पातञ्जलयोगसूत्रम् २–३५] इति । तथा आस्ता सचेतना । स्थानरै [द्रुमै] तरुभि अपि [इष्टप्रसवार्चितातिथि] प्रियै पुष्पफल पूजितागन्तुकम् । [नवोटजाभ्यन्तरसंभृतानलं] पर्णगृहमध्ये सञ्चितानिम् ॥१७॥

यदा फलं सर्वतपःसमाधिना[1] न तावता लभ्यममंस्त काङ्क्षितम् ।
तदानपेक्ष्य[2] स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥१८॥[3]

१ पूर्वतन समाधि ।–म स व सर्वसमाधिसाधन–ना मुना २ अन वेक्ष्य–स ३ १७ ना मुना

यदा फलमित्यादि ॥ यदा असौ [काङ्क्षितं] अभिमतं फल [सर्व तप समाधिना] अविरलनियमाधानत्वात् तावता परिमितेन तपसा [न लभ्य] दुर्लभम् अमंस्त[1] अज्ञासीत्,[2] तदा [स्वशरीरमार्दवं] निजवपु सौकुमार्यम् [अनपेक्ष्य] अवगणय्यैव [महत् तप] कष्टानि व्रतानि[3] [चरितुं] कर्तुं [प्रचक्रमे] आरेभे । लब्धुं शक्यं लभ्यम् ॥१८॥

१ सुलभ नामस्त–मुना २ नाज्ञासीत–मुना. ३ चान्द्रायणादीनि' –अपा –मुना

क्लमं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपु काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च ससार[1]मेव च ॥१९॥[2]

१ ससार०–स म २ १८–ना मुना

क्लम ययावित्यादि ॥ या देवी [कन्दुकलीलया] क्रीडया अपि [क्लमं] खेदं [ययौ] जगाम । तया तीव्रतपश्चर्यया कठिनकायाना [मुनीनाम्] ऋषीणा [चरितं] चेष्टितं व्यगाह्यत पस्पृशे । अतश्चोत्प्रेक्षते[1] तदीय [वपु] शरीर [ध्रुवं] निश्चितं काञ्चनपद्मनिर्मितम्[2] । यत् [प्रकृत्या] स्वभावेन मृदु अथ च ससारं दृढं क्लेशसहम् । कनककमलं हि सौवर्ण त्वात् दृढ पद्मत्वान्मृदु[3] ॥१९॥

१. अनुमीयते–व उत्प्रेक्ष्यते–मुना २ 'कृतम'–अपा –व ना मुना
३ 'समिनमिति वमितमिनि च पाठावनापा' ।' अपा –व ल न

शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥२०॥[1]

१ १९ शा मुद्रा

शुचावित्यादि ॥ [शुचौ] आषाढे मासि [ज्वलता] देदीप्यमानाना चतुर्णां [हविर्भुजां] अग्नीना [मध्यगता] मध्यस्था सती देवी [नेत्रप्रतिघातिनीं] नयननाशिनीं [प्रभाम्] अर्कदीप्तिं [विजित्य] परिभूय[1] [अनन्यदृष्टि.] तद्गतदृष्टि [सवितारं] सूर्यम् [ऐक्षत] अद्राक्षीदिति पञ्चाग्नितप साधना कथिता[2] । शुचिस्मिता निर्मलहसितेति अक्रान्तित्वकथनम् ॥२०॥

१ अनुभूय-व., अभिभूय-मुद्रा २ ०तप कथनम-मुद्रा

तथापि तप्तं[1] सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ ।
अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ॥२१॥[2]

१ तया ततप्तम-म तथाभितप्तम-स २ २० शा मुद्रा

तथापीत्यादि ॥ तथा तेन[1] प्रकारेण [सवितु गभस्तिभि] रविरश्मिभि तप्तम् अपि [तदीयं मुखं] देवीवक्त्रं [कमलश्रियं] नलिनलक्ष्मीं [दधौ] उवाह[2]। कमलं[3] हि तपनतापाद् विकसति। केवलम् अस्य [अपाङ्गयो॰] नेत्रप्रान्तयो॰ [शनै शनै] क्रमात् [श्यामिकया] कालिम्ना पदं कृतम् । अतिसौकुमार्यात् ॥२१॥

१ पूर्वोक्त०-व ल २. बभार-शा मुद्रा ३ पद्मम्-ल

अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः ॥२२॥[1]

१ २१-शा मुद्रा

अयाचितेत्यादि ॥ तस्याः देव्याः पारणाविधि शरीरयात्रासम्पत्तिः [वृक्षवृत्तिव्यतिरिक्तसाधनः] वृक्षवृत्तेर्व्यतिरिक्तसाधनोऽधिकोपकरणो न [बभूव] आसीत् । तरुवृत्तितुल्यो बभूव[1] । तथा हि [अयाचितोपस्थितम्] अप्रार्थितोपनतम्[2] [अम्बु] तोयं केवलम् अस्या पारणम् । [रसात्मकः] अमृतमय [उडुपते] मयूखा॰ च । द्रुमाणामप्यम्बु शीतांशुरश्मयश्च जीवितम्[3] । किल इत्यागमे ॥२२॥

१ अभूत्'-अपा-व ल मुद्रा २. अप्रार्थितापनीतम-व ल
३ जीवनम्-व

निकामतप्ता द्विविधेन[1] वह्निना नभश्चरेणेन्धनसंभृतेन च ।
तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥२३॥[2]

१ विविधेन–म २ २२–मा मुना

निकामतप्तेत्यादि ॥ सा देवी रविकाष्ठजभेदात् द्विविधेन द्विरूपेण [वह्निना] अग्निना पूर्वं [निकामतप्ता] ग्लपिता सती तत तपात्यये घर्मान्ते[1] [नवैः] प्रथमैः [वारिभिः] जलैः[2] [उक्षिता] सिक्ता भूरिव [ऊर्ध्वगम्] ऊर्ध्वप्रवृत्तम् [उष्माणं] बाष्पम् [अमुञ्चत्] मुमुच प्रावि इत्यर्थः । सह [भुवा] उर्व्या सह । पृथिवी हि दावाग्निना अर्केण च तापिता सती[3] मेघजलसिक्ता उष्माणं मुञ्चति[4] ॥२३॥

१ ग्रीष्मान्ते व २ प्रथमजल–मुना ३ वर्षासु–अपा–व ना मुना ४ तथा ग्रीष्म–अपा भ व ना मुना

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥२४॥[1]

१ २३ मा मुना

स्थिता क्षणमित्यादि ॥ तस्या गौर्याः प्रथमोदबिन्दवः प्रथमप्रवृत्ता उदबिन्दवो जलकणाः चिरेण [नाभिं] नाभिस्थानं [प्रपेदिरे] प्रापुः[1] । तथा हि पूर्वं [क्षणं] क्षणमात्रं पक्ष्मसु अक्षिलोमसु स्थिताः विनम्रनयनत्वा[2]त्ताभ्यः पतिताः ॥ तत ताडिताधराः[3] । ततोऽपि [पयोधरोत्सेधनिपातचूर्णिताः] स्तनोच्छ्रयेण स्तनपातेन चूर्णिताः । तदनु नमितत्वात्[4] [वलीषु] वलित्रयमध्ये स्खलिताः । अनन्तरं नाभौ मग्नाः । तदनेन प्रथमप्रावृट्स्वरूपं कथयता देव्याः रूपातिशयः सूचितः । उदकस्य बिन्दव उदबिन्दवः । 'मन्थौदन– ' [पा. सू. ६–३–६०] इत्यादिना उदादेशः । उत्सेध उच्छ्राय ॥२४॥

१ प्राप्ता–म न २ घनत्वा०–मा मुना ३ बाहुशोष्ठा–अपा ल न ४ निम्नत्वात–व व न ना मुना

शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥२५॥[1]

१ ०वात०–न म व २ २४–मा मुना

शिलाशयामित्यादि ॥ तां पार्वतीं क्षपाः निशाः [तडिन्मयैः] विद्युद्रूपैः उन्मिषितैः व्यलोकयन् ददृशुः ।[1] उत्प्रेक्षते महातपः [साक्ष्य.] साक्षित्वे स्थिताः इव । साक्षी ह्यसकृत्पश्यति । कीदृशीं ताम् । [शिलाशयां] शिलायां शेते इति शिलशया तां दृषदि संवेशिनीम् । स्थण्डिले हि तदा पङ्कसद्भावः । [अनिकेतवासिनीं] बहिरेव स्थायिनीम् । कदा । निरन्तरासु अखण्डितासु[2] अन्तरवर्षवृष्टिषु अन्तरे मध्ये वर्षं जलमयं यासां तासु वृष्टिषु करकारूपासु सतीषु, भङ्गानिवर्षेषु पतत्स्वित्यर्थः । एवं हि तपसो महत्त्वं भवति । वर्षवृष्टिशब्दयोरेकार्थयोः प्रयोगादत्र विशेषोऽवसेयः[3] । साक्षिणो भावः कर्म वा साक्ष्यम् ॥२५॥

१. पार्वत्या उत्कटतपसः क्षपाः साक्षिणो जाता इत्यर्थः–अपा –म. ब न.
२. महतासु–ब. भ व.  ३. व्याख्यान्तराणि स्वहृद्यत्वान्न दर्शितानि ।–अपा.–भ. ब. ल. न. मुद्रापाठो.

निनाय सात्यर्थहिमोत्तरानिलाः[1] सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥२६॥[2]

१. सात्यन्तहिमोत्किरानिलाः–म. मात्यर्थहिमोत्करानिला –म २ २५–वा मुना

निनाय सेत्यादि ॥ सा गौरी सहस्य रात्रिः पौषनिशा अतिशीतला [उदवासतत्परा] जलवासतत्परा सती निनाय अत्यवाहयत् । कीदृशीः । [अत्यर्थहिमोत्तरानिलाः] अत्यर्थं हिमोत्तरस्तुषाराधिकोऽनिलो वायुर्यासु ताः । उत्तराशब्द आधिक्यं ब्रुवाणः संमिश्रत्वमाह । यथा–'कपोत्तरं भीरु तयोपगूढम्' [रघु. १३-२८][1] इत्यादि । कृपावती सदया, स्वयं वियोगव्यथानुभावात् । [पुरः] अग्रतः वियुक्ते विश्लिष्टे [चक्रवाकयोः] रथाङ्गयुगले कृपावती विश्लेषवशात् । परस्पराक्रन्दिनि कूजिनि । एकस्थानस्थितयोर्हि तयोरन्योन्याऽदर्शनमेव वियोगः । उदके वासः उदवासः,[2] उदवासे तत्परा । शरद्वसन्तयोरनुष्णशीतत्वान्न तयो वर्णनम्, शिशिरेऽपि हैमन्तेनैकयोगक्षेमः ॥२६॥

१. ०ँहिम०–म.  २. 'वल्मीकाग्र रामवशात्कन्ते' [रघु. १६-६०], दूर्वायवाङ्कुरप्लक्षत्वगभिन्नपुटोत्तरम्' [रघु १७-१२]–अपा.–मुना.  ३ 'नगवासमवाङ्गतिषु च' [पा. सू. ६.–३ -५८] इत्युदाहरणं–अपा –मुना.

मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाकरोदपाम् ॥२७॥[1]

१ २६–शा मुद्रा

मुखेन सेत्यादि ॥ [तुषारवृष्टिक्षतपद्मसंपदां] हिमसेकेन दग्धाब्जादीनाम्[1] [अपां] वारीणाम्[2] । सा देवी तोयान्तःस्था । [पद्मसुगन्धिना] कमलसुरभिणा [मुखेन] वक्त्रेण [सरोजसंधानम् इव] जलजसन्धानमिव अकरोत् पद्मरचनामिव व्यधत्त । पद्मे हि पलाशैर्भाव्यम् । तत्तु [प्रवेपमानाधरपत्रशोभिना] प्रवेपमानः कम्पमानो जाड्यवशाद् योऽसावधरस्तेनैव पत्रेण शोभते । निशि इति तदाप्यस्यागो जलमध्ये[3] प्रतिपाद्यते । 'पद्दन्नोमास्हृन्निश ' [पा० सू० ६–१–६३] इत्यादिना निशाया निशादेशः ॥२७॥

१ दग्धाम्भोजश्रीणा–व भ ल न शा मुद्रा २ नीराणा–व शा मुद्रा
३ ०वास–अपा –व न

स्वयंविशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णामिति[1] तां पुराविदः ॥२८॥

१ ०त्यपर्णेति च–व भ न २ २७–शा मुद्रा

स्वयमित्यादि ॥ तपसः परा परा काष्ठा कोटि[1]र्यत् [स्वयंविशीर्णद्रुमपर्णवृत्तिता] आत्मना पतितेन तरुपत्रेण[2] वृत्ति[3] शरीरयात्रा क्रियते । तया पुनः तु तदपि अपाकीर्णं त्यक्तं तदा तां प्रियंवदां प्रियभाषिणीम् अपर्णां पुराविदः चिरन्तनाः वदन्ति । न भुक्तं पर्णमपि ययेति कृत्वा गौर्या अपर्णेति नाम । यदुक्तम्–'अपर्णा चैकपर्णा च तथा स्यादेकपाटला।'[4] इति । अपर्णामिति कथं द्वितीया । इतिशब्देन हि प्रातिपदिकार्थमात्रेऽवस्थापनात् प्रथमया भवितुं न्याय्यम् । यथा–'प्रयाद्मुं नारद इत्यबोधि स' [शिशु० १–३] इति चिन्त्यमेतत् । यदि वेतिशब्देन पुराविदा सम्बन्धो न त्वपर्णायास्तां देवीमपर्णामितो वदन्ति इति पुराविद आहुरित्यर्थः ॥२७॥

१ प्रान्तभूमि –द भ २ ०पर्णेन–व न ३ प्राणवृत्ति–भ व
न ४ 'अपर्णा...पाटला'–नास्ति–भ व

मृणालिकापेलव[1]मेवमादिभिर्व्रतैः स्वमङ्गं[2] ग्लपयन्त्य[3]हर्निशं । मु
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥२९॥

१. ०कोमल०-स ब  २. तदङ्ग—मुद्रा  ३ क्षपयन्त्य०-ब. शा. मुद्रा.

मृणालिकेत्यादि ॥ एवमादिभिः पञ्चाग्निप्रभृतिभिः [व्रतैः] तपोभिः मृणालिकापेलवं बिस[1]सुकुमारम् [अहर्निशं] दिवारात्रं [स्वं] निजम् [अङ्गं] वपुः [ग्लपयन्ती] क्लेशयन्ती देवी [तपस्विनां] वृद्धमुनीनां [कठिनैः] कठोरैः [शरीरैः] देहैः [उपार्जितं] सञ्चितं तपः दूरम् अत्यन्तम् अधश्चकार जिगाय । पेलवशब्दः केषाञ्चिन्मते ग्राम्यो[2] न सर्वेषाम् ॥२९॥

१. बिसिनी०-मुद्रा.  २. ग्राम्य –मुद्रा

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥३०॥[1]

१ २९—शा. मुद्रा

अथाजिनेत्यादि ॥ [अथ] ततः कदाचित् जटिलः विप्रः [तपोवनं] गौर्याश्रमं [विवेश] आययौ । कीदृशः । [अजिनाषाढधरः] अजिनं मृगचर्म, आषाढः पलाशदण्डस्तौ बिभर्ति यः । [प्रगल्भवाक्] प्रगल्भा वाचाला वाग् यस्य [ब्रह्ममयेन तेजसा] ब्राह्म्या कान्त्या [ज्वलन् इव] देदीप्यमान इव । अतश्चोत्प्रेक्षते–शरीरबद्ध देहवान् प्रथमाश्रमः यथा ब्रह्मचारीव[1] ॥३०॥

१. 'ब्रह्मण आगत ब्रह्ममय तेन वेदसमुत्थेन तेजसा'–अपा.–मुद्रा.

तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वति[1]गौरवाः क्रियाः ॥३१॥[2]

१ ०ष्वति०-म  २. ३०—शा. मुद्रा.

तमातिथेयीत्यादि ॥ तं विप्रं [पार्वती] गौरी[1] [बहुमानपूर्वया] गौरवपुरःसरया [सपर्यया] अर्चया [प्रत्युदियाय] प्रत्युज्जगाम पूजार्थमग्रत

१ देवी–व ब शा मुद्रा

सायया'वित्यर्थः। यतोऽसौ [आतिथेयी] परिचरणचतुरा ।[3] ननु साऽपि स्वयं तपस्विन्येव, नैतस्मादूना तत् कोऽस्यास्तदर्चां प्रति भर इत्याह- यतः निविष्टचेतसां निरहङ्का[4]रमनसां साम्येऽपि सति वपुर्विशेषेषु रूपातिशयेषु [अधिगौरवाः क्रियाः] सबहुमानचेष्टाः प्रसरन्ति[5] । आडम्बराणि किल पूज्यानि । स चाजिनादियुक्तत्वात् वेषवान् । केचित्तु साम्येऽपि समदृष्टत्वेऽ[6]पीति किलाहुः । कण्ड्वादिषु सपरशब्दस्य [धा० पा० १९६४] पाठात्सपर्येति यक्प्रत्ययात्[7] ॥३१॥

२ निर्यात्रि०-भ ल न शा मुदा ३ ०कुशला-व न, शा 'पथ्यतिथिवसतिस्वपतेर्ढञ्' [पा० सू० ४-४-१०४] अपा -मुदा ४ ०कारा०-भ शात-ल शा मुदा ५ अधिगौरवाक्रिया चेष्टा भवन्ति। अधिकगौरव यासु ता ।'-अपा भ व ६ समदृष्टित्वे-व न. ७ द्र कण्ड्वादिभ्यो यक् । [पा० सू० ३-१-२७]

विधिप्रयुक्तां प्रतिगृह्य[1] सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥३२॥[2]

१ परिगृह्य-भ २ ३१ शा मुदा

विधिप्रयुक्तामित्यादि ॥ ततः [स] असौ जटी [विधिप्रयुक्तां] सम्यक्कल्पितां [सत्क्रियाम्] अर्चां [प्रतिगृह्य] आदाय [क्षणं] किञ्चित् च[1] [परिश्रमं] विनीय विश्रम्य [वक्तु] गदितुं [प्रचक्रमे] प्रारेभे । अनुज्झितक्रमः आश्रितपरिपाटीकः वक्तव्यस्य सक्रमाभिधानात् । रागद्वेषरहितात् ऋजुना एव स्पष्टेनैव [चक्षुषा] नेत्रेण [उमां] देवीं पश्यन् । अनन्तरं किलाऽसौ क्रोधं रागं[2] च दर्शयिष्यति ॥३२॥

१ '(नाम) किल'-अपा -व न मुदा २ रागद्वेषम्-व न, शा मुदा

तमेव क्रममाह—

अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥३३॥[1]

१ ३२-शा मुदा

अपि क्रियार्थमित्यादि ॥ अपि इति प्रश्ने[1] । [क्रियार्थं] होमार्थं कच्चित् [ते] तव [समित्कुशम्] इन्धनदर्भादि [सुलभं] सुप्रापम [अपि] च

[जलानि] तोयानि [स्नानविधिक्षमाणि] विषाद्यदूषितत्वादभिषेकयोग्यानि [अपि] कच्चिच्च [स्वशक्त्या] देहसामर्थ्यमवेक्ष्य[2] [तपसि] प्रवर्तसे व्रतानि कुरुषे न तु मूढाग्रहेण । यस्मात् [आद्यं] मुख्यतः शरीरं धर्मसाधनम् । [3]यदुक्तम्—

'शरीरं धर्मसंयुक्तं रक्षणीयं प्रयत्नतः ।
शरीराज्जायते धर्मः पर्वतात् सलिलं यथा' ।[3]

तस्माद्धर्माधारमेतत् । समिधश्च कुशाश्च समित्कुशम् । 'जातिरप्राणिनाम् ।' (पा० सू० --४-६) ।

१. अपि इति कामलाभ-प्रश्ने-म व ०परिप्रश्ने-ज, अपरिष्टप्रश्ने-मुशा
२ समीक्ष्य-मुशा. ३ . ३ 'यदुक्तम...यथा'-नास्ति-व भ ल ब न. शा मुशा.

अपि त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥३४॥[1]

१ ३३-शा मुशा

अपि त्वदित्यादि ॥ [अपि] कच्चित् आसां वीरुधां लतानां त्वद्दत्तोदकसंभृतं[1] [प्रवालं] किसलयम् अनुबन्धि सफलं वर्तते । किंभूतम् । [त्वदावर्जितवारिसंभृतं] त्वया क्षिप्तेन पानीयेन संभृतं प्रवृद्धम् । [चिरोज्झितालक्तकपाटलेन] बहुकालत्यक्तालक्तकेनाऽपि पाटलेन [ते] त्वदीयेन दन्तवाससा दशनाच्छादनेन यत् तुलां साम्यम् आरोहति स्पृशति । द्वयोरपि स्वभावलोहितत्वात् । [2]अथ चिरात्परित्यक्तेऽपि अलक्तके पाटलस्ताम्रः[2] । अनुबन्धनात्पुत्पद्यत इत्यनुबन्धि ॥३४॥

१. भवद्दत्तसेकाद्वकसञ्जातम्-व शा मुशा २ २ 'अथ...ताम्र' ।-नास्ति -व ल ब भ न शा मुशा

अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु[1] ।
य उत्पलाक्षि प्रचलैर्[2]विलोकितैस्[3]तवाक्षिसादृश्य[4]मिव प्रयुञ्जते ॥३५॥[5]

१ ०पहारिषु-म स २ उत्पलाक्षि प्रचल०-भ ग. ३ विलोचनै०-म ब ना म ।५ ३४-शा मुशा

अपि प्रसन्नमित्यादि ॥ [अपि] कच्चित् [ते] तव हरिणेषु मनः प्रसन्नं प्रीतिमत् स्थितम् । कुतोऽप्रसादशङ्केत्याह—[करस्थदर्भप्रणयापराधिषु] त्वत्पाणितलवर्तिकुशापहारेणापराधिषु कृतागस्सु । तथा ह्यसहनीयत्वे कारणमाह-ये च मृगाः [विलोचितैः] वीक्षणैः [तवाक्षिसापत्न्यं] त्वदक्ष्णोः सापत्न्यं वैरं स्पर्धामिव [प्रयुञ्जते] कुर्वते चटुलत्वात् । कीदृशैः [उत्पलक्षेपचलैः] उत्पलानां क्षेपः प्रेरणं[1] तद्वच्चलैः । क्षिप्यमानस्य कुवलयस्य[2] कम्पानुबन्धादतितरां शोभा भवति । आक्षेपस्त्वपपाठ एव । [3]न चापि सुरम्यपक्ष्मारूढं 'य उत्पलाक्षेपचलै' पाठः[3] ॥३५॥

१ कम्पोत्पादम्-अपा-२ शा. मुशा २ कुमुदस्य-ल. ३...३ प्रणय प्रार्थना, सपत्न शत्रु तस्य धर्मं सापत्न्य, वैर स्पर्धा वा ।-प्रपा-ब व ल भ. न शा मुशा.

यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथा हि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥३६॥[1]

१ ३५-शा मुशा

यदुच्यत इत्यादि ॥ हे पार्वति । यत् इदं लक्षणज्ञैः उच्यते ज्ञातं पत् [पापवृत्तये] पापा चाऽसौ वृत्तिराचारः पापवृत्तिस्तदर्थं रूपं न भवति । 'यत्राकृतिस्तत्र गुणाः वसन्ति'[1] । तत् इदानीं [वचः] वचनम् अव्यभिचारि सत्यम् । कुत इत्याह—तथा हि [ते] तव शीलम् [उदारदर्शने] विपुलनयने [तपस्विनां] मुनीनाम् अपि [उपदेशता] शिष्यवत्त्वं[2] [गतं] सम्पन्नम् । धर्मिष्ठा अपि हि त्वदीयं चरितं शिष्यन्ते[2] इत्यर्थः । यदि च रूपवन्तो दुःशीलाः स्युस्तत्र भवती धर्मपरा न स्यात् । तस्यास्तु रूपवत्त्वमुदारनयनत्वेनैवाक्षिप्तम् ॥३६॥

१ स्यु-ब. भ ल न २. शिक्षन्ते सप-न्नम्-व. ब शा. मुशा

विकीर्णसप्तर्षिबलिप्रहासिभि[1]स्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥३७॥[2]

१ ०प्रवाहिभि-ब. २ ३६-शा. मुशा.

विकीर्णसप्तर्षीत्यादि ॥ एष स [महीधरः] हिमवान् [सान्वयः] सपुत्रपौत्रः यथा त्वदीयैः अनाविलैः [चरितैः] चेष्टितैः [पावितः] पवित्री-

कृत. न तथा । दिवश्च्युतैः स्वर्गपतितैः सुरसैन्धवैरपि[1] [सलिलैः] निर्मलैरुदकैः। गङ्गा हि नाकात्तच्छिरसि पतिता । [विकीर्णसप्तर्षिबलिप्रहासिभिः] विकीर्णा विक्षिप्तो य सप्तर्षिभि पुष्पादिको बलिरुपहारस्तेन प्रहासिभिः, सितत्वात्स्मयमानैरिव ॥३७॥

१ सौरसे-धवै –ब. ब शा मुशा

अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भामिनि[1] ।
त्वया मनो निर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥३८॥

१ भाविनि–म ॥ २ ३७–शा मुशा

अनेनेत्यादि ॥ हे भामिनि । भा विद्यते यस्याः [इति भामिनी], मानिनी । आद्रौ सारत्वेन ज्ञातोऽपि [सविशेषम्] अद्य [त्रिवर्गसारः] त्रिवर्गस्य धर्मार्थकामलक्षणस्य धर्मः सार उत्कृष्टः मे [प्रतिभाति] प्रतिभासते। यत् त्वया [निर्विषयार्थकामया] अर्थकामावनादृत्य स एक एव [प्रतिगृह्य] अङ्गीकृत्य सेव्यते । यदि ह्यसौ सर्वोत्कृष्टो न स्यात्तत्कथं भवती धर्मार्थिनी तपस्येदिति ॥३८॥

गजनिमीलितैनैव धर्महेतुकत्वं तपसोऽस्या[1] उक्त्वेदानीं विशेषजिज्ञासयाह—

प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।
यतः सतां संनतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते ॥३९॥[2]

१ मदा–मुशा २ ३८–शा मुशा

प्रयुक्तेत्यादि ॥ हे [सन्नतगात्रि ।] नताङ्गि ।[1] मां परम् अन्यं संप्रतिपत्तुं बोद्धुं न अर्हसि । यतः [प्रयुक्तसत्कारविशेषम्] आत्मना स्वयमेव न त्वन्यमुखेन प्रयुक्तः[2] पूजातिशयो यस्य स तम् । योऽप्यात्मनाऽर्चित. स किमेतावता नान्यत्वमित्याह—यत. [सतां] साधूनां संगतं सख्यं [मनीषिभिः] बुधैः[3] साप्तपदीनमुच्यते । येन सह सप्तपदान्युच्चारितानि[4] स सखेत्यर्थः। यदुक्तम्—'सम्बन्धमाभाषणपूर्वमाहुः'[रघु० २-५] इति । आवयोश्चालापं[5] जातमेव ॥३९॥

१ कृशाङ्गि–ब. न शा. मुशा २ 'सत्कारविशेष'–अपा.–ब. ब. मुशा
३ पण्डितैः –ब शा मुशा, विद्वद्भि–ब भ ४ 'मार्गे वाकान्तानि'–अपा.–भ.
५. माद् मिलन–शा. मुशा

अतोऽत्र[1] किञ्चिद् भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने न चेद् रहस्यं प्रतिवक्तु[2]मर्हसि[3] ॥४०॥[4]

१ अतोऽत्र–श। मुशा २ प्रतिगोप्तु०–वा ३. प्रतिबोधयिष्यसि–अ ना.
४. ३९–मुशा

अतोऽत्रेत्यादि ॥ अत. सखिभावात् अत्र तपसि किञ्चिद् भवतीं कर्मतापन्नां बहुक्षमां कदर्थनासहां [अयं जनः] अहं [प्रष्टुमनाः] प्रष्टुकामः। द्विजातिभावात् ब्राह्मण्यात्[1] [उपपन्नचापलः] उपपन्नं सुलभं चापलं यस्य। बहुकौतुकादहं पृच्छामीत्यर्थः। [चेत्] यदि चैतत् न रहस्यं न गोप्यं तत् [प्रतिवक्तुं] प्रतीपं कथयितुम् अर्हसि । यतो बहुक्षमा त्वम् । 'इक्षिक्षमिभ्यां च'[3] इति णः । प्रष्टु मनो यस्य स प्रष्टुमनाः । 'तुंका-ममनसोरपि'[4] [इति मलोपः] ॥४०॥

१ ब्राह्मभावात्–भ २. 'कौतुकम्'–अपा –भ. शा मुशा. ३. द्र. पा० सू० ३–३१ अन्तर्गत...द्र पा० सू० ३–२–१ अन्तर्गत वार्तिकम् ।
४ द्र लुम्पेदवश्यम इत्ये तुं कामनसोरपि ।–काशिका ६–१–१४४

कुले प्रसूतिः प्रथमस्य वेधसः त्रिलोकसौन्दर्यमिवोदितं[1] वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतः परं वद[2] ॥४१॥[3]

१ ०मिवार्जित–अ. ना., ०मिवोदित–वा २ तव–ब. ३. ४०–शा मुशा.

कुले प्रसूतिरित्यादि ॥ [वद] कथय अतः [परम्] अधिकं तपःफलं किं [स्यात्] भवेत् । यत् यत्तपसाऽर्थनीयं[1] तत्सर्वं तवास्तीत्यर्थः । तथाहि—प्रथमस्य वेधसः[2] शम्भोः कुले [प्रसूतिः] जन्म । हरनिर्माणं हि हिमवानित्यागमः । तथा च भारविः—'प्रथयितुं विभुतामभिनिर्मितं प्रतिनिधिं जगतामिव शम्भुना ।' [किरात० ५–३] अन्ये त्वाहुः–प्रथमो विधाता ब्रह्मा प्रजापतिर्वा तस्य लोकमपत्यम् । 'प्रथमं परतः पर्वत' इति श्रुतेः । वपुः च ते मूर्तिः [त्रिलोकसौन्दर्यम् उदितं] त्रिलोकसौन्दर्य-

१. प्रार्थनीयम्–व. ब शा मुशा. २ आद्यस्य प्रजापतेः–व. शा मुशा

पुञ्जितम्[३] [इव] । ऐश्वर्यसुखम् अपि [असृग्यम्] अप्रार्थनीयं, पर्वतराजपुत्रीत्वात् । वयः अपि नवं प्राप्तयौवनत्वात्, अतश्च । तपःफलं स्याकिमतः परं वद[४] ॥४१॥

३ सौन्दर्यमिवोत्थितम्–व ब शा मुशा, त्रिभुवनरामणीयकमिवादितमुत्थितम्–छ.
४ 'त्रिसख्यो लोकस्त्रिलोक'–अपा–शा मुशा

भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।
–विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि[१] त्वयि ॥४२॥

१ तनूदरि–स शा मुशा, तलोदरि–अ ना    २ ४१–शा मुशा ४३–स

भवत्यनिष्टेत्यादि ॥ अपि च [मनस्विनीनां] मानिनीनां दुःसहात् अनिष्टात् वैधव्यलक्षणाद् ईदृशी प्रतिपत्तिः अनुष्ठानं तपश्चर्यालक्षणं भवति । तथा हे [कृशोदरि] कृशमध्ये । तत् अनिष्टं [त्वयि] तव [विचारमार्गप्रहितेन] विवेकपदवीनिक्षिप्तेन चेतसा[१] न दृश्यते[२] ॥४२॥

१ मनसा–अपा –व व न शा मुशा    २ लक्ष्यते–व ब ॥ शा मुशा

कुत इत्याह–

अलभ्यशोकाभि[१]भवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे ।
पराभिमर्शो[२] न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥४३॥[३]

१ अनन्यशोकाभि०–स    २ पराविमर्शो–शा मुशा चा    ३ ४२–शा मुशा, ४४–स

अलभ्यशोकेत्यादि ॥ [अलभ्यशोकाभिभवेयमाकृतिः] अलभ्योऽनर्हः शोकेन फ्लान्तिर्यस्याः सा तादृशी इयम् आकृतिः सस्थानम् । अस्यां हि आकृतौ वैधव्यं न योग्यम् । परिभवादपि वैराग्यं स्यात् । तदपि तव न संभवतीत्याह–पितुः गृहे सुभ्रु कुतः [विमानना] अवगणना [पराभिमर्शः] परकृतोऽप्यभिमर्शो विध्वंसनाभस्पर्शः[१] तव न अस्ति ।[२] शत्रुभूतेन केनचित् पराभवार्थं भवती कदाचिदपि न संस्पृष्टेत्यर्थः[२] । यस्मात् [पन्नगरत्नसूचये] उरगस्य मणिशलाकाग्रहणाय कः [करं] पाणिं [प्रसारयेत्] न हि त्वत्परिभवस्तस्यो भवति । सुभ्रशब्दो ह्रस्वः प्रमादजो नदीसंज्ञानिषधात् ॥४३॥

१ विध्वसनाय संस्पर्शः,–शा मुशा    २ 'शत्रुभूतेन संस्पृष्टेत्यर्थः ।'–नास्ति–व छ म

किमित्यपास्याभरणानि यौवने धृतं त्वया वार्द्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका[1] विभावरी यद्यरुणाय कल्पते ॥४४॥[2]

१ ०तारके–व व ना मुद्रा, विनिकीर्णतारके–अ ना २ ४३–ना मुद्रा., ४२–स

किमितीत्यादि ॥ इतश्च[1] [किं] कस्मात् [यौवने] तारुण्ये एव [आभरणानि] अलंकारान् [अपास्य] अपहाय [वार्द्धकशोभि वल्कलम्] स्थविरोचितवल्कलं चीरं [त्वया] भवत्या [धृतं] गृहीतम् । यत्किल चतुर्थे वयसि योग्यं तद् यौवनेऽनुचितम् । यद्येवं न स्यात् तर्हि कथं[2] [स्फुट-चन्द्रतारका] प्रकटशशिनक्षत्रा[3] [विभावरी] निशा यदि अरुणाय कल्पते लौहित्येन परिणमति । अरुणो ह्यसौ प्रभाते भवति । अरुणशब्दोऽत्रान्त-र्भावितभावार्थः । वल्कलस्य च रक्तत्वात्तदुपमानम् । 'क्लृपि सम्पद्यमाने च'[4] इति चतुर्थी । आभरणानां चन्द्रतारका उपमानम् । वृद्धस्य भावो वार्द्धम् यौवनत्वादण् । वार्द्धमेव वार्द्धकम् । केचिच्च मनोज्ञादिषु वृद्धशब्दं पठन्ति । [5]केचिदस्फुटतारका इति पठन्ति । उदयमात्रत्वादस्फुटता तत्र प्रथममुदयमानाश्चन्द्रतारका भविष्यदलंकारभागभूता अपास्य कथमन्त्य-वयस्तुल्याऽरुणोदयोचिता अलंकाराः स्युः ।[5] ॥४४॥

१ अतएव–व. ना. मुद्रा. २. तथा च कथय–व. भ. ३. ०नक्षत्रे–व. व, ना मुद्रा 'रात्रिमुखे'–अपा.–ना. मुद्रा ४. पा. सू. १–४–४४ –अन्तर्गत वार्तिकम । ५...५. 'केचिद...स्यु ।' नास्ति–ना मुद्रा.

तपसि कारणान्तराणि निषेधयितुमाह[1]–

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तद् ॥४५॥

१ उद्भाह्य दूषयितुमा०–व व ना. मुद्रा २. ४४–ना. मुद्रा

दिवं यदीत्यादि ॥ [दिवं] स्वर्गं [यदि] चेत् तपसा [प्रार्थयसे] अभिलषसि [वृथा] तन्निरर्थकोऽयं [श्रमः] क्लेशः । यतः [तव] त्वत् [पितुः प्रदेशाः] पितृप्रदेशा एव [देवभूमयः] सुरपुरम्[1] । अथ [उपयन्तारं] भर्तारं वाञ्छसि तद् अलं समाधिना मा नियमं कृथाः । यत. रत्नं न

१. सुरपुराणि–व. ना. मुद्रा.

गृहीतारम् अन्विष्यति गवेषयति अपि तु हठात् तत् अन्येन मृग्यते अर्थ्यते । एवं त्वमर्थनीया न तु त्वमर्थयसे । उपयच्छत इत्युपयन्ता[२] पतिः । अलं समाधिना इति प्रकृत्यादित्वात् तृतीया, चतुर्थीविधौ तु पर्याप्त्यर्थस्याऽलमेव ग्रहणम् ॥४५॥

२. उपयच्छति स्वीकरोतीत्युपयन्ता—व ब. ल. शा. मुद्रा.

इदानीं वरकथावसरे गौर्या उष्णोच्छ्वासमालोक्य[१] तत्स्वरूपमाह—

निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यसे प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥४६॥[२]

१. ० आलक्ष्य—व. म. शा. मुद्रा.    २. ४५—शा. मुद्रा

निवेदितमित्यादि ॥ [सोष्मणा] उष्णेन [निःश्वसितेन] निःश्वासेन मे सूचितं यथा पतिमभिलषसीति । तथापि[१] [मे] मम [मनः] चेतः [संशयं गाहते] संशेते । यतः [प्रार्थयितव्यः] काम्यः अत एव न ते [दृश्यते] समोऽस्ति । [कथं] पुनः [प्रार्थितदुर्लभः] अर्थितो दुष्प्रापः [भविष्यति] स्यात् । तव स्त्रीरत्नत्वादिति भावः । प्रार्थयितव्य इति कृत्यप्रत्ययः ॥४६॥

१. तत्रापि—व शा मुद्रा

तथेदानीं पतिप्रार्थनामेव तूष्णीभावाभिनिश्चित्याह—

अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथलम्बिनीर्जटाः[१] कपोले[२] कलमाग्रपिङ्गलाः ॥४७॥[३]

१ श्लथलम्बिनीरिमा—स. श्लथलम्बिनी. जटाः—वा. अ. ना म.    २. कपोलदेशे—म. अ. ना. वा.    ३. ४६—शा. मुद्रा.

अहो स्थिर इत्यादि ॥ अहो चित्रं कः अपि स्थिरः ध्रुवः क्रूरः [युवा] तरुणः [तव ईप्सितः] आप्तुमिष्टः । यः तव [कर्णोत्पलशून्यताम्] श्रवणोत्पल[१]हीनत्वं [गते] प्राप्ते कपोले [श्लथलम्बिनीः] शिथिलबन्धत्वात् असमाना जटाः उपेक्षते । न समारचयति । [कलमाग्रपिङ्गलाः] कलमाख्यः शालिस्तस्याग्रं किंशारुः कणिशं[२] तद्वत् पिङ्गलाः कपिलाः स्नेहाभावात्[३] ॥४७॥

१. श्रवणकुवलय०—व शा मुद्रा.    २. 'कणिशम्'—नास्ति—व. ब. शा मुद्रा
३. स्निग्धत्वाभावात्—व. शा मुद्रा.

मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखा[1]मिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते[2] ॥४८॥[3]

१ O रसाO–मO २ दीयते–चा अ ना ३. ४७–शा मुद्रा

मुनिव्रतैरित्यादि ॥ [मुनिव्रतैः] मुनिव्रतानि कृच्छ्र[1]चान्द्रायणादीनि तैः [अतिमात्रं] अत्यर्थं [कर्शितां] तनूकृतां त्वां [दिवा] दिने [शशाङ्कलेखां] शशिकलाम् इव [पश्यत] अवलोकयतः कस्य [सचेतसः] सहृदयस्य मनः न दूयते] स्फुटति । तेन त्वद्दर्शनान्मम चित्तपीडेति भावः । [दिवाकराप्लुष्टविभूषणास्पदाम्] रविणा[2] दग्धान्यतिसौकुमार्यादलंकारस्थानि यस्यास्ताम् । प्लुषेरुदितः प्लुष्टमिति रूपम् । दूयत इति कर्मकर्तरि ॥४८॥

१ 'कृच्छ्र'–नास्ति–व व शा मुद्रा २ आप्लुष्टानि–अपा –व, शा, मुद्रा

अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिर[1]मस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥४९॥[2]

१ रविO–स स्थिरO–शा मुद्रा २ ४८ शा मुद्रा

अवैमि सौभाग्यमदेत्यादि ॥ तव प्रियं वल्लभं [सौभाग्यमदेन] गर्वेण[1] वञ्चितं विप्रलब्धम् [अवैमि] अवगच्छामि । यतः त्वदीयस्य अस्य [चक्षुषः] नेत्रस्य आत्मीयं [वक्त्रं] मुखं सन्निधानेन [लक्ष्यं] लक्ष्यभूतं न करोति । यं त्वं नेक्षसे[2] इत्यर्थः । भवदीय[3]दर्शनेन हि तस्य जन्मनः साफल्यम् । कीदृशस्य चक्षुषः । चतुरावलोकिनः मधुरदर्शिनः, चतुरं किञ्चिदुत्कूणितमधुरायतता भ्रुवोः । अत एव अरालपक्ष्मणः नतरोम्णः[4] अधोदृष्टित्वात् ॥४९॥

१. वाल्लभ्यगर्वेण–शा मुद्रा २ न स्पृशसे–व ३ त्वदीयO–व शा मुद्रा ४ उन्नतरोम्ण –व

कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।
तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ॥५०॥[1]

१ ४९–शा मुद्रा

कियच्चिरमित्यादि ॥ हे गौरि । कियत् [चिरं] कालं श्राम्यसि । कुतः कालादारभ्य तपश्चरसि । यदि वा कियदधिकं चिरकालं तपस्यसीत्यर्थः । मम अपि तावत् [पूर्वाश्रमसंचितं] ब्रह्मचर्यार्जितम् तपोऽस्ति । तद् [अर्धभागेन] अर्धांशेन त्वं [काङ्क्षितम्] अभिलषितं[1] शोभनं वर [लभस्व] आप्नुहीत्याशीः । तं च तद् वरं साधु सम्यक् [वेदितुं] ज्ञातुम् इच्छामि । योग्यश्चेत् तदनुमन्यत इति भावः । अर्धश्चासौ भागोऽर्धभागः ॥४६॥

१. अभिमतम्–ज. शा मुना

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तिता[1]नञ्जननेत्रमैक्षत ॥५१॥[2]

१. निवर्तिता –अ ना   २ ५०–शा मुना

इति प्रविश्येत्यादि । [इति] इत्थं [द्विजन्मना] द्विजेन प्रविश्य अन्तर्भूय [अभिहिता] उक्ता [सा] असौ शालीनत्वात् [मनोगतम्] अभिप्रायं [शंसितुम्] वक्तुं न [शशाक] अशक्नत् [अथो] अथानन्तरं कथनार्थं [परिपार्श्ववर्तिनीं] निकटस्थां [वयस्यां] सखीम् प्रेक्षत[1] अदर्शयत् प्रेरयामास[1] । कथम् । [विवर्तितानञ्जननेत्रं] विवर्तितं चलितमनञ्जनं नेत्रं यत्र । कथय त्वमस्येति, अक्षिनिकोचेनालीमचोदयदित्यर्थः । पार्श्वमेव परिपार्श्वम् ॥५१॥

१, १ 'अदर्शयत् प्रेरयामास'–नास्ति–शा. मुना, अवादीत्–व अवोचयत्–म.

सखी तदीया तमुवाच[1] वर्णिनं[2] निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥५२॥[3]

१. निजगाद–व शा मुना.   २ वाञ्छितम्–अ.ना   ३. ५१ शा.मुना

सखी तदीयेत्यादि ॥ ततः [तदीया] देव्याः सखी वर्णिनं विप्रम् [उवाच] अवोचदित्यर्थः । हे साधो । [निबोध][1] शृणु यदि [चेत्] कुतूहलं कौतुकम् यदर्थम् [एतया] अनया [अम्भोजं] सरोरुहम् इव उष्णवारणम् आतपत्र तपःसाधनं व्रतनिर्वर्तकं वपुः [कृतं] विहितम् । यथा पद्मस्यातपवारणा[2]त्स्वरर्थना संघ तत्कायस्य तपश्चरणादित्यर्थः ॥५२॥

१. जानीहि–अ. शा.–म.   २. निवारणात्–अ. शा मुना.

इयं किलेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य[1] मानिनी[2] ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥५३॥[3]

१ ०नवमन्य–शा. मुद्रा म स २. भामिनी–अ. ना
३. ५२–शा मुद्रा.

इयं महेन्द्रेत्यादि ॥[1] [इन्द्रप्रभृतीन्] इन्द्रवरुणधनदयमान् [अधिश्रियः] अधिलक्ष्मीकान्[2] [चतुर्दिगीशान्] ककुप्चतुष्टयप्रभून् [अवमत्य] अनपेक्ष्य इयं किल [मानिनी] मनस्विनी साभिमानरूपधारिणी [पिनाकपाणिं] हरम् [इच्छति] लिप्सते प्रियतमम् । एवंविधा अपि कथं तेन परित्यक्ते त्याह–[मदनस्य] स्मरस्य [निग्रहात्] दाहात्[1] [अरूपहार्यं] रूपसौन्दर्येण हर्तुमशक्यम् । यदि ह्यसौ रूपवश्यः स्यान्न तदेतन्निमित्तं कामं[4] दहेत् । हरजिगीषोन्मुखत्वमस्या मानिनीति पदेनाह[1] ।५३॥

१.. १. मुद्रितपाठस्तया सर्वथा भिन्न पाठ । २. अधिगतविभवान्–ना मुद्रा ३ कद्रुदाहात्–व भ. ४ मदनम्–व.

इदानीं प्रसंगान्मदनावस्थां तस्याः कथयति–

असह्यहुंकारनिवर्तितः पुरा स्मरारि[1]मप्राप्तमुखः शिलीमुखः ।
इमां हृदि व्यायतपातमक्षिणो[2]द्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥५४॥[3]

१. पुरारि०–म अ. ना २ अक्षणो०–व चा ३. ५३ ना मुद्रा.

असह्येत्यादि ॥ [पुरा] पूर्वं [पुष्पधन्वनः शिलीमुखः] पुष्पेषुणा[1] हरमुद्दिश्य यः सायकः प्रहितः स स्मरारिम् [अप्राप्तमुखः] अप्राप्तमुखत्वात् इमाम् एव प्रत्युत हृदि अक्षिणोत्[2] जघान । यतः शम्भुना [असह्यहुंकारनिवर्तितः] दुर्जयेन हुंकारास्त्रेण निवर्तितः पराङ्मुखीरतः । विशीर्णमूर्तेः अपि दग्धवपुषोऽपि सायकक्षेपानुपदमेव ह्यसौ हरेणादाहि । [व्यायतपातं] दीर्घप्रवेशम् ।[3] [अप्राप्तमुखः] न प्राप्तं मुखं यस्यासावप्राप्तमुखः । प्राप्तमिति कर्तरि । स्मरारिमिति गुणक्रियापेक्षा द्वितीया । यथा–'कृतपूर्वी कटं, भुक्तपूर्वी ओदनाम्' इति । पुष्पैः पुष्पाणि वा धनुर्यस्य स पुष्पधन्वा 'धनुषश्च' । [पा० सू० ५-४-१३२] इत्यनङ्आदेशः ।५४॥

१ मदनेन–व २. अक्षणोत्–व ३ 'अक्षिणोदिति ऋदित्विरोधस्य रूपम्'–प्रपा–ना मुद्रा

ततः[1] प्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥५४॥

१ तदा–म स शा मुशा

ततः प्रभृतीत्यादि ॥ ततः [प्रभृति] आरभ्यासौ स्मरव्यथिताङ्गत्वात् [तुषारसंघातशिलातलेषु] तुहिननिकरदृषत्पट्टेषु अपि निर्वृतिं सौख्यं न [जातु] कदाचित् [लभते] लेभे । [ललाटिकाचन्दनधूसरालका] सन्तापविच्छित्तये[1]ऽलंकारविच्छित्त्या ललाटे निहितं चन्दनं तेन धूसरा अलका मलिनकुन्तला[2] । 'कर्णललाटात्कनलङ्कारे' [पा० सू० ४-३-६५] । हिमसमूहे दृषत्पट्टेष्वपि । उक्तं च–'तलस्ताले च पट्टे च तलं चाऽधः स्वरूपयोः'[3] ।५४॥

१ सन्तापनुत्तये–ष. शा. मुशा  २ ०कचा–व शा. मुशा  ३ तदेति पञ्चम्यर्थे वृत्तिः'–अपा –व भ व शा मुशा  ४...४ हिम...स्वरूपयो' –नास्ति–शा मुशा

उपात्तवर्णे चरिते पिनाकिनः सबाष्पकण्ठ[1]स्खलितैः पदैरियम् ।
अनेकशः किन्नरराजकन्यका वनान्तसंगीतसखीररोदयत् ॥५६॥[2]

१. ०कण्ठ–शा  २ ५५–शा मुशा

उपात्तेत्यादि ॥ [वनान्तसंगीतसखीः] वनान्ते उपवने संगीतसखीः गुणनिकायालीः [किन्नरराजकन्यकाः] गान्धर्वराजपुत्री किन्नरीः [इयम्] पार्वती विरहार्ता [अनेकशः] असकृत् अरोदयत् । कैः[1] [सबाष्पकण्ठस्खलितैः पदैः] सबाष्पे कण्ठे स्खलितैः पदैर्वचोभिः । कदा । पिनाकिनः चरिते त्रिपुरवधावदाने उपात्तवर्णे वर्णोहृते गीयमानेऽतश्च प्रियस्यैव चरिते कीर्त्यमाने द्विगुणतररसात्रिर्भावादश्रोत्पत्त्या वचसामस्पष्टता । सखीनां च कारुण्यादनुरोदनम्। वर्णा गेयशास्त्रप्रसिद्धाः स्थाय्यारोहादयः ॥५६॥

१ येन–य, येष–शा मुशा

त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥५७॥[1]

१ ५६–शा मुशा

त्रिभागेत्यादि ॥ [त्रिभागशेषासु] चतुर्थे यामे सा एषा कथमपि [क्षणं] क्षणमात्रं निद्रावशात् [नेत्रे] अक्षिणी [निमील्य] संकोच्य [सहसा] झटिति [व्यबुध्यत] प्रबुद्धा उन्निद्रा । क्व [नीलकण्ठ] प्रियतम व्रजसि इति [अलक्ष्यवाक्] अस्फुटं वदन्ती [असत्यकण्ठार्पितबाहुबन्धना] असत्ये अपारमार्थिके कण्ठेऽर्पितं बाहुबन्धनं भुजपाशो यया । स्वप्ने ह्येतया स एवागतो दृष्टः ॥५७॥

यतो[1] बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तालिखित[2]श्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥५८॥[3]

१ यदा–म स शा. मुशा, मदा–अ ना  २ स्वहस्तोल्लिखित–म ना  ३ ५७–शा मुशा.

यतो बुधैरित्यादि ॥ एतया मुग्धया चित्रे [स्वहस्तालिखितः] स्वयमालिख्य [चन्द्रशेखरः] शशिमौलिः[1] [इति] इत्थम् उपालभ्यत साक्षेपमगद्यत, उपालम्भो दत्तः । कथमित्याह–यतः[2] [बुधैः] मनीषिभिः त्वं सर्वगतः सर्वव्यापी [उच्यसे] कथ्यसे ।[3] अस्मिन्नालेख्येऽपि त्वमेव तिष्ठसीति स्मयः[3]। तदा इमं जनं भावस्थं भक्तं रागिणं कथं न [वेत्सि] जानासि । स्वसेविनीम् इमां विज्ञाय परित्राणं युक्तं तवेत्यर्थः । भावो वासना तत्र तिष्ठतीति भावस्थम् । इमम् इति आत्मनिर्देशेन एवमुपालम्भोऽन्यत्र वाच्यते[4] ॥५८॥

१ चन्द्रमौलि–शा मुशा  २ यदा–शा मुशा.  ३...३. 'अस्मिन्... स्मय'–नास्ति–व भ. ब. शा मुशा  ४. 'इमम् इति आत्मनिर्देशः । एवमन्यत्र उपालम्भा वाच्यनाम्'–प्रपा –ब., च...पूर्वविलया समुच्चये एवम्.–अरा –ब. शा. मुशा.

यदा च[1] तस्याधिगमे[2] जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा महात्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥५९॥[3]

१. हि–अ. ना.  २ तस्याभिगमे–म  ३. ५८ शा मुशा

यदा च तस्येत्यादि ॥ तस्य विश्वेश्वरस्य हरस्य [अधिगमे] प्राप्तौ यदा च असौ वीक्ष्यमाणाऽपि [अन्यं विधिम्] उपायान्तरं [न अपश्यत्] नैक्षिष्ट. न दृष्टवती, विचिन्वती मार्गयन्ती तदा [गुरोः] पितुः [अनुज्ञया]

निदेशात्[1] अस्माभिः [सह] साकं [तपसे] तपोऽर्थं [तपोवनम्] आश्रमं [प्रपन्ना] प्राप्ता । यतः 'पुण्यैर्विना न हि भवन्ति समीहितार्थाः' ॥५९॥

१ निदेशेन–व शा. मुशा.

'कियच्चिरं श्राम्यसि' [कुमार० ५-५०] इत्यत्रोत्तरमाह-

द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु वद्धमेष्वपि[1] ।
न च[2] प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ॥६०॥[3]

१ ०मे०–म स, बद्धमेनया–ना मुशा   २ तु–म अ ना चा
३ ५९–शा मुशा

द्रुमेषु सख्येत्यादि ॥ अनया स्वय [कृतजन्मसु] रोपितेषु [द्रुमेषु] वृक्षेषु[1] फलम् अपि बद्धमुत्पन्नम् । अस्याः तु [शशिमौलिसंश्रय] शिवाल म्बनो यः मनोरथः सः [प्ररोहाभिमुखः] अङ्कुरायस्य[2] अपि न [दृश्यते] लक्ष्यते । तप साक्षिषु द्रष्टृषु एतेषां पुरोवितत्वात् ॥६०॥

१ वृक्षेषु–शा मुशा   २. अङ्कुरित–शा मुशा

न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्राकु[1]लमीक्षिता[2]मिमाम् ।
तपःकृशामभ्युपपत्स्यते[3] सखीं वृषेव सीतां तदवग्रहक्षताम् ॥६१॥[4]

१ ०रस्रोत्तर०–म चा शा मुशा   २. ०रस्रान्तरवीक्षित०–अ ना
३ ०मभ्यवपत्स्यते–अ ना चा मुशा   ४. ६०–ना मुशा

न वेद्मीत्यादि ॥ अतश्च न [वेद्मि] जाने स [प्रार्थितदुर्लभ] प्रार्थितोऽपि दुर्लभः कदा इमां सखीं [तपःकृशां] नियमदुर्बलाम् अत एव सखीभिः आलीभिः [अस्राकुलं] बाष्पगर्भम् [ईक्षिता] दृष्टाम् अभ्युप-पत्स्यते[1] परित्रास्यते । वृषा शक्रः [इव] यथा सीता क्षेत्रावनि [तदवग्रह-क्षताम्] अनावृष्टिबाधितां दृष्ट्वा वृष्ट्या अभ्युपपत्स्यते[2] । तस्येन्द्रस्या-वग्रहस्तदवग्रह' वर्षप्रतिबन्धस्तेन क्षतां पीडिताम् । तपसा कृशा तप'-कृशाम् । 'ओज सहोऽम्भसा वर्तते' । [पा० सू० ४–४–२७] इति तृतीया[3] ॥६१॥

१ अभ्यवपत्स्यते–ना मुशा   २ अभ्यवपद्यते–ना मुशा   ३ ओज–सहोऽम्भस्तमसस्तृतीयाया [पा सू ६–३–३] इत्यलुगभावश्चिन्त्य ।–मुशा [Pt edition reads ०स्तमस०]–मुशापाठो

अगूढसद्भावमितीङ्गितज्ञया निवेदिते[1] नैष्ठिकसुन्दरस्तया ।
अपी[2]दमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥६२॥[3]

१. निवेदितो–स. म अ ना. २ अयी०–म. म. ३ ६१–शा मुशा

अगूढेत्यादि ॥ अथ तया इङ्गितज्ञया अभिप्रायविदा सख्या अगूढसद्भावं प्रकटिततरमर्थं[1] [निवेदिते] आख्याते सति स नैष्ठिकसुन्दरः वर्णी [उमां] गौरीम् [अपृच्छत्] अप्राक्षीत् । किमित्याह । यदेतया अपि इदम् एव सत्यमुत परिहासः नर्म । द्वितीयप्रश्नाभावेऽपि[2] पाठ[3]वशात् तदर्थप्रतीतिः । यथा 'देवः किं बान्धवः स्यात्' इति । अत्र नैष्ठिको व्रती स चाऽसौ सुन्दरः सुभगो नैष्ठिकत्वं तद्रूपपरिग्रहात् सुन्दरत्वं तस्यैव प्रार्थ्यमानत्वात् । [अव्यञ्जितहर्षलक्षणः] अव्यञ्जितहर्षलक्षणानि रोमाञ्चादीनि येन स तथोक्तः । व्रतसुभगो निष्ठावान् नैष्ठिकः ।[4] आत्मसौभाग्यकर्णनेन हि तेषामुत्पत्तिर्युक्ता ॥६२॥

१ ०परमार्थम्–व. शा. मुशा. २. ०प्रश्नपदाभावेऽपि–व. ब. भ. ? शा. मुशा ३ पाठविशेष०–व ब. भ. शा. मुशा. ४...४. 'व्रत...नैष्ठिकः' –नास्ति–व भ ब. ल. न. शा. मुशा.

अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमण्डलम्[1] ।
कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥६३॥[2]

१. ०मालिकाम्–म. स. अ. ना. २. ६२–शा. मुशा.

अथाग्रहस्त इत्यादि ॥ [अथ] ततः [अद्रेः तनया] पार्वती [कथंचित्] कृच्छ्रेण [मिताक्षरं] परिमितं [अभाषत] अब्रवीत् । कीदृशी । मुकुलीकृतांगुलौ संकुचित[1]करशाखे पाण्यग्रे[2] [स्फटिकाक्षमण्डलम्] सितमणिगुलिकावलयं समर्पयन्ती योजयन्ती लज्जानुभावोऽयमत्र । तथा [चिरव्यवस्थापितवाक्]चिरेण क्लेशवशात्[3] त्रपाभरात्[4] व्यवस्थापिता उद्यमिता[5] वाग्यया ॥६३॥

१. कुटिलित०–व. न., कुड्मलित–शा. मुशा. २. कराग्रे–व. न. शा मुशा. ३ क्लेशेन–व. व. ल. न. ४. 'त्रपाभरात्'–नास्ति–व भ ब ? ५ व्यवसिता–व., व्यवस्थापिता उच्चरिता–ल., व्यवस्थापिता नियमिता–ब., व्यवस्थापिता अनुष्ठिता–मुशा

किमुवाचेत्याह–

यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥६४॥[1]

१ ६३–शा मुद्रा

यथा श्रुतमित्यादि ॥ [वेदविदां वर] हे द्विजोत्तम । यथा त्वया श्रुतं तथैवैतत् । यतः अयं जनः [उच्चैःपदलङ्घनोत्सुकः] उन्नतस्थानक्रमणप्रवणः वर्तते । कुत इत्याह । इदं किल तपः [तदवाप्तिसाधनं] हरलाभनिवर्तकम् । न चाऽनेन तपसा स सुलभ इति किलशब्दः सूचयति । यदि न प्राप्यते किं क्लेशेनेत्याह । मनोरथानाम् अगतिः अविषयो नाम न क्वचित् [विद्यते] अस्ति । आशा हि सर्वत्र[1] प्रेरयति । तदवाप्तीति लज्जावशात् सर्वनामनिर्देशः । यथा श्रुतग्रहणाच्चाविशेषप्रतीतिः । यथा श्रुतमित्येतद्विपादे[2] ॥६४॥

१ सर्वत्रैव–व न शा. मुद्रा. २. द्वे पदे–भ व शा मुद्रा

अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव[1] वर्तसे ।
अमङ्गलाभ्यासरतिं[2] विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥६५॥[3]

१ पुर एव–व भ व. २. रत–स. शा. मुद्रा ३ ६४–शा मुद्रा

अथाहेत्यादि ॥ [अथ] ततः पुन [वर्णी] ब्रह्मचारी [आह] जगाद । किमित्याह । विदितः महेश्वरः जानामि यथास्वरूपं तमित्यर्थः । महेश्वरः इत्युल्लुण्ठनापदम् । कोपगर्भमाह । पुनः अपि [त्वं] भवती तदर्थिनी वर्तसे । कामदाहप्राक्[1] किल तदर्थिनी भूत्वा तादृशं च परिभवमनुभूयऽद्याऽपि भूयस्तमेव प्रार्थयसे ।[2] येन पुरा कामं दहता त्वन्मानभंगः स्फुटः कृतः ।[2] स्यादेव तु पुनरहम् [अनुवृत्तिम्] अनुमतिं कर्तुं न [उत्सहे] शक्नोमि अनुचितत्वात् । यतः [अमङ्गलाभ्यासरतिम्] अमङ्गलाभ्यासे श्मशानवासादिके रतिरासक्तिर्यस्य,[3] तादृशं तं त्वत्पतिं विचिन्त्य । न ह्यसावुचितस्ते पतिः ॥६५॥

१. ०दाहात्प्राक्–व. शा. मुद्रा २...२ 'येन ..कृत.'–नास्ति–पुर एवेति तु पाठे वाक्यद्वयमेतस्योरप्राप्तम । तदर्थिनीत्युक्तमेतत् तत्रापि पुर एव।यत एव तिष्ठति । न तु लज्जया पलायस इत्यर्थं । –व भ व न शा मुद्रा
३ रत सक्षम–शा मुद्रा

इदानीं तद्दोषकीर्तनमाह–

अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
भुजेन[1] शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥६६॥[2]

१ करेण–म स अ ना गा मुना  २ ६५–गा मुना

अवस्तुनिर्बन्धेत्यादि ॥ तावदिदं विचारय [अवस्तुनिर्बन्धपरे] हर प्रार्थनयाऽस्थाने निर्बन्ध आदर कथ [ते] तव अयम् [आमुक्तविवाह कौतुक कर] बद्धोद्वाहकङ्कणपाणि [शंभो] हरस्य [वलयीकृताहिना] कटकीकृतोरगेण [भुजेन] बाहुना तत्प्रथमं तदादि अवलम्बन ग्रहण कथ सहिष्यते । स हि सर्पाभरण ॥६६॥

त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं च सहंस[1]लक्षणं गजाजिनं[2] शोणितबिन्दुवर्षि च ॥६७॥[3]

१ कलहंसल०–म स अव च ०हस०–धा  २ अव चाजिन–धा  ३ ६६–मुना

त्वमेव तावदित्यादि ॥ आस्तामन्य त्वम् एव इद [परिचिन्तय] विचिन्तय । यदि [सहंसलक्षण वधूदुकूल] रोचनालिखितहंसाङ्कितपरिधान पट्टस्य [शोणितबिन्दुवर्षि] रुधिरकणमुच [गजाजिन] करिचर्मण [योग] योग सम्बन्ध योग्य । भगवान् हि कृत्तिवसन ॥६७॥

चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमंस्यते[1] ।
अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु[2] परेतभूमिषु ॥६८॥[3]

१ ०नुमन्यते–म अ ना  २ ०कीर्णास्थि०–स  ३ ६७–ना मुना

चतुष्कपुष्पेत्यादि ॥ तव पादयो [अलक्तकाङ्कानि] यावकचिह्नानि पदानि[1] [विकीर्णकेशासु] अवकेशव्याप्तासु [परेतभूमिषु] श्मशानस्थलीषु प्रेतावनिषु [पर] शत्रु अपि क [अनुमस्यते] अनुज्ञास्यति । कदाचित् तद्योग्यावेव तौ चरणौ स्यातामित्याह । [चतुष्कपुष्पप्रकरावकीर्णयो] चतुष्को वेश्मविशेषश्चतुःशाला तत्र य पुष्पप्रकारस्तत्राऽवकीर्णयोर्विक्षिप्तयो[2]। यत्र यौ यावकरञ्जितौ वासवेश्मकुसुमोपचारसञ्चारणौ तयो

१ श्मशान विक्षिप्तकेशास्थिपरेतभूमिषु–अपा –अ न ना मुना

शवकेशास्थिकपालमालामालितासु[3] प्रेतावनिषु चङ्क्रमणानुमतिविषये कस्य दुष्टस्याऽपि मतिः स्फुरति[4] ।६८॥

२ निक्षिप्तयो.–शा. मुद्रा. २. ०मोपकार०–व. म. ब ल. न. शा. मुद्रा. ३. ०मालाकलिलासु–ब. ल, ०कलिलासु–शा. मुद्रा. ४. 'चतुष्कशब्दे चतुःशालासदृशाया कन्' अपा –शा. मुद्रा.

अयुक्तरूपं किमतः परं वद[1] त्रिनेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे[2] पदं चिताभस्मरजः करिष्यति ॥६९॥

१. भवेत्–चा. २. ०नाङ्किते–अ. ना. ३ ६८–शा. मुद्रा

अयुक्तरूपमित्यादि ॥ अतश्चान्यत्कथय । किं [अयुक्तरूपम् असाम्प्रतं] [त्रिनेत्रवक्षः] यदीशानोरसि निहितः [चिताभस्मरजः] शिवभूतिरेणुः तवापि अस्मिन् [हरिचन्दनास्पदे] दिव्यानुलेपनोचिते [स्तनद्वये] कुचयुगले [पदं करिष्यति] स्थास्यति । आश्लेषवशाद्धि तत्र संचरति ॥६९॥

इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया[1] ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥७०॥[2]

१. ०मार्यया–अ. ना. २ ६९–शा. मुद्रा

इयं चेत्यादि । इयं च [ते] तव [पुरतः] अग्रतः प्रथमतः[1] विडम्बना उपहासता स्थितैव । यत् त्वया ऊढया उद्वाहितया हरवाहनं [वृद्धोक्षं] जरद्वृषम् [अधिष्ठितम्] आरूढं [विलोक्य] आलोक्य [महाजनः] साधुलोकः अपि [स्मेरमुखः] प्रहसितमुख[2] [भविष्यति] सम्पत्स्यते । कदाचित् तद्योग्यैव सा स्यादित्याह । [वारणराजहार्यया] हस्तिमल्लोद्वहनयोग्यया[3] । तव हीन्द्रेणोढया द्विपेन्द्रेण गन्तुं न्याय्यम् । वृद्धश्चासावुक्षा च वृद्धोक्षः । अचतुरादित्वादच्[4] ॥७०॥

१ अपरा–व न. २ ०वदन –व ब. शा. मुद्रा. ३. वारणराजेनैरावणेन हार्यया प्राप्यया–शा मुद्रा ४ द्र पा० सू० ५–४–७७

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः[1] ।
कला च सा कान्तिमती कलावत[2]स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥७१॥[3]

१. कपालिन –शा मुद्रा चा. स २ कलावन –अ ना ३. ७०–मुद्रा

द्वयं गतमित्यादि ॥ पशुपा [पिनाकिनः] समागमप्रार्थनया पशुपतिसंश्लेषा[1]भिलाषेण [संप्रति] अधुना [द्वयम्] उभयं [शोचनीयतां] शोच्यत्वं दीनत्वं [गतं] प्राप्तम् । किं तत् । [कलावतः] शशिनः [कान्तिमती] कान्ति[2]युता सा कला [लोकस्य] जनस्य नेत्रकौमुदी[3] त्वं च । कलावतः इत्युल्लुण्ठनापदम् । स किल कलावान् विदग्धः ॥७१॥

१. ०संयोगा०–व म. शा मुग्ध  २ द्युति०–ब. भ. व. शा. मुशा.
३ 'नयनानन्दिना'–अपा.–व म. मुशा.

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥[1]

१ ७१–शा. मुशा.

वपुर्विरूपेत्यादि ॥ [बालमृगाक्षि] हे शिशुहरिणनयने[1] वरेषु कन्यामार्गणकेषु[2] रूपकुलधनादिकं यत् [मृग्यते] निरीक्ष्यते[3] तत् समस्तमास्ताम् व्यस्तम् अपि एकमपि किं [त्रिलोचने] हरे विद्यते । नैवास्ति । तथा हि वपुः तावदस्य [विरूपाक्षं] श्यामल[4]विह्वलत्वाद् भीषणनेत्रम् । ननु[5] कदाचित् स महाकुलप्रसूतप्रसिद्धो भविष्यति तत्किं शरीरलावण्येन तदपि नास्तीत्याह[5] । [अलक्ष्यजन्मता] जन्मतोऽपि न लक्ष्यते कुतो जात इति । एवमपि यदि स निखिलगुणसिद्धिसंसाधक इत्याधारो भवेत्, तर्हि कुलरूपादिना, तदपि नैवास्तीत्याह । [वसु] धनमपि दिगम्बरत्वेन नग्नतया [निवेदितं] सूचितम् । यदुक्तम्[6] –कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च । एतान् गुणान् सप्त निरीक्ष्य कन्या देया बुधैः शेषमचिन्तनीयम् ।[6]—पञ्चतन्त्रम् ३-२०९ ॥७२॥

१ हरिणशिशुनयने–व. शा मुशा  २. ०मार्गणेषु–मुशा.  ३. गवेष्यते –व शा. मुशा.  ४ अनल०–ब. ल. शा. मुशा.  ५...५. 'ननु... आह' नास्ति–व व भ ल शा मुशा.  ६...६ 'यदुक्तम्...नीयम्'–नास्ति–व भ शा मुशा

निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्षते[1] साधुजनो[2] न वैदिकीं श्मशानशूलस्य हि[3] यूपसत्क्रियाम्[4] ॥७३॥[5]

१. अपेक्ष्यते–म. म  २. साधुजनेन–म म.  ३. न–म. ग,
४ सत्क्रिया–म म  ५. ७२–शा मुशा.

निवर्तयाऽस्मादिति ॥ यत एवमतः [अस्मात्] अपर्यालोचितात् मनः चेतः निवर्तय पराङ्मुखीकुरु । [असदीप्सितात्] अनिष्टाभिलाषात् । यस्मात् [तद्विधः] पूर्वोक्तविधाः प्रकारा यस्य तद्विधो दुर्भगः क्व असौ । क्व च त्वं पुण्यलक्षणा प्रशस्तचिह्ना । अनुचितो युवयोः संयोग इत्यर्थः । एतदेव दृष्टान्तेन द्रढयति । साधुजनः द्विजलोकः श्मशानशूलस्य प्रेतस्थान-चौरनिग्रहस्तम्भस्य [वैदिकीं] वेदोक्तां यूपसत्क्रियां न अपेक्षते नार्थयते[1] । न हि यज्ञयूपस्य यः संस्कारः[2] स चौरशूलस्य केनचित् कोविदेन क्रियते । त्वं च यदि तेन सहात्मानं सम्बन्धयसि[3] तदासौ संस्कृतो भवति[4] ॥७३॥

१. प्रार्थयत–ल २. सत्कार–शा. मुद्रा ३. अर्पयसि–शा. मुद्रा.
४ 'अत्रापरार्धे निषतुराणि पाठान्तराणि भवन्ति । तत्र सर्वत्र स्वस्तुमथ । सत्-क्रियातुल्यरवमत्र देव्याः ।' अपा–व भ. ल. शा. मुद्रा.

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥७४॥[1]

१ ७३–शा. मुद्रा.

इति द्विजातावित्यादि ॥ तस्मिन् [द्विजातौ] वर्णिनि [इति] इत्थं [प्रतिकूलवादिनि] अप्रियभाषिणि [तया] गौर्या [विकुञ्चितभ्रूलतं] भ्रूभङ्गं[1] विधाय [उपान्तलोहिते] रोषरक्तापाङ्गे [विलोचने] नेत्रे तिर्यक् साचि आहिते क्षिप्ते । गौरवे हि[2] कोपात् न संमुखावलोकनम् । [प्रवेपमानाधरलक्ष्यकोपया] प्रवेपमानाभ्यामधराभ्यां लक्ष्यः कोपो यस्याः । तया ओष्ठकम्पः । विकुञ्चिते कुटिलीकृते भ्रूलते यस्मिन्[3] ॥७४॥

१. भ्रुकुटिभङ्गम्–व. शा २. गौरवेऽपि–व., गौरवपि–शा. मुद्रा.
३. यथाघाते–च. प. व. न. शा. मुद्रा.

उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम्[1]
॥७५॥[2]

१. महात्मनः–म. २. ७४–शा. मुद्रा

उवाच चैनमित्यादि ॥ एवं च [एनं] विप्रमसौ [उवाच] जगाद किमित्याह । [परमार्थतः] तत्त्वतस्त्वं [हरं] शिवं नूनं न [वेत्सि] बुध्यसे यतः एवं रूक्षं स्पष्टं[1] त्वम् [आत्थ] आह मां ब्रवीषि । यस्मात्

अज्ञास्ते [महात्मनां] महतां [चरितं] चेष्टितम् [अलोकसामान्यं] सर्वविलक्षणं अचिन्त्यहेतुकं च अज्ञेयनिदानं च द्विषन्ति निन्दन्ति । यदि त्वं माऽविदित[1]परमार्थः स्यात्तदा नैवं ब्रूयाः ॥७५॥

[1] 'कूटम्'–नास्ति–शा मुशा   १ विज्ञात०–व व. ल. शा मुशा

इदानीं यत्तेन अमङ्गलाभ्यासरतित्व'मित्युक्तं तत्र यथाक्रममुत्तरमाह–

विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभि[2]राशोपहतमात्मवृत्तिभिः ॥७६॥[3]

१ द्र कुमार० ५–६५   २ किमाभि०–अ ना   ३ ७५–शा. मुशा

विपत्प्रतीकारेत्यादि ॥ इह द्वाभ्यां मङ्गलं निषेव्यते आसेव्यते [विपत्प्रतीकारपरेण] व्याध्याद्यनर्थनाशेच्छुना [भूतिसमुत्सुकेन] विभवोत्कण्ठितेन च । अतस्तस्य [जगच्छरण्यस्य] जगतां शरण्यस्यार्तिहरस्य विपच्च सम्पाद्यते । यश्च परिपूर्णत्वात् [निराशिषः] निराशीः निष्कामः । स कामितविभूतिमप्राप्तां कामयताम् । जगच्छरण्यस्य विपद्विषवल्लयाः स्वयमनुष्ठाप्य घोरधारकुठारत्वादन्यानार्तिहरस्य किमेभिर्मङ्गलैः । [आशोपहतमात्मवृत्तिभिः] आशया उपहता निन्दिता आत्मवृत्तिः[1] स्वरूपं येषां तैः । आशाचापलचेतसाम् । मङ्गलमित्येकवचनेन निर्दिश्य एभिरिति बहुत्वं निर्देशो युक्तो न वेति बुधाः प्रमाणम् । सामान्यनिर्देशो वैभिरिति । शृणाति भयमिति शरण्यस्त्राता । यदि वा शृ शरणे रक्षायां साधु शरण्यः ॥७६॥

'वपुर्विरूपाक्ष' [कुमार० ५–७२] इत्युद्दिश्याह–

अकिञ्चनः सन्प्रभवः स संपदां स लोकनाथः[1] पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथात्म्यविदः[2] पिनाकिनः ॥७७॥[3]

१ त्रिलोकनाथ–म. चा. अ ना.   २ याथार्थ्यविद–म. म. अ ना चा
३ ७६–शा मुशा

अकिञ्चन इत्यादि ॥ [पिनाकिनः] शर्वस्य याथात्म्यविदः यथास्वरूपज्ञा न सन्ति न विद्यन्ते । तथा हि अकिञ्चनः अपि निर्धनोऽपि स सम्पदामैश्वर्याणां प्रभवः कारणम् । निराशीर्दरिद्रश्चाकिञ्चनः । तथा [पितृसद्मगोचरः] श्मशानचारोऽपि स असौ लोकनाथः सप्त[1]भुवनप्रभुः । [भीमरूपः]

भैरवादिभीषणीयरूपोऽपि स असौ शिवः[2] [इति उदीर्यते] उच्यते[3] । यश्च भयानकः स कथं श्रेयस्करः स्यात् । अतश्च विरुद्धानेकरूपदर्शनात् न सन्ति याथात्म्यविदः पिनाकिनः[4] ॥७६॥

१ सर्वं०—भ  २ कल्याण—अपा—भ  ३ कथ्यते—भ  ४ 'पिनाक धनुर्विद्यते यस्य तस्य'—अपा—भ

विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथ चन्द्र[1]शेखरं न विश्वमूर्तेरवधार्यते वपुः ॥७८॥

१ अथवेन्दु०—भ. स दा. मुद्रा

विभूषणोद्भासीत्यादि ॥[1] [विश्वमूर्तेः] विश्वरूपस्य सर्वात्मनो देवस्य वपुः एवंविधमेवेति न अवधार्यते न निश्चीयते । तथा हि विभूषणोद्भासि अलंकरणोद्भासुरं पिनद्धभोगि प्रोतोरगम् । विरुद्धोभयरूपमपि भवतीत्यर्थः । एवमुत्तरत्र । गजाजिनालम्बि करिकृत्तिधारि वा [दुकूलधारि] सुपट्टकूलांकितं[2] वा [कपालि] कपालयुतं कपालमालामण्डितम् अथवा [चन्द्रशेखरं] शशिकोटिमुकुटम्[3] । कदाचिदसावीक्ष्यते भीषणः कदाचिच्च सौम्यः । यतो विश्वमूर्तेरिति वाक्यार्थः । [4]'शम्भोर्धवलयीकृताहिना' [कुमार० ५-६५] इति यदुक्तं तन्निराकृतम्[4] । 'स्वमेव तावत्' [कुमार० ५-६७] इत्यपि प्रत्युक्तम् ॥७८॥

१. 'किं बहुना'—अपा—ब. दा मुद्रा.  २ सुपट्टांशुकमुद्रा—दा. मुद्रा.
३. शशिमुकुटम्—ब दा, मुद्रा  ४...४ 'एतेन...निराकृतम्'—नास्ति—दा मुद्रा

'एवं चिताभस्मरज.' [कुमार. ५-६६] इत्युत्तरयितुमाह—

तदङ्गसंस्पर्श[1]मवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये[2] ।
तथा हि नृत्ता[3]भिनयक्रियाच्युतं विलुप्यते[4] मौलिभिरम्बरौकसाम् ॥७९॥

१. ०संसर्गम्—भ अ ना  २. रजोऽपि शुद्धये—अ ना  ३. नाट्या०—भ स.
४ विलिप्यते—भ दा मुद्रा.

तदङ्गसंस्पर्शेत्यादि ॥ [तदङ्गसंस्पर्शं] तस्य देवस्याङ्गसंसर्गम् [अवाप्य] लब्ध्वा [ध्रुवं] निश्चितं चिताभस्मरजः अपि [विशुद्धये कल्पते] पवित्र

सम्पद्यते । कुत इत्याह । यथा हि [नृत्ताभिनयक्रियाच्युतं] नृत्ताभिनयः करचरणादिप्रयोगस्तस्य क्रिया करणं तद्वशात् करणकौशलवशात्[1] पतितम् [अप्सरोरुसां] नाकिनां [मौलिभिः] विलुप्यते[2] । यदि वामङ्गलं स्यात्तत्कथमहंपूर्विकया शक्राद्या उत्तमाङ्गेन तद्बिभृयुः[3] । एतदुपलक्षणम्[4] ॥७६॥

१ करणकौशलवशात्' नास्ति—शा मुशा   २. 'उत्पुस्यते'—अपा —शा मुशा   ३ वहेयुः—म. व   ४. एतच्च प्रत्यक्षम्—व म व मुशा

असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य[1] मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥८०॥[2]

१ ०वुपनम्य—अ मा   २.७९—शा. मुशा

असम्पद इत्यादि ॥ तस्य देवस्य [वृषेण गच्छतः] वृषगामिनः असम्पदः जरद्वृषधनस्य अपि वृषा शक्रः [पादौ] चरणौ [उपगम्य] आगत्य [मौलिना] शिरसा [विनिद्रमन्दाररजोरुणाङ्गुली] विकसितकुसुम[1]परागलोहिताङ्गुलीकः [करोति] विधत्ते । तथा च—

[2]दरिद्रस्य परामूर्तिर्याच्ञा न द्रविणाल्पता ।
जरद्वृषधनः शम्भुस्तथापि परमेश्वरः ॥[2]

एवमीदृशोऽपि यदि दरिद्रस्तदेवमस्तु । असम्पद इति परमतापेक्षया । एतेन 'विलोक्य वृद्धोक्षम्' [कुमार० ५–७०] इति प्रत्युक्तम्[3] । कीदृशो वृषा । [प्रभिन्नदिग्वारणवाहनः] प्रभिन्नः स्फुटितः गण्डगलित ऐरावणो वाहनं यस्य सः । उपगम्य द्विपेन्द्रादवरुह्य ॥८०॥

१ ०सुरतरु०—म व   २...२ दरिद्रस्य...परमेश्वर —नास्ति—शा. मुशा
३ 'दिगम्बरत्वेन' निवेदितं वसु' इति च प्रत्युक्तम्' -अपा —शा. मुशा

विवक्षता[1] दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥८१॥[2]

१ विदुष्वता—म   २ ८०—शा मुशा

विवक्षता दोषमित्यादि ॥ [त्वया] भवता च्युतात्मना इन्द्रियवशाद् भ्रष्टचेतसा 'अलक्ष्यजन्मना' [कुमार० ५–७२] इति दोषम् अपि [विवक्षता] कथयता [ईशं प्रति] शिवोद्देशेन साधु भद्रम् एकं [भाषितम्] उक्तम्[1] यस्मात् यम् [आत्मभुवः] ब्रह्मणः अपि [कारणं] प्रभवम् आमनन्ति[1] ।

'कामो ब्रह्मा ब्रह्म च ब्राह्मणाश्च त्वत् संभूतं स्थाणु चरिष्णुः चेदम्' [महा. ७-१२२-६८] इति स । देवः कथं लक्ष्यप्रभवः ज्ञातजन्मा भविष्यति। तस्मादजस्थं स्तुतिरेव ॥८१॥

१. 'कथयन्ति'-अपा.-व. भ. ब शा. मुशा

अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं[1] न कामवृत्तिर्वचनीयमीक्षते ॥८२॥[2]

१. स्थिरम-अ. मा २. ८१-शा मुशा

अलं विवादेनेत्यादि ॥ अथवा किमत्रोद्ग्राहणिकया[1] । [त्वया] भवता [यथा] यादृशः [श्रुतः] अवगतः [तथाविधः] तादृशः [अशेषं] सर्वं सः असौ [अस्तु] भवतु । मम अत्र देवे [भावैकरसं] भावेन भक्त्या अनुरागेण एकरसम् एकरूपं मनः [स्थितं] अवस्थितम्, अनुरागमयमेव सम्पन्नम् । न त्वया व्यावर्तयितुं शक्यमित्यर्थः । यस्मात् कामवृत्तिः स्वेच्छाप्रवृत्तिः[2] न वचनीयं परवाच्यतां ईक्षते । यदुक्तम्—

'असद्ग्रहस्य का नीतिर्व्यसनस्य क्व यन्त्रणा ।
विपरीतार्थबोद्धारः सत्ये केन नियोजिता ॥'[3]

अशेषमिति क्रियाग्रहणम् ॥८२॥

१. ऊहापोहिकया-टिप्पण्यामधिकपाठ -भ-१ २ स्वेच्छावृत्ति-व स्वेच्छाप्रवृत्ति.-व. ३. सत्यार्थे केन योजिता ।-भ ब. व ल, सत्पथे केन योजिता-शा. मुशा.

निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते[1] शृणोति तस्मादपि यः [redacted] पापभाक् ॥८३॥[2]

इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला[3] ॥
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥८४॥[4]

१. महतां विभाषते-भ. बा. विभाषते-अ. मा २. ८२ शा. मुशा
३. मापस्तनभिन्नवल्कला-स., शा प स्तन०-भ. मा. ४. ८३-शा मुशा.

निवार्यतामित्यादि ॥ इतो गमिष्यामीत्यादि ॥ [इति] इत्थं [वादिनी] ब्रुवाणा सा चचाल । [वृषराजकेतनः] देवः अपि प्रत्यक्षीभूय [कृतस्मितः] स्मेरमुखः तां देवीं समाललम्बे अवाष्टम्भात् । किं वदन्तीमित्याह । हे आलि

सखि अयं वटुः विप्रशिशुः [निवार्यताम्] अपास्यताम्। यस्मादयम् धिकं किमपि अवाच्यं विवक्षुः वक्तुकामः। यतः [स्फुरितोत्तराधर] स्फुरितः कम्पित उपरितनोष्ठः। यदि वक्तुकामस्तत्कथं निवार्यत इत्याह। यस्मात् न केवलं यः महतः उत्तमान् अपभाषते परिभाषते परिवदति स पापभाक् स यो वाऽन्योऽपि तस्मात् निन्दकात् [शृणोति] आकर्णयते सोऽपि [पापभाक्] अपुण्यमाप्नोति। अथैष न निवर्तते तदहम् इत अस्मात्स्थानात् [गमिष्यामि] यास्यामि[1]। यदुक्तम्—

'न वाच्यः परदोषो[2] वै न श्रोतव्यः कदाचन।
कर्णाविव पिधातव्यौ प्रस्थेयं[3] वा ततोऽन्यत॥'[4]–[महा. १२-१३०-१२]

इति वादिनी जिगमिषयाऽसौ देवी यद्वैवोत्तस्थौ तदैव देवः स्वरूपम् [आस्थाय] प्रकटीकृत्य ता [समाललम्बे] आलम्बे। स्तनभिन्नवल्कला इति चित्तक्षोभप्रतिपादनपरं सस्पर्शवशाद्वा देहोच्छ्वासाद् वल्कलग्रन्थिबन्धस्फोट ॥८३॥ ॥८४॥

1 व्रजामि–व दा मुद्रा 2 परवादो–दा मुद्रा 3 गन्तव्यम–व व भ दा मुद्रा 4 द्र गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते। कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यत ॥–मनु २-२००

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेप एव[2] पदमुद्धृतमुद्वहन्ती[1]।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ॥८५॥[4]

1 ०मन्धि–दा मुद्रा 2 निक्षेपणाय– भ 3 ०मपयन्ती–स 4. ८४–दा मुद्रा

तं वीक्ष्येत्यादि ॥ तत तं देवं साक्षात् पार्वती [वीक्ष्य] दृष्ट्वा कम्पस्वेदान्विता सती न ययौ नाप्यस्थात्। यतः [निक्षेपणाय] निक्षेपणार्थं पदं उद्धृतम् एव [उद्वहन्ती] बिभ्रती। यदि ह्यसौ गच्छेत् तस्यान्तरे पदं[1] न्यसेत्। अथवा तिष्ठेत् तदुद्धरणमनर्थमिति तत्रैव तन्न्यसेत्। तत्रागमन वस्तुतस्य तत्कारणस्याभावात्। अस्थानमप्यपूर्ववृत्तान्तावलोकनव्याकुलीभूततया[2]दिति। [मार्गाचलव्यतिकराकुलिता] मार्गशैलसंमर्दविह्वला सिन्धुः नदी [इव] यथा प्रसरगोधनात् न [ययौ] याति, न च [तस्थौ] तिष्ठति तद्वदसौ। तया हि निम्ने[3] गन्तव्यम् ॥८५॥

1 प्रमम–व दा मुद्रा 2 पूर्ववृत्तान्तस्य अवलोकनेन व्याकुलीभूतत्वान–दा मुद्रा 3 निम्नम–व व ल दा मुद्रा

अद्यप्रभृत्यनवमाङ्गि[1] तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥८६॥[2]

१. ०त्यवनताङ्गि–म. चा. स. २. विधत्त–अ.ना ३. ८५–शा.मुद्रा.

अद्य प्रभृतीत्यादि ॥ इति [वादिनि] ब्रुवाणे [चन्द्रमौलौ] शशिशेखरे अह्नाय तत्क्षणमेव सा[1] नियमजं तपःसमुत्थं क्लमम् उत्ससर्ज ग्लानिं जहौ। किमित्याह । हे अनवमाङ्गि कल्याणगात्रि । अद्य [प्रभृति] आरभ्य अहं तव [तपोभिः क्रीतः] तपःक्रीतः[2] दासः प्रेष्यः इति वचं आपन्नात् । किमिति क्लमत्याग । इत्याह यस्मात् क्लेशः [फलेन] फले सति पुनः [नवतां] नवत्वं [विधत्ते] बिभर्ति । फलदर्शनान्न तपः श्रम इत्यर्थः । क्लेश[3]–स्यैतदेव नवत्वं यद्गुग्लान्याद्यभावः[4] । अह्नायेति चतुर्थ्यन्तप्रतिरूपको निपातः। तत्क्षणार्थवृत्तिः। वसन्ततिलकावृत्तम्[5]। अर्थान्तरन्यासोऽलंकारः। इति भद्रम् ।८६॥

१ देवी–अपा.–अ. म. व. शा. मुद्रा. २ तपोमूल्यक्रीत –च. व. ग. ए शा. मुद्रा.
३. क्लम०–भ ४. विद्याविर्भाव०–मुद्रा. ५ वसन्ततिलक वृत्तम्–ग. भ च शा मुद्रा

इति स्कन्दोत्पत्तिपञ्जिकायां गौरीतपःफलो नाम पञ्चमः सर्गः ॥५॥[1]

१. इति वल्लभदेवविरचितायां कुमारसम्भवटीकायां पञ्चम सर्गः ।–च. इति श्रीकुमारसम्भवे महाकाव्ये कविश्रीकालिदासकृतायां टीकायां सुबोधदुर्बोधे आनन्ददेवायनिवल्लभविरचितायां कुमारसम्भवपञ्जिकायां पञ्चम सर्ग. समाप्तः–म. समाप्त –नास्ति–च श्रीवल्लभदेवविरचितायां कुमारसम्भव लघुटीकायां उद्धृतसारायां पञ्चम. सर्ग. समाप्त ।–ल. इति श्रीआनन्ददेवायनिवल्लभविरचितायां कुमार-सम्भवटीकायां पञ्चमः सर्गः ।–न. इत्यानन्ददेवात्मजवल्लभदेवकृतायां कुमारसम्भव-टीकायां पञ्चम सर्गः ।–शा इत्यानन्ददेवात्मजवल्लभदेवविरचितायां कुमारसम्भव-टीकायां पञ्चम. सर्गः । मुद्रा

॥ श्री ॥

आनन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपञ्जिकायां

# षष्ठः सर्गः ।

अथ विश्वात्मने गौरी संदिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथ प्रमाणीक्रियतामिति ॥१॥

अथ विश्वेत्यादि ॥ अथ अनन्तरं हरावष्टम्भनादनन्तरं[1] [गौरी] पार्वती विश्वात्मने शर्वाय मिथः गुप्तं सखीं संदिदेश अचीकथत्[2]। किमिति। हे सखि इति कथय [मे] मम भूभृतां नाथः[3] पिता दाता वर्तते[4]। युष्माभिः स प्रमाणीक्रियताम्[3] इति। यतः कन्या हि जनकाधीना ॥१॥

१ हरावष्ट०धा—ना मुना   २ अज्ञापयत—व ब ना मुना आदिष्टवती भ   ३ हिमाचल—अपा व ब न अत्र वस्तु यथिक्रियताम—ब व स ग
४ प्रभुरस—ना मुना

तया व्याहृतसंदेशा सा बभौ निभृता प्रिये ।
चूतयष्टिरिवाभ्यासे[1] मधौ परभृतोन्मुखी ॥२॥

१ ०भ्याने—म स ना मुना

तया व्याहृतेत्यादि ॥ तया सख्या प्रियस्याभ्यासे[1] समीपस्थेऽपि भर्तरि [व्याहृतसन्देशा] कथितसन्देशा। अत एव हि निभृता सलज्जत्वात्[2] विनीतेव [सा] देवी बभौ रेजे। स्वयमभाषमाणेन निभृतत्वे सति शोभालङ्कारः।[3] शालीनत्वं हि कन्यानामलङ्कारः। येन सा बभौ मधौ वसन्ते अभ्यासे[4] निकटस्थे परभृतोन्मुखी कोकिलायुक्ता[5] [चूतयष्टिरिव] चूततरुलता यथा स्यात्[6]। यत्सदेशस्य कोकिलाया मुखत्वम्। औपचारिकश्च संदेशव्यवहारः। हरस्य मधुरूपमानं गौर्याश्चूतलता सख्या परभृता। परभृतादीनां कोकिलार्थत्वेऽपि क्रिया प्रवृत्तिनिमित्तं, न तु जातिरिति जातेरस्त्रीविषयत्वा[7]दिति ङीप् न भवति ॥२॥

१ अभ्याने—ना मुना   २ सलज्जत्वात—ना मुना   ३ नानाभवा-
स्वयं—व ब म ल ■   ४ अभ्यासे—ना मुना   ५ दूतिका—व दूति-
म व न ना मुना   ६ भाति—ना मुना   ७ द पा० सू० ४-१-६३

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीन् ज्योतिर्गृहा[1]न्सम सस्मार स्मरशासनः ॥३॥

१. ज्योतिर्मयान्-म. स.

स तथेतीत्यादि ॥ स [स्मरशासनः] स्मररिपुः तथा इति एवं करोमीति प्रतिज्ञाय एवं याचेऽहं नगेशमित्यङ्गीकृत्य [उमां] गौरीं च [कथम् अपि] कृच्छ्राद् [विसृज्य] विमुच्य ऋषीन् [सस्मार] असस्मार्षीत् ।[1] कान्मुनीन् । ज्योतिर्गृहान् ज्योतींषि तारा गृहं धिष्ण्यं स्थानं येषां तान् । सप्तर्षीनित्यर्थः । 'शासुर्हिंसायां' [धा० पा० ७२७] स्मरं शासितवानिति स्मरशासनः । शासोर्वा रूपम् ।३॥

१. 'शेषत्वाविवक्षया षष्ठ्यभावः ।'-अपा. वा. मुद्रा.

ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः सपदि प्रादुरासन्पुरः प्रभोः ॥४॥

ते प्रभेत्यादि ॥ ततः ते [तपोधनाः] मुनयः [सारुन्धतीकाः] अरुन्धतीसहिताः सपदि स्मरणानन्तरमेव[1] [प्रभोः] देवस्य [पुरः] अग्रतः प्रादुरासन् आविर्भूताः[2] । [प्रभामण्डलैः] निजतेजोमण्डलैः [व्योम] आकाशं [द्योतयन्तः] भासयन्तः ।४॥

१. स्मरणादनन्तरमेव-व. न. २. आविबभूवु-वा मुद्रा

आप्लुतास्तीरमन्दारकुसुमोत्कर[1]वीचिषु ।
आकाशगङ्गास्रोतस्सु[2] दिङ्नागमदगन्धिषु ॥५॥

१. उत्कर०-स, उत्किर-म अ. ना. २. व्योमगङ्गाप्रवाहेषु-म.

आप्लुता इत्यादि ॥ कीदृशास्ते महर्षयः । आकाशगङ्गास्रोतस्सु सुरसरित्प्रवाहेषु आप्लुताः स्नाताः । कीदृशेषु [तीरमन्दारकुसुमोत्करवीचिषु] तटपर्यन्तमन्दारसुमनोविकिरत्तरङ्गेषु तीरे पर्यन्ते मन्दारकुसुमैरुत्तरास्तदधिका उत्तराः प्रधाना वा[1] वीचयो येषु । उत्किर इति पाठे कुसुमान्युत्किरन्ति क्षिपन्ति ये ते वीचयो येषाम् । [2]अथ च कुसुमानामुत्कराणि राशयो वीचयो येषाम्[2] । तथा जलक्रीडागतानां [दिङ्नागमदगन्धिषु] दिग्गजानां मदगन्धः सुगन्धो विद्यते येषु ॥५॥

१. 'उत्तरा : प्रधाना वा'-नास्ति-व, मुद्रा. २---२ 'अथ---येषाम्'—नास्ति. मुद्रा.

मुक्तायज्ञोपवीतानि बिभ्रतो[1] हेमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥६॥

मुक्तायज्ञेत्यादि ॥ [मुक्तायज्ञोपवीतानि] मुक्तामयानि यज्ञोपवीतानि [बिभ्रत] दधत । [हेमवल्कला] हेम्न सुवर्णस्य[1] वल्कलानि चीवराणि येषा ते । [रत्नाक्षसूत्रा] रत्नमयानि चाक्षसूत्राणि येषा ते, रत्नमयजपवलया । अतश्चोत्प्रेक्षते[2] । कल्पवृक्षा इव प्रव्रज्याम् आश्रिता प्रव्रजन स्थिता । तेषा हि रत्नसुलभत्वम् । प्रव्रजन प्रव्रज्या, 'व्रजयजोर्भावे क्यप् ।' [पा० सू० ३-३-९८][3] ।६॥

१ स्वर्णस्य– ब न २ उत्प्रेक्ष्यत– शा मुद्रा ३ बिभ्रत इति 'नाभ्यस्ताच्छतु [पा० सू० ७-१-७८] इति नुमभाव ।'– अधा-ना मुद्रा

अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना शश्वत्स[1]प्रणाममुदीक्षिताः ॥७॥

१ साक्षा स०–म

अध प्रस्थापितेत्यादि ॥ [सहस्ररश्मिना] रविणा [शश्वत्] नित्य [सप्रणाम] प्रणतिपूर्वं [उदीक्षिता ] उद्वीक्षिता ऊर्ध्वं दृष्टा ।[1] ऊर्ध्वं स्थित इत्याह । यतस्तेषा ध्रुवनिकटे स्थानम् । अत एव [अध प्रस्थापिताश्वेन] अध प्रस्थापिता अश्वा येन । [समावर्जितकेतुना] समावर्जितो नामित केतुर्ध्वजो येन । [2]अनेनौद्धत्यं परिहृतम्[2] ॥७॥

१ अवलोकितता–भ ब ञ २ २ अनेन परिहृतम–नास्ति ब य न ल न ना मुद्रा

आसक्तबाहुलतया सार्धमुद्धृतया भुवा ।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥८॥

आसक्तेत्यादि ॥ तथा प्रलयापदि कल्पान्तविपत्तौ [महावराहदंष्ट्रायां] आदिवराहदंष्ट्रायां विश्रान्ता स्थिता इत्यविनदर[1]चौक्ति । किमेकाकि न[2]स्तत्र विश्रान्ता इत्याह । उद्धृतया [सार्धं] सह भुवा । सा हि भगवता वराहेण तोयादुद्धृत्य[3] दंष्ट्रायामूढा । [आसक्तबाहुलतया] आसक्ता आतुरत्वात् पातभयाल्लग्निता बाहुलता यया ॥८॥

१ ■ यनश्वर०–भ ब ज्यनश्वर०–ना मुद्रा २ नश्वर०–ब ब न– शा-मुद्रा ३ उद्धृत्य–ब ब न ना मुद्रा

सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् ।
पुरातनाः पुराविद्भिर्धातार इव कीर्तिताः ॥९॥

सर्गशेषेत्यादि ॥ पुराविद्भिः चिरन्तनै[1]र्मार्कण्डेयादिभिः पुरातनाः आद्याः धातारः वेधसः इति [कीर्तिताः] शब्दिताः । कुतः । विश्वयोनेः ब्रह्मणः सर्गशेषप्रणयनात् [2]अवशिष्टसृष्टिनिर्माणात्[2] । ब्रह्मणा हि किञ्चिन्निर्माय ततस्ते सृष्टौ नियुक्ता इत्यागम[3] ॥९॥

१ पुराणज्ञ०-भ व   २ २. 'अवशिष्ट . . निर्माणात – नास्ति–च व भ ल न शा. मुशा   ३ 'इत्यागम'–नास्ति–शा. मुशा

प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥१०॥

प्राक्तनानामित्यादि ॥ तथा तपस्विनः अपि प्राक्तनानां पूर्वाचीर्णानां[1] विशुद्धानां निर्मलानां [परिपाकम् उपेयुषां] पक्वानां च तपसां [फलानि] फलम् [उपभुञ्जानाः] अश्नन्तः । अन्यस्य हि जन्मान्तरे तप फलदायि । तेषां तु चिरजीवितत्वात्तत्रैव । अपि विस्मये । चित्रं सम्प्रति तपस्य-न्त[2]स्तप फलोपभोगिनः ॥१०॥

१ पूर्वभूतानाम्–शा. मुशा   २ तपस्यन्तोऽपि–च. भ व ल शा मुशा

तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥११॥

तेषां मध्येत्यादि ॥ बहु[1] नितरां बभासे रेजे[2] । कीदृशी । पत्युः वशिष्ठस्य [पादार्पितेक्षणा] अङ्घ्रिनिहितनेत्रा । यतः साध्वी पतिदेवता । अन्यत्र हि दृष्टिस्तस्या न याति । अतश्चोत्प्रेक्ष्यते । साक्षात् मूर्तिमती तपःसिद्धिः इव । मुनीनां हि सिद्धया भाव्यम् ॥११॥

१ ऋषीणां मध्यस्थारुन्धती–च शा. मुशा   २ अशोभत–व शा मुशा.

तामगौरवभेदेन मुनीश्चापश्यदीश्वरः ।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥१२॥

तामगौरवेत्यादि ॥ तां अरुन्धतीं [मुनीन्] ऋषीन् च अगौरवभेदेन समप्रतिपत्त्या[1] अपश्यत्, ईश्वरः[2] आवर्जयत् । यस्मादियं स्त्री अयं च पुमान् इति एषा अनास्था अव्यवस्था अप्रधानम् । गौरवकरणे यत्नो नयुज्यते । अपि तु सतां वृत्तं शील महितम् । [3]साधवो वृत्तं पूजयन्ती-त्यर्थः[3] । अरुन्धत्याश्चान्य स्वचरित्रेणाधिकः ॥१२॥

१ समया प्रतिपत्त्या–व. शा मुद्रा, तुल्यगौरवेण–भ व   २ महादेव.–व, दव –शा मुद्रा   ३ ३ साधवा चरित्र पूज्य भवतीत्यर्थं –भ. न

तद्दर्शनादभूच्छंभोर्भूया'न्दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो[1] मूलसाधनम्[3] ॥१३॥

१ भूय –व व चा   २ दाम्पत्यम–स.   ३ मूलकारणम–म च।

तद्दर्शनादित्यादि ॥ तद्दर्शनात्[1] तस्याः साध्व्या अरुन्धत्या आलोकनात् शंभोः शिवस्य [भूयान्] नितरां [दारार्थं] भार्यामानेतुं [आदरः] प्रयत्नो बभूव[2] । यस्मादिज्यादीनां धर्म्याणां क्रियाणां सत्पत्न्यः साध्व-पत्न्य एव मूलसाधनं कारणम्[3] ॥१३॥

१ 'केचिद् भूयान इति पठन्ति –अपा –ब.   २ अभवन–व शा मुद्रा
३ प्रधान कारणम–भ. ड न

धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।
पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥१४॥

धर्मेणापीत्यादि ॥ कामस्य मनः उच्छ्वसितं । विकसितमङ्कुरितम् । कीदृशस्य कामस्य । [पूर्वापराधभीतस्य] पूर्वस्मादपराधादीश्वरचेन-त्रानलक्षणाद् भीतस्य स्मरस्वरूपेण अनङ्गस्य शक्तिरूपेण [उच्छ्वसितं मनः] मनोभूरुच्छ्वसित इत्यर्थः । कदा । शर्वे[1] [पार्वतीं प्रति] पार्वत्यां धर्मेण अपि पदमनस्यावन्धसुधमं कारिते सति । यदा हरो गौरीमुद्वोढु-

१. महेश्वरे–अपा –भ. व

मैच्छदित्यर्थ ।[२] एव ह्युक्तम्—'परिणेष्यति पार्वतीं यदा [कुमार० ४-४२] इत्यादि । अपि विस्मये । चित्रमिद यदुमाया पद हरो धर्मेण कारितो न तु रागेण, तथापि स्मर पूर्वापराधभीत इति । भयं तु चण्डकोपत्वादीशस्य पुनर्बाधाशङ्कया ॥१४॥

२ वमप्रसितव तद्वचनाद [कुमार ६-१३] इत्यादिनव कथितम –अपा—ना मुना

अथ ते मुनय. सर्वे पूजयित्वा[१] जगद्गुरुम् ।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वच ॥१५॥

१ मानयित्वा—म गना

अथ त इत्यादि ॥ [अथ] तत ते [मुनय] सप्तप [जगद्गुरु] भगवन्तं [पूजयित्वा] प्रणामाञ्जलिनार्चयित्वा इद वक्ष्यमाणम् ऊचु अब्रुवन् । कीदृशा । अनूचाना[१] ब्रह्म आज्ञाविधेया साङ्गवेदाध्यायिनो वा । तथा [प्रीतिकण्टकितत्वच ] प्रीत्या भक्त्या कण्टकितत्वचो रोमाञ्चिताङ्गा ॥१५॥

१ सर्ववन्नित –भ न       २ कण्टकिता त्वच यया ते–भ व

किमूचुरित्याह—

यद् ब्रह्म सम्यगाम्नातं यदग्नौ विधिवद्[१] हुतम्[२] ।
यच्च तप्तं तपस्तस्य विपक्वं फलमद्य न ॥१६॥
यदध्यक्षेण जगता वयमारोपितास्त्वया ।
मनोरथस्याप्यपथं[३] मनोविषयमात्मन. ॥१७॥

१ विधिना–म ब न       २ घतम स       ३ ०प्याविषय–ग

यद् ब्रह्मेत्यादि ॥ यदध्यक्षेणेत्यादि ॥ यत् अस्माभि [सम्यक्] विधिवत् ब्रह्म वेदज्ञान च आम्नातम् अभ्यस्त परमात्मज्ञान वा । यत् च अग्नौ विधिवत् [हुतम्] हव्य[१] यत् च सम्यक्[२] तप [तप्त] चीर्णं तस्य सर्वस्य फलम् [अद्य] अधुना पक्वम् । यद् च [जगताम् अध्यक्षेण] भुवनगुरुणा [त्वया] भवता[३] अद्य [मनोविषय] चित्तगोचरम् आरोपिता वयम् स्मृता इत्यर्थ । [मनोरथस्य अपि अपथ] मनोरथा[४]नामप्य पथमविषयम् । न हि मनोरथा अपि कस्यचिदेतावन्त प्रसृता यद् भगवान् मे स्मरिष्यति ॥ १६॥१७॥ युग्मम् ।

१ अग्निहोत्रमासञ्जितम–च न ना मुना       २ नियमश्च – अपा ना मुना
३ आत्मन अपा—च भ व ल ना मुना       ४ मनोराज्या०–व

यस्य चेतसि वर्तेथाः स तावत्कृतिनां वरः ।
किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्तते ॥१८॥

यस्य चेतसीत्यादि ॥ हे भगवन् । तावत् त्वं यस्य [चेतसि] मनसि वर्तेथा तिष्ठेः स कृतिनां कृतार्थानां[1] [वरः] श्रेष्ठः पुण्यवतां पूज्यः । [2]उपचितसुकृतसम्भाराणां शिरोमणिमुकुट इत्यर्थः[2] । पुण्यभारसंपूर्णा[3] हि भगवन्तं स्मरन्ति । [4]यदुक्तम् –

'किं तेन न कृतं लोके किं न दत्तं महात्मना ।
शिवः प्रसन्नचित्तेन सन्ततं येन पूजितः ॥'[4]

किं पुनः तव चेतसि वर्तते त्वं यस्य स्मरसि स कृतिनां वरो भवेत् । [ब्रह्मयोनेः] ब्रह्मणः निरञ्जनस्य परस्य वा ज्ञानस्य योनेः प्रभवस्य तव ॥१८॥

१ प्रवीणानाम्—भ २ २ उपचित इत्यत्र नास्ति—ना मना ३ ०सम्भाराश्चिता ब ना मुना ४ यदुक्तम पूजित' नास्ति—ब भ ब

सत्य[1]मर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं तत्र[2] स्मरणानुग्रहात्तव ॥१९॥

१ नित्य०—अ भा २ ताभ्याम—भ अ ना तस्मात—भ

सत्यमर्कादि ॥ भुवनिकटवासात् [सत्यं] कामं [अर्कात् च सोमात् च] सोमसूर्याभ्यां[1] परम् उच्चं [पदं] स्थानं वयम् [अध्यास्महे] अधितिष्ठामः । अद्य पुनः तत् [तत्र] भवतः [स्मरणानुग्रहात्] स्मरणप्रसादलाभात्[2] [उच्चैस्तरम्] उन्नततरम् । त्वदनुध्यानाद्धि वयमत्युन्नतां प्रवृत्ताः[3] ॥१९॥

१ सूर्येन्दुभ्याम्—ब ब क न ना मुना २ ध्यानप्रसादात्—ब ब न ना मुना ३ उच्चैस्तरमित्यस्य तत्पाठो न ग्राह्यः पदस्य द्वयर्थत्वात्' अपा—मुना

त्वत्संभावितमात्मानं बहु मन्यामहे वयम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥२०॥

त्वत्सम्भावितेत्यादि ॥ आत्मानं [त्वत्संभावितं] त्वया आदृतं योग्यत्वेन[1] ज्ञातं सन्तं बहु मन्यामहे उत्कृष्टं जानीमः । यस्मात् उत्तमादरः[2] [प्रायः] प्रायेण स्वगुणेषु प्रत्ययम् अवबोधं निश्चयम् आधत्ते करोति ।

१ यथावत्—ब न ना मना २ ईश्वरपूजा'—अपा—ना मुना

महाजनगौरवाद् विज्ञायते नूनं गुणान्विता वयमिति । वद्धिति क्रियाविशेषणत्वेऽप्यात्मन एवोत्कर्षः प्रतीयते ॥२०॥

या नः प्रीतिर्विरूपाक्ष त्वदनुध्यान[1]सम्भवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् ॥२१॥

१. तव निध्यान०-ब ना

या नः प्रीतिरित्यादि ॥ हे [विरूपाक्ष] विकृतनेत्र [त्वदनुध्यानसम्भवा] भवत्स्मरणेनोत्पन्ना या असौ [प्रीतिः] तुष्टिः [नः] अस्माकं सा हि किम् इति [तुभ्यं] तव आवेद्यते । यस्मात् सर्वेषां [देहिनां] प्राणिनां त्वम् [आत्मा असि] अन्तस्तिष्ठसि । अतस्त्वं स्वयमेव सर्वमवैषि ॥२१॥

इदानीं प्रसंगाद् भगवत्स्वरूपजिज्ञासयाहुः —

साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्तसे ॥२२॥

साक्षात् दृष्टोऽसीत्यादि ॥ चित्रमिदं [यत्] साक्षात् [दृष्टः] आलोकितः अञ्जसा सामस्त्यभावेन कार्त्स्न्येन तत्त्वेन[1] वा । त्वां वयं न [विद्म] जानीमः[2] । अतश्च [प्रसीद] प्रसादं कुरु कथय [आत्मानम्] आत्मस्वरूपं किंरूपोऽसीति । स्वयमेव कथं न विचारयथेत्याह-न धियां पथि वर्तसे । यश्च बुद्धेरप्यविषयः स कथं स्वयमेव गम्यते[3] ॥२२॥

१ तत्त्वत -ब शा मुद्रा  २ जानीमहे-ब  ३ अवगम्यताम्-शा मुद्रा.

सामान्येनोक्तं विशेषेणाह—

किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथो[1] यस्तस्य[2] संहर्ता भागः कतम एष ते ॥२३॥

१ अथ—म स, आहो-शा मुद्रा २. विश्वस्य—म. चा

किं येनेत्यादि ॥ [एष] अयं [ते] तव प्रत्यक्षस्थः भागः कतमः । किं येन ब्रह्माण्डभागं व्यक्तं[1]सृजसि स ब्रह्मा उत येन तद् बिभर्षि पालयसि स विष्णुः । अथो[2]यः तस्य विश्वस्य[3] संहर्ता अन्तिता स रुद्रः इति कतमः एष ते । रुद्रत्वेऽवगते संशयस्यावसर इति चेत्, सत्यं तथापि चिन्त्यमेतत्[4] ॥२३॥

१ ब्रह्मादिस्तम्बपर्यन्तं जगत-शा मुद्रा २. आहो-शा मुद्रा
३ व्यक्तस्य-ब शा मुद्रा  ४ चेत् सत्यं तथैव-शा. मुद्रा

अथ वा सुमहत्येषा प्रार्थना देव तिष्ठतु ।
चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम् ॥२४॥

अथ वा सुमहतीत्यादि ॥ अथ वा एषा प्रार्थना[1] [सुमहती] गुह्यार्थावबोधाद्[2]तिमहती दुर्लभा [देव] भगवन् [तिष्ठतु] आस्ताम् । [चिन्तितोपस्थितान्] आध्यातान् सन्तः प्राप्तान् नः अस्मान् [शाधि] आज्ञापय किं करवाम । साधयाम इति प्रार्थने लोट् ॥२४॥

१ 'अभ्यर्थना'–अपा–व दा मुद्रा २ प्रकाशनाद०–व दा मुद्रा

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।
उपचिन्वन्प्रभां तन्वीं प्रत्याह परमेश्वरः ॥२५॥

अथ मौलीत्यादि ॥ [अथ] ततः [परमेश्वरः] देवः प्रत्याह प्रतीपमालपत् । किं कुर्वन् । [मौलिगतस्य] शिरःस्थस्य [इन्दोः] शशिनः [तन्वीम्] अल्पीयसीं [प्रभां] ज्योत्स्नां [विशदैः] निर्मलैः [दशनांशुभिः] दन्तमयूखैः [उपचिन्वन्] वर्धयन् ॥ आहेति भूते[1] प्रयोगः प्रमादजः ॥२५॥

१ 'णल्, तस्मात्'–अपा–मुद्रा.

कन्यामार्गणचोदनाशङ्कानिवारणायाह–

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥२६॥

विदितमित्यादि ॥ [वः] भवतां [विदितं] अवगतमेव तत् यथा [मे] मम याः [काश्चित्] काश्चन प्रवृत्तयः सर्वे[1] व्यापारास्ते न स्वार्था अपि तु परार्था एव । यतः क्षितिसलिलाग्निपवन[2]यजमानाकाशसोमसूर्याख्याभिः [अष्टाभिः मूर्तिभिः] तनुभिः [इत्थंभूतः] एवंविधः परार्थोन्मुखः [सूचितः] कथित एवाऽहम्[3] ॥२६॥

१. ये केचित्–व न. दा मुद्रा २. ०सलिलहुताशनपवन०–व ■ एन दा मुद्रा ३. 'पृथिव्यादीनां हि व्यापाराः परार्था एव । वो विदितमिति 'क्तस्य च वर्तमाने' [पा०सू० २–३–६७] इति षष्ठी ।'–अपा–मुद्रा

सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥२७॥

सोऽहं तृष्णेत्यादि ॥ स परार्थप्रवृत्तः अहं [अरिविप्रकृतैः] सपत्नपरिभूतैः [देवैः] गीर्वाणैः प्रसूतिं प्रति पुत्रं प्रति [याचितः] प्रार्थितः[1] । 'भगवन् ! अपत्यरूपमयां स्वमूर्तिमुत्पादय । योऽस्माकं जयाय सेनानीर्भविष्यति' इति । यथा [तृष्णातुरैः] पिपासुभिः चातकैः मयूरविशेषैः विद्युत्वान् मेघो वृष्टिं याच्यते । याच्यत इत्यप्रधानकर्मणोर्निष्ठयोक्तत्वात् प्रसूतिवृष्ट्योर्द्वितीया भवत्येव । विद्युद् विद्यते यस्याऽसौ विद्युत्वान् ।[2] ॥२७॥

१. याचित अर्थित.–अपा.–य. न मा मुद्रा २ 'तसौ मत्वर्थे' इति भ त्वात पदत्वाभावे जश्त्वाभाव ।' —अपा.–मा मुद्रा

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये[1] हविर्भोक्तुर्यजमान इवारणिम् ॥२८॥

१ उत्पादाय–अ ना.

अत आहर्तुमित्यादि ॥ यदाऽहं पुत्रं याचितः अत कारणात् आत्मजन्मने पुत्रोत्पत्तये [पार्वतीं] गौरीं [आहर्तुम्] आनेतुम् इच्छामि । यथा [हविर्भोक्तुः] अग्नेः [उत्पत्तये] आविर्भावाय [यजमानः] दीक्षितः अरणिं दारवीमा[1]जिहीर्षति ॥२८॥

१ निर्मन्थनकाष्ठमा० —ल

तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते संबन्धाः सदनुष्ठिताः ॥२९॥

तामस्मदित्यादि ॥ अतः तां पार्वतीम् [अस्मदर्थे] मदर्थे [युष्माभिः] भवद्भिः [हिमालयः] नगेशः [याचितव्यः] अर्थयितव्यः । यस्य यत्र व्यापारस्तन्मुखेन कस्मान्न मृग्यत इत्याह–सदनुष्ठिताः साधुभिर्निश्चिताः सम्बन्धाः [विक्रियायै न कल्पन्ते] विकृतिं न यान्ति, स्थिरा भवन्तीति ॥२९॥
सर्वेश्वरः सन्कथमनेन सम्बन्धं करोतीति[1] चेत्याह–

उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।
तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥३०॥

१. कुरुत–मुद्रा

उन्नतेनेत्यादि ॥ तेन अद्रिनाथेन[1] [योजितसम्बन्धं] कृतसम्बन्धं माम् अपि अत्रञ्जिन कृतार्थं वित्त जानीत । यथा मया जामात्रा स श्लाघ्यते तथाहमपि तेन श्वसुरेणेत्यपिशब्दार्थः । तया रूपद्वयेनप्यसावुत्कृष्ट । तत्र स्थावरमपेक्ष्य तेन उन्नतेन व्योमस्पृशा स्थितिमता स्थिरेण भुवः धुरम् [उद्वहता] बिभ्रता महीधरत्वादद्रीणाम् । जङ्गमेत्युन्नतेन महाप्रभावेण स्थितिमता समर्यादेन भूमेर्धुरं योगक्षेममुद्वहता पर्वतराजत्वात् । वित्तेति विद्लोट् ॥३०॥

१ अद्रिराजेन—ब व धा. मुद्रा

एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते ।
भवत्प्रणीतमाचारमामनन्ति[1] हि साधवः ॥३१॥

१ ०माचर्यं त–धा

एवं वाच्य इत्यादि ॥ वरगुणानुद्दिश्य कन्यार्थम् [एवम् ] इत्थं तत्पितु' [वाच्य ] वक्तव्यम् इति [व'] भवतां न [उपदिश्यते] उच्यते । यस्मात् [साधवः] विपश्चित [भवत्प्रणीत] युष्मन्निर्मितम् आचारं व्यवहारम् [आमनन्ति] आहु. । स्मृतिकर्तारो हि यूयम् ॥३१॥

आर्याप्यरुन्धती तत्र व्यापारं[1] कर्तुमर्हति ।
प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता ॥३२॥

१ साहाय्य—अ ना

आर्याऽपीत्यादि ॥ तत्र हिमवद्गृहे [आर्या] भगवती अरुन्धती अपि व्यापारं साहाय्यकं [कर्तुं] विधातुमर्हति । यस्मात् एवंविधे कार्ये वधूमार्गणकृत्ये [पुरन्ध्रीणां] स्त्रीणां[प्रगल्भता] चातुर्यम् । ता ह्यनिच्छन्तमपि कन्यापितरं प्रेरयितुं जानन्ति ॥३२॥

तत्प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महाकोशी[1]प्रपातेऽस्मिन्संगमः पुनरेव[2] नः ॥३३॥

१ ०कोशी–अ न, २ पुनरस्तु–अ. ना

तत्प्रयातेत्यादि ॥ तत् तस्मात् [सिद्धये] कार्यसाधनाय औषधिप्रस्थम् औषधिप्रस्थाख्यं हिमवत्पुरं [प्रयात] व्रजत । पुनः च [नः] अस्माकं कार्यसिद्धिनिवेदनाय अस्मिन् [महाकोशीप्रपाते] महाकोशाख्ये प्रपाते भूयो समागमः । अत्राहं भवतां प्रतिपालयामीत्यर्थः ॥३३॥

तस्मिन्संयमिनामाद्ये जाते परिणयोन्मुखे[1] ।
जहुः परिग्रहव्रीडां[2] प्राजापत्यास्तपस्विनः ॥३४॥

१. ०योत्सुके—शा. मुद्रा. चा.  २. ०व्रीलाम्—अ. ना.

तस्मिन्संयमिनामित्यादि ॥ ततः तस्मिन् भगवति संयमिनाम् आद्ये अपि [परिणयोन्मुखे] विवाहाभिमुखे [जाते] सम्पन्ने सति [प्राजापत्याः] ब्रह्मतनयाः[1] । [परिग्रहव्रीडां] विवाहलज्जां [जहुः] अत्यजन् । ते हि नित्यं ब्रह्मचारिणः शम्भोरग्रे सदैव लज्जिता आसन् 'अननुभूतस्त्रीसंगमानामस्माकं कीदृशी तपस्विता' इति । तदा तु तपस्विनायके[2] रागिणि जाते सर्वेषां सामान्यात्त्रपात्यागः[3] ॥३४॥

१ मुनयः—अपा.—व. शा. मुद्रा.  २ तस्मिन्नपि—शा. मुद्रा.  ३ अपत्रपात्यागः—व. ब. त. शा. मुद्रा

तत परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि संप्राप्तः[1] प्रथमोद्दिष्टमास्पदम्[2] ॥३५॥

१. सकाशतः—म. अ. ना.  २. ०माश्रमम्—चा.

ततः परमित्यादि ॥ [ततः] तदनन्तरं परमेवमस्तु इति [उक्त्वा] अभिधाय [मुनिमण्डलं] सप्तर्षिवलयं [प्रतस्थे] जगाम । [भगवान्] देवः अपि [प्रथमोद्दिष्टम् आस्पदं] महाकोशीप्रपातं संप्राप्तः सञ्चचार । परममित्युच्यमाने[1] पुण्याहवचसीत्यन्ये[3] ॥३५॥

१ अभ्युपगमे—व. ब. शा. मुद्रा.  २. ०ऽवचन०—व.  ३. इत्ययं.—व.

तेऽप्याकाशमसिश्यामसुत्पत्य[2] परमर्षयः ।
आसेदुरोषधिप्रस्थं मनसा सह मानसाः[3] ॥३६॥

१. ते चाका०—म., त आका०—शा. मुद्रा. अ. ना.  २. ०मुत्प्लुत्य—व
३. समरहसः—म. चा. अ. ना.

तेऽप्याकाशमित्यादि ॥ मनसा निर्मिताः मानसाः ते सप्तर्षयः [असिश्यामं] खड्गनीलम् [आकाशं] खम् [उत्पत्य] उत्प्लुत्य[1] ओषधिप्रस्थं पुरम् [आसेदुः] प्रापुः । मनसा सह मन इवेति चातुर्योक्तिः । यदैव गमनाय मनः कृतं तदैव पुरं प्रापुरित्यर्थः ॥३६॥

१. उद्गम्य—व. शा. मुद्रा.

इदानीमोषधिप्रस्थवर्णनमाह-

अलकामतिवाह्येव वसतिं वसुसंपदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेव विनिवेशितम्[१] ॥३७॥

१ ०वोपनिवेशितम्-म स अ ना

अलकामतिवाह्येत्यादि ॥ कीदृशं पुरम् । वसुसंपदां रत्नसमृद्धीनां वसतिम् आश्रयभूताम् अलकां वैश्रवणपुरीम् अतिवाह्य निष्पीड्य इव लुण्ठयित्वेव[१] निर्मितं [स्वर्गाभिष्यन्दवमनं] स्वर्गसारनिस्यन्दोत्सर्गं[२] [कृत्वा] विधाय इव [विनिवेशितम्] रचितम् । सर्वोत्कृष्टयोरलकामरावत्योः सारमादायेव कृतमित्यर्थः । एवमप्युक्तम्[३]-'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन । स्वदेशाभिष्यन्दवमनेन च नगरं विनिवेशयेत् ॥'-[अर्थशास्त्रम्-२-१-१]

१ प्रव्य०-सा मुना २ लुण्ठयित्वा-व व सा मुना ३ सारावमनम्-व व सा मुना ४ एव ह्युक्तम्-व सा मुना ५ पुर-यमनम्-व भ न ए

गङ्गास्रोतःपरिक्षिप्तं वप्रान्तज्वलितौषधि ।
बृहन्मणिशिलासालं गुप्तावपि[१] मनोहरम् ॥३८॥

१ स्वर्गादिव-व ना

गङ्गास्रोत इत्यादि ॥ अन्यत्र कस्मात् तत्र रम्यम् यत् [गुप्तौ] गुप्तप्रदेशे[१] अपि [मनोहरं] रम्यं सेव्यमेव लक्ष्यते । तथा हि-[गङ्गास्रोतःपरिक्षिप्तं] सरिद्वराप्रवाह[२]वेष्टितं [इति] जलगुप्तिः । [वप्रान्तज्वलितौषधि] वप्रान्ते ज्वलितौषधिरित्यग्निदुर्गत्वम् । [बृहन्मणिशिलासालं] बृहत्यो मणिशिला एव सालः प्राकारो यत्र तत् ।[३] अन्यच्च नगरं जलाग्निप्राकारभीषणमत्र यं भवति । [४]एतच्चैवंविधमपि स्वभावसाराद् गुप्तावपि सेव्य किमुच्यते । अत्र तु 'गुप्तावपि मनोहरं' पाठः ॥३८॥ त्रिभिः कुलकम् ।[५]

१ गुप्तिस्थाने-व सा मुना, 'पर्यन्तप्रदेशे-पि'-अपा-सा. मुद्रा. २ गङ्गास्रोतसा परिक्षिप्तम्-सा मुना ३ इति प्राकारगुप्ति'-अपा-व न सा मुना ४...५ 'एतच्चं . कुलकम्'-नास्ति-सा मुना, 'त्रिभिर्विशेषकम्' इति साधुपाठ ।

जितसिंहभया नागा यत्राश्वा बिलयोनयः ।
यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः ॥३९॥

जितसिंहेत्यादि ॥ यत्र [जितसिंहभया नागा] केसरिभ्यः करिणो न बिभ्यती[1]त्यर्थः । अश्वाः च [बिलयोनयः] वनविवरेभ्यो यत्रोत्तिष्ठन्तीति सैन्यसम्पत्तिकथनम् । [2]मातरमनुहरन्तेऽश्वाः । अतो बिलशब्देनोच्चैःश्रवा उच्यते[2] । 'बिलमुच्चैःश्रवो हये' । [द्र० मेदिनी १४८-४९]। यत्र [किंपुरुषाः] पुण्यजना किन्नरादय एव [पौराः] पुरवासिनः[3] वनदेवताः एव च योषितः अङ्गनाः । दिव्या नारी वनदेवताः कथ्यते । अथ किमन्यजातीयाः पौरयोषितो न तत्र सन्ति । कियती चेयं प्रशंसा । एवं तर्हि यत्र यक्षाः किंपुरुषाश्च पौरतुल्याः पौरा वनदेवताश्च योषिन्निभाः । न तु तेषूपरि[4] कस्यचिद् गौरवबुद्धिरिति पुरयोषित्स्तुतिः[5] ॥३९॥

१. बिभ्यति—ब न शा. मुद्र.  २ २ 'मातर . उच्यते'—नास्ति. शा मुद्र.  ३. पौरजानपदाः—ब न ल. शा. मुद्र.  ४ 'तासु वा'—अपा ब न शा मुद्र.  ५ पौरयोषित्प्रशंसा—मुद्र.

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसंदिग्धाः करणैर्मुरजस्वनाः ॥४०॥

शिखरासक्तेत्यादि ॥ यत्र वेश्मनां मुरजस्वनाः करणैः च [1]चपट-पाटपुट-उद्घट्टक-सन्निपातकप्रभृतिभिस्तालैः [व्यज्यन्ते] निश्चीयन्ते न तु स्वनतः[2] । यतः शिखरासक्तमेघानां[3] उच्चत्वात् प्रान्तावस्थितजलदानाम् । अत एव ते गम्भीरा अनुगर्जितसंदिग्धाः अनुगर्जितप्रतिश्रुताः संदिग्धाः पिहितरवाः[4] । न हि जलदरवेषु तालसद्भावः ॥४०॥

१. १ 'चपट . प्रभृतिभि'—नास्ति—ब अ. ल. शा मुद्र.  २ 'स्वन.'—ब य. न शा. मुद्र.  ३ 'शृङ्गावस्थितमेघानाम'—अपा—ब ब क न. शा मुद्र.  ४ [illegible] मुरजध्वनिरिति गदये करणानां [illegible]'—अपा - ब ब न शा मुद्र.

यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥४१॥

यत्र कल्पत्यादि ॥ यत्र गृहयन्त्रपताकाश्री भवनशालभञ्जिका[1] कृतक वैजयन्तीशोभा [कल्पद्रुमैः] कल्पवृक्ष एव यन्त्रपताकया या शोभा कार्या ता तत्र सुरतरव एव कुर्वन्तीत्यर्थः । यत [विलोलविटपांशुकैः] विलोलानि चञ्चलानि विटपेषु प्रकाण्डेष्वंशुकानि वासांसि येषां तैः । पताकाया ह्यंशुकैर्भाव्यम् । अत एव सा [अपौरादरनिर्मिता] विनैव पौरादरेण पुरुषप्रयत्नेन निर्मिता कृता ॥४१॥

१ भवनशालभञ्जिका –नास्ति–वा ब दा मु॥

यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु[1] ।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम्[2] ॥४२॥

१ ०मापानभूमिषु–म २ ०मुपहारताम–ना मु॥

यत्र स्फटिकेत्यादि ॥ यत्र पुरे [स्फटिकहर्म्येषु] स्फटिकसौधेषु या आपानभूमयः सरकोर्वीषु ज्योतिषां प्रतिबिम्बानि ताराप्रतिमा एव उपहारता पुष्पप्रकरत्वं[1] प्राप्नुवन्ति यान्ति । सितत्वेन तत्सादृश्यत्वात् ॥४२॥

१ उपहारता पुष्पप्रकारता ना मु॥

यत्रौषधिप्रकाशेन नक्तं दर्शितसंचराः ।
अनभिज्ञास्तमिस्राणां दुर्दिनेष्व[1]भिसारिकाः ॥४३॥

१ दुर्दिनेष्व० म ब म

यत्रौषधीत्यादि ॥ यत्र नक्तं रात्रौ दुर्दिने अपि आसारवर्षेऽपि अभिसारिका विलासिन्यः तमिस्राणां तमसाम् अनभिज्ञाः अननुभविन्यः । ध्वान्ततति[1]मेव न जानन्तीत्यर्थः । यत [औषधिप्रकाशेन] औषधिदीप्त्या [दर्शितसंचराः] दर्शितसंचरो मार्गो यासाम् ताः । संचरत्यस्मिन्निति संचरो मार्गः । तम एव तमिस्रम् । दुर्दिनं वर्षम् । [उक्तं च]

या दूतिका गमनकालमपारयन्ती
सोढुं स्मरज्वरमरातिपिपासिनेव ।
निर्याति वल्लभजनाधरपानलोभा
त्सा कथ्यते कविवरैरभिसारिकेति ॥४३॥

१ ध्वान्तसमूह–ना मु॥

यौवनान्तं वयो यस्मिन्नातङ्कः[1] कुसुमायुधात्[2] ।
रतिखेदसमुत्थाना[3] निद्रा संज्ञाविपर्ययः ॥४४॥

१. यस्मिन्नान्तक. –म. चा.  २ कुसुमायुध –म. स चा
३ ०समुत्पन्ना–म. अ. न्ना. ०स्वेदसमुत्थाना–चा

यौवनान्तमित्यादि ॥ अन्यत्र स्थविरान्तं वयस्तत्र तु यौवनान्तं वयः इति जराद्यभावकथनम् । यत्र च [कुसुमायुधात्] कन्दर्पात्[1], [आतंकः] भयं, न त्वन्यकृतम्[2] । तथा [रतिखेदसमुत्थाना] रतिखेदात्समुत्थानमुत्पत्तिर्यस्याः सा निद्रा एव संज्ञाविपर्ययः निश्चेतनत्वम्, न तु प्राणवियोग इत्यजरामरत्वोक्तिः ॥४४॥

१. 'यत्र च सायकक्षेपात् मदन एवातङ्क उपद्रवो न तु व्याध्यादिकृत –अपा –अ. व न. शा. मुद्रा.  २. वैरिव्याधुत्थमिति टिप्पण्यामधिक पाठ भ–१,

भ्रूभेदिभिः[1] सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृता स्त्रीणामप्रसा[2]दार्थिनः प्रियाः ॥४५॥

१. भ्रूभङ्गिभि.–चा.  २. ०माप्रसा०–म. स.

भ्रूभेदिभिरित्यादि ॥ यत्र [स्त्रीणां] मानिनीनां कोपैः क्रोधैः [प्रियाः] युवानः अप्रसादार्थिनः कृताः, प्रसादं तासां नार्थयन्ते कोपस्यैव रम्यतरत्वात् ।[1]यतः प्रणयकुपिता हि कामिन्यो रम्यतरा भवन्ति ।[1] तथा हि–[भ्रूभेदिभिः] भ्रूभङ्गयुक्तैः [सकम्पोष्ठैः] स्फुरदधरैः[2] [ललिताङ्गुलितर्जनैः] ललितानि रम्याणि अङ्गुलितर्जनानि येषु [तैः] । ॥४५॥

१...१ 'यत...भवन्ति'–नास्ति–शा. मुद्रा. ३. स्फुरदधरदलैः–व. न. शा. मुद्रा

संतानकतरुच्छायासुप्तविद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं सुगन्धिर्गन्धमादनम्[1] ॥४६॥

१ ०मादन –स. गन्धवद्गन्ध०–म. सुगन्ध गन्ध०–चा

सन्तानकेत्यादि ॥ यस्य च बाह्यम्[1] उपवनम् उद्यानं [गन्धमादनं] गन्धमादनमित्येतदाख्यो गिरिः । कीदृशम् । [संतानकतरुच्छायासुप्तविद्या-

१ 'लौकिकम्'–अपा –व म. न शा. मुद्रा.

धराध्वगम्] सन्तानकाख्यास्तरवः सुरवृक्षास्तेषां छायासु सुप्ता विद्याधरा एवाध्वगा यत्र । बाह्योद्यानं हि सर्वसेव्यम् । गन्धवत् सुरभि । गन्धमादनशब्दो नपुंसकलिङ्गः ॥४६॥

अथ ते मुनयो[1] दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभिसन्धिसुकृतं[2] वञ्चनामिव मेनिरे ॥४७॥

१ तत्कान्तमृषयो — म. ब., तत्कान्त मुनयो–अ. ना, तत. ते मुनयो–वा.
२ ०कृता–अ ना

अथ त इत्यादि ॥ [अथ] ततः ते दिव्याः [मुनयः] सप्तर्षयः तादृशमौषधिप्रस्थं [प्रेक्ष्य] आलोक्य [स्वर्गाभिसन्धिसुकृत] स्वर्गो मे भवत्विति [अभि]सन्धाय उद्दिश्य कृत तपः[1] [वञ्चनां] विडम्बनाम् इव [मेनिरे] बुबुधिरे[2] । एतत्पुरमुद्दिश्य कस्मादस्माभिस्तपो न चीर्णम् । [3]एतेन सुरपुरतोऽपि रम्यतरत्वमुक्तम्[3] ॥४७॥

१ स्वर्गमभिसन्धाय उद्दिश्य सुकृत तप –व. ब ल. ना मुना २ अविदन –मुना. ३ . ३ न हि सुरपुरमतो रम्यम– ब क ■ ना मुना

ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
अवतेरु[1]र्जटाभारैर्लिखितानलनिश्चलैः[2] ॥४८॥

१ अवतेरु०– ना मुना अ ना २ ०मनिर्भ –वा

ते सद्मनीत्यादि ॥ ततः ते मुनयः गिरेः हिमवतः [सद्मनि] गृहे वेगात् अवतेरु[1] अगाहरन् । [उन्मुखद्वाःस्थवीक्षिताः] उन्मुखैर्द्वास्थैः प्रतीहारैर्वीक्षिताः । के एते स्युरिति । [लिखितानलनिश्चलैः] चित्रलिखितानलवत् निश्चलैः [जटाभारैः] जटाजूटैः उपलक्षिताः । द्वाः द्वार तत्र तिष्ठन्तीति द्वाःस्थ.[2] ॥४८॥

१ अवतेरु –ना २. तिष्ठन्तीति द्वास्थाः –ना मुना

गगनादवतीर्णा सा यथावृद्धपुरःसरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥४९॥

गगनादित्यादि ॥ गगनात् आकाशमार्गात् अवतीर्णा अवरूढा सा [मुनिपरम्परा] सप्तर्षिमाला [रेजे] व्यद्युतत् । [तोयान्तः] जलमध्ये प्रतिबिम्बिता [भास्करालो] सूर्यपङ्क्तिः इव इति भेजस्विकथनम् । [यथा-

वृद्धपुरःसरा] ये ये वृद्धा यथावृद्धं पुरःसरमग्रेगामि यस्याः सा यथा-वृद्धपुरःसराः । परम्परा पंक्तिः ॥४९॥

तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौ गिरिः[1] ।
नमयन्सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥५०॥

१ नग—मुद्रा

तानर्घ्यानित्यादि ॥ अर्घोऽर्चा तदर्थमुदकादिकं अर्घ्यं तत् [आदाय] गृहीत्वा [गिरिः] अद्रिराजः तान् मुनीन् [दूरात्] दूर प्रत्युद्ययौ अभ्युज्जगाम । यतः अर्घ्यान् अर्च्यान् । किं कुर्वन् । [सारगुरुभि] सारेण बलेन गुरुभिर्दुर्वहैः पादन्यासैः [वसुन्धराम्] अवनिं [नमयन्] अधःप्रवेशयन् ॥५०॥

धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥५१॥

धातुताम्रेत्यादि ॥ कीदृशोऽसौ । प्रकृत्या एव हिमवान् इति सुव्यक्तः[1] प्रकृतया एव देहेनाऽपि सदृश,[2] सुखेन व्यज्यते ज्ञायते [इति सुव्यक्तः] रूपद्वयस्यापि सादृश्यात् । 'ईषद्दुःसुषु' । [पा० सू० ३-३-१२६] इति खल् । तथा हि स्थावरे ज्ञायते [धातुताम्राधरः] धातवः एव ताम्रोऽधरो यस्य । प्रांशुः उच्चप्रमाण[2] [देवदारुबृहद्भुजः] देवदारव बृहन्तो भुजा यस्य[3] [शिलोरस्कः] शिला एव उरो वक्षो यस्य । जङ्गमे तु धातुताम्राधरः धातुरिव ताम्राधरः । प्रांशुः मानोन्नतः देवदारु-वन्महाभुज । शिलेव श्लक्ष्णं विशालमुरो[4] यस्य । अस्मिन्नवसरे न तथाऽयं सप्रयोजनश्लोक ॥५१॥

१. 'प्रकृत्या......सदृश'—नास्ति—व. व दा मुद्रा    २ उन्नत—व दा
३ 'दीर्घबाहु'—अपा—व. न मुद्रा    ४ कठिनमुर — व व न दा मुद्रा

विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य देशकः[1] ।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः[2] ॥५२॥

१ दर्शक—अ ना, दैशिक—दा मुद्रा    २ ०वर्मभि—स

विधिप्रयुक्तेत्यादि ॥ स तान् मुनीन् शुद्धान्तम् अन्तःपुरम् आश्रयामास निनाय । 'एतेन महागौरवकथनम् । अन्योऽपि यः किल शुद्धकर्मा सोऽन्तःपुरे नीयते'[1] । [विधिप्रयुक्तसत्कारैः] विधिना प्रयुक्तः कृत सत्कारः पूजा येषां तैः । स तु स्वयं मार्गस्य देशकः[2], उपदेष्टा, अनेन पथा गच्छतेति । कर्मेगत्युपसर्जनप्राप्त्यर्थत्वादत्र न मुख्यं गत्यर्थत्वमिति तैरिति द्वितीयाभावः ॥५२॥

१ 'एतेन ... नीयते'नास्ति–ख ब ल दा मुना   २ दर्शिकः–दा मुना

तत्र वेत्रासनासीनान् कृतासन[1]परिग्रहः ।
इत्युवाचेश्वरान्वाचं प्राञ्जलिर्भूधरेश्वरः[2] ॥५३॥

१ नीचासन०–म ब ०ननासन०–अ–ना   २ पृथिवीधर.–स, जगतीध०–व ना मुना

तत्र वेत्रेत्यादि ॥ तत्र निशान्ते तान् ईश्वरान् वशिनः [भूधरेश्वरः] अद्रिनाथः [इति] इत्थं [वाचं] गिरः [उवाच] जगाद इति द्विकर्मको वचि । वाच ईश्वरान् वाचस्पतीन् तान् इति केचित्[1] । ईश्वरो जितेन्द्रियः । [वेत्रासनासीनान्] वेत्रं दारुविशेषस्तत्कृतेष्वासनेष्वासीनानुपविष्टान् । सोऽपि तदाज्ञया [कृतासनपरिग्रहः] गृहीतविष्टरः प्राञ्जलिः पेशलत्वात्[2] कृताञ्जलिबन्धः ॥५३॥

१ 'इति केचित'–नास्ति क. ब ल,   २. 'पशलत्वात्' नास्ति–न. म ल दा मुना

किमुवाचेत्याह–

अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥५४॥

अपमेघोदयमित्यादि ॥ [अतर्कितोपपन्नं] अतर्कितमशङ्कितम्[1]चिन्तितमुपपन्नं घटितम् । [illegible] भवतां [दर्शनम्] अवलोकनम् [अपमेघोदयं वर्षम्] अनभ्रवृष्टितुल्यम् । [अदृष्टकुसुमं फलम्] अदृष्टकुसुमफलनिभं च । मम[2]त्यसम्भवोपमानगर्भं[3] रूपकमलङ्कारः । प्रतिभाति इति दृशिग्रहणं विकल्पार्थमिति द्वितीयाभाव ॥५४॥

१ 'अशङ्कितम्' – नास्ति–ब. दा मुना   २ मम प्रतिभासते–दा मुना
३ गुल्मम–ब

मूढं[1] बुद्ध[2]मिवात्मानं हैमीभूत[3]मिवायसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥५५॥

१. मूलं–शा. मुद्रा,  २. बुधम्–स.  ३. हैमीकृत०–अ. ना.

मूढं बुद्धमित्यादि ॥ [भवदनुग्रहात्] भवदीयदर्शनानुग्रहादहं आत्मानं [मन्ये] अवगच्छामि[1] [मूढं] सन्तं बुद्धम् इव पण्डितमिव । [आयसम्] अयोमयं सन्तं [हैमीभूतं] सुवर्णीभूतम्[2] इव । भूमेः भुवश्च [दिवम् आरूढम् इव] स्वर्गमुद्गतमिव । तत्तुल्यपरितोषात् ॥५५॥

१. 'कीदृशम'–अधा.–ब. व. शा. मुद्रा.  २. सुवर्णीकृतम्–य. ब. न. शा. मुद्रा.

अद्य प्रभृति भूता[1]नामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥५६॥

१. मर्त्या०–अ ना.

अद्य प्रभृतीत्यादि ॥ [अद्य प्रभृति] इत आरभ्य [भूतानां शुद्धये अधिगम्यः अस्मि] जनाः पापापनुत्तये[1] मां द्रष्टुमायास्यन्ति । यस्मात् अर्हद्भिः[2] [अध्यासितम्] आसेवितं तत् तीर्थं [प्रचक्षते] आहुः । भवदागमनाद्धि तीर्थीभूतोऽहम् ॥५६॥

१ पापमुक्तये–य. ल.  २ 'विद्वद्भिः'–अधा.–य.ल.व शा. मुद्रा.

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥५७॥

अवैमि पूतमित्यादि ॥ हे [द्विजोत्तमाः] मुनीशाः[1] [द्वयेन] द्वयेन एव अहम् आत्मानं [पूतं] पवित्रम् अवैमि जाने । येन द्वयेनेत्याह । [मूर्ध्नि] शिरसि [गङ्गाप्रपातेन] भागीरथीनिर्झरेण [वः] भवतां [धौतपादाम्भसा] क्षालितचरणोदकेन च । यादृशं गाङ्गमम्भः पवित्रं तादृशं भवत्पादोदकं च । पूज्यांघ्रियुगं[2] प्रक्षाल्य तज्जलं शीर्षे[3] यद्देदिव्यात्माः ॥५७॥

१. विप्रवराः–शा.  २. विप्राणा हि पादौ–१. य. व. ए. ना, मुद्रा.
३. शिरसि–न. य. ब ल

जङ्गमं प्रैष्यभावे वः[1] स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये द्वैरूप्यमपि[2] मे वपुः[3] ॥५८॥

१ प्रैष्याभवेन–स, प्रैष्यपक्षे व –च शा मुशा ब. ना २ द्विरूपमपि–स म ३ कृतम्–शा मुशा

जङ्गमं प्रैष्येत्यादि ॥ [मे] मम [द्वैरूप्यं] रूपद्वयम् अपि भवद्भिः विभक्तानुग्रहं विभागीकृतप्रसादं कृतम्। तथा हि जङ्गमं यन्मे[1] रूपं तद् वः युष्माकं [प्रैष्यभावे] दासकर्मणि । स्थावरमपि [चरणाङ्कित] युष्मत् पाद-मुद्राचिह्नितम् । अत्यर्थं गच्छतीति जङ्गमम् । 'नुगतोऽनुनासिकान्तस्य' [पा० सू० ७-४-८५]। प्रेषणीय प्रैष्य । द्वे एव रूपे द्वैरूप्यम् ॥५८॥

१ जङ्गमं मे–थ व ल न. शा मुशा

भवत्संभावनोत्थाय परितोषाय मूर्छते ।
अपि[1] व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥५९॥

१ अभि०–स ब. ना

भवत्सम्भावनेत्यादि ॥ [भवत्सम्भावनोत्थाय] युष्मदादरोत्पन्नाय मूर्छते वर्धमानाय परितोषाय प्रहर्षाय [मे] अङ्गानि मम व्याप्तदिगन्तानि अपि न प्रभवन्ति न समर्थानि। तं वोढुं न शक्नुवन्तीत्यर्थः । इति परितोषस्य बाहुल्यकथनम् । परितोषाय न प्रभवन्तीत्यलमर्थत्वाच्चतुर्थी ॥५९॥

न केवलं दरीसंस्थं भास्वता दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥६०॥

न केवलमित्यादि ॥ [वः] भवतां [भास्वता] दीप्तिमता दर्शनेन न केवलं [दरीसंस्थं] गुहासंस्थं तम[1] नूनं यावद् [रजस] रजोगुणात् अपि परं मोहाख्यम् [अन्तर्गत] हृत्स्थम् अपि अपास्तम् । भवदालोकनेन ह्यहं निर्मोहः संवृत्तः ॥६०॥

१ 'मम'–अवा –व ना मुना

इदानीमागमनप्रयोजनं भक्त्या[1] विपृच्छिषुराह–

कर्तव्यं वो न पश्यामि स्याच्चेत् किं नोपपद्यते[2] ।
मन्ये[3] मत्पावनायैव प्रस्थानं भवतामिदम्[4] ॥६१॥

१ मङ्गपतरेण०-व शा मुशा २ नोपदिश्यत-स ३ शङ्के-अ ना चा ४ ०मिह-ण स

कर्तव्य वो नेत्यादि ॥ अस्मत्सकाशे तपस्वित्वाद् [वः] भवतां [कर्तव्य] प्रयोजनं [न पश्यामि] नेक्षे । अथ चेत् सम्भवेत् तत् किं महाप्रभावत्वात्स्वत एव न [उपपद्यते] घटते । ये[1] किल सस्पृहास्तेषामन्यायत्त कार्यं न तु निःस्पृहाणाम्[1] । ततश्च [मन्ये] जाने [मत्पावनाय] मत्पवित्रीकरणाय एव [भवतां] युष्माकम् इद [प्रस्थानम] आगमनम् ॥६१॥

१ १ 'ये किल ... निःस्पृहाणाम्'-नास्ति-ब व ल न शा मुशा

तथापि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ॥६२॥

तथापि तावदित्यादि ॥ यद्यपि वः सर्वं स्वयमेव सम्पद्यते तथापि कुत्राऽपि कार्ये [मे] मम[1] [आज्ञाम्] आदेशं [दातुम्] अर्हथ दद्य[2] । [हि] यस्माद् ये किङ्करा भृत्यास्ते प्रभविष्णुषु विनियोगप्रसादाः स्वाम्याज्ञैव तेषामनुग्रहः । प्रभविष्णुषु स्थितो यो विनियोग इति सप्तम्यत्र याचकीया[3] ॥६२॥

१ मह्यम-शा मुशा २ दद्ध्वम-ब ब न-शा मुशा ३ याचकी-कार्या-ना मुशा

एते वयममी दारा कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यं[1]मनास्था बाह्यवस्तुषु ॥६३॥

१. यनार्थिनो यूयम०-स. ०र्थम०-शा. मुशा.

एते वयमित्यादि ॥ किं बहुना रचितेन । इमे वय दारा अपि एते [कुलजीवित] कुलजीवितनिभा इयम् अपि कन्या । [ब्रूत] कथयत एतेषा मध्याद् भवतां येन [कार्यं] प्रयोजनम् । भूहिरण्यादिष किमिति अपह्नुतम्,

घराक्रमि[३]त्याह । यस्मात् [बाह्यवस्तुषु] बहिरङ्गेषु भूहिरण्यादिषु वस्तु॰ अनास्था अनादरः । आत्मपुत्रकलत्रमपि यो ददाति तस्य धनेऽपि इव बहुमान॰ ॥६३॥

१ किमिति गोपितमि०–ब व ल न शा मुशा,

इत्यूचि[१]वास्तमेवार्थं दरी[२]मुखविसर्पिणा ।
द्विरिव प्रतिशब्देन व्याजहार हिमालयः[३] ॥६४॥

१ इत्युक्त०–म वा   २ गुहा –म   ३ हिमाचल॰–स

इत्यूचिवास्तमित्यादि ॥ [इति] इत्थं [ऊचिवान्] उक्तमुक्तवान् [हिमालय] नगनाथ [दरीमुखविसर्पिणा] कन्दराविवरप्रसर्पिणा [प्रतिशब्देन] प्रतिध्वनिना तम् एव अर्थं [द्वि] पुनर्निश्चयार्थं [व्याजहार] अभाषत इव ।[१] अन्योऽपि य किल निश्चयपूर्वं ददाति स आदरेण वारवार निवेदयतीति[१] ॥६४॥

१ १ अन्योऽपि. ...निवेदयतीति'–नास्ति–ब य ल शा. मुशा

अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।
ऋषयश्चोदयामासुः[१] प्रत्युवाच स भूधरम् ॥६५॥

१ नोदयामासु–म , प्रेरयामासु–स

अथाङ्गिरसमित्यादि ॥ [अथ] तत [ऋषय] मुनय अंगिरसम् ऋषि [चोदयामासु] अचूचुदन् । यत उदाहरणवस्तुषु प्रत्युत्तरप्रकारेषु अग्रण्य प्रवीणम् । स अङ्गिरा [भूध॰] नगाधिप [प्रत्युवाच] प्रतीपम॰ वत्[१] । उदाह्रियते कथ्यते इत्युदाहरण तच्च तद्वस्तूदाहरणवस्तु ॥६५॥

१ अगदन–ब ब ल शा मुशा

किमब्रवीदित्याह—

उपपन्नमिदं सर्वमतः परमपि त्वयि ।
मनसः शिखराणां च सदृशी ते समुन्नतिः ॥६६॥

उपपन्नमित्यादि ॥ 'एते वयं' [कुमार॰ ६–६२] इत्यादिक' यत् त्वयोक्तमेतदखिलं अत वा परम् अपरम् अपि अधिकमपि त्वयि उपपन्न

सुघटम् । यतः [शिखराणाम्] शिखराणि [सदृशी] इव [ते] तव [मनस] मन अपि [समुन्नति] उन्नतम् उदारम् । महाशयाना[2] किमिव[3] दुष्करम् ॥६६॥

१ इत्यादि व ब शा मुशा     २ महाशयस्य हि–व ब. शा. मुशा
३ किम–व ब न

स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथा हि ते ।
चराचराणां भूतानां कुक्षिराधारतां गतः ॥६७॥

स्थानेत्वामित्यादि ॥ व्यासादयो [त्वा] भवन्त स्थावरात्मानं विष्णुं वा यद् आहु[1] । 'स्थावराणां हिमालय ' [भ०गी० १०-२५] इति । यतस्तव कुक्षि उदर चराचराणां भूतानाम् [आधारताम्] आधारत्व[2] गत । सर्वे हि सत्त्वा स्थावरजङ्गमाश्च त्वन्मध्ये निवसन्ति । विष्णुरपि जगन्निवास इति सुप्रतीतम् ।६७॥

१ वदन्ति–ब ब ल न शा मुशा     २ आधारताम् व शा मुशा

गामधास्यत्कथं नागो मृणालमृदुभिः[1] फणैः ।
आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत् ॥६८॥

१ ०सदृशैः–शा ब ना शा मुशा

गामधास्यदित्यादि ॥ नाग शेषाहि [मृणालमृदुभि ] बिससुकुमारै [फणै ] शिरोभि गां भुवं कथम् अधास्यत् बिभ्रयात्, यदि आ रसातल मूलात् पातालपर्यन्तं त्वम् एनां न अवालम्बिष्यथा नाग्रहीष्यथा[1] । भवत्सहायकेन[2] हि नागराजो[3] मही[4]मुद्धोढुं शक्नोतीत्यर्थ । 'अधास्यत्' इति क्रियातिपत्त्यभावाल्लृङ्योगश्चिन्त्य ।६८॥

१ नाग्रहीष्ठा–व ब न     २ साहाय्येन–न     ३ शेष –व ब
४ अवनिम–व ब शा मुशा

अच्छिन्नामलसंतानाः समुद्रोर्म्यनिवारिताः ।
पुनन्ति लोकं[1] पुण्यत्वात्कीर्तयः सरितश्च ते ॥६९॥

अच्छिन्नामलेत्यादि ॥ [ते] त्वदीया कीर्तय सरित च पुण्यत्वात् लोकं पुनन्ति । कीदृश्य [अच्छिन्नामलसंताना ] अच्छिन्नोऽत्रुटितोऽमल

शुभ्रः सन्तानः प्रबन्धः प्रवाहश्च यासाम् । [समुद्रोर्म्यनिवारिता] अब्धिकल्लोलैरप्यनिषिद्धप्रसराः उभयेऽपि ॥६९॥

यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः[1] ।
प्रभवेण[2] द्वितीयेन तथैवोच्छिरसा त्वया[3] ॥७०॥

१ पादेन परमेष्ठिना-अ ना    २ प्रभवेन—स प्रथमेन-अना
३ ०वोच्छिरसि त्वयि-स ना

यथैवेत्यादि ॥ परमेष्ठिनो विष्णोः पादेन प्रभवेण जनकेन सुरसरित् यथैव श्लाघ्यते तथैवोन्नतकंधरेण भवतापि । हिमवतो विष्णुपदी प्रभवति । हरिचरणाच्च भुवनत्रयाक्रमणकाले निर्यातेत्यागमः ॥७०॥

तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।
त्रिविक्रमोद्यतस्यासीत्स तु स्वाभाविकस्तव[1] ॥७१॥

१ ०स्तथा-चा

तिर्यगूर्ध्वमित्यादि ॥ हरेः विष्णोः [व्यापक] सर्वव्यापी यो महिमा अभूत् स त्रिविक्रमोद्यतस्य भुवनत्रयाक्रमणस्य सतो न तु नित्यम् । तव तु असौ व्यापी स्वाभाविक सहज[1] इति विशेषकथनम् । त्रयो विक्रमाः पादन्यासाः समाहृतास्त्रिविक्रमम् ॥७१॥

१ स्वाभाविक -अ पा -स न, चा मुद्रा

यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया[1] ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥७२॥

१ पदमास्थाय तस्थुषा-स

यज्ञभागभुजामित्यादि ॥ [यज्ञभागभुजा] देवानां मध्ये यज्ञांश-भोजित्वेन त्वया पदम् अवस्थानम् आतस्थुषा कृतवता [सुमेरोः] सुरशि-खरिणः [हिरण्मयं] सौवर्णमपि [उच्चं] उच्चमपि च [शृङ्गं] शिखरं वितथीकृत निष्फलं विहितम्, असत्यं सम्पादितम् । न ह्यसौ यज्ञांगभुक्। अतश्च सौवर्णेनापि[1] किं तेन क्रियते ॥७२॥

१ अमर०-चा मुद्रा २ अधिक-च

काठिन्यं स्थावरे काये भवता सर्वमर्पितम् ।
इदं तु ते भक्तिनम्रमर्हदा[1]राधनं[2] वपुः ॥७३॥

१. सतामा०–म. २. महोदारतरं–चा.

काठिन्यमित्यादि ॥ मृदुकर्कशभेदेन तव द्विरूपम्[1] । तत्र स्थावरे [काये] देहे शिलामये [भवता] त्वया[2] काठिन्यम् [अर्पितं] निहितम्[3] । इदं तु जङ्गमं रूपं तव मृदुत्वात् [भक्तिनम्रं] भक्त्या नम्रं पेशलम् । अत एव [अर्हदाराधनम्] अर्हतां पूज्यानामाराधनं सेवनम् । तत्यत्र स्वच्छता ॥७३॥

१. द्वैरूप्यम्–व. ब. शा. मुद्रा. २. 'अखिलम्'–अपा.–व. ब. शा. मुद्रा
३. निहितम्–शा. मुद्रा.

तदागमनकार्यं नः शृणु कार्यं तवैव तत् ।
श्रेयसामुपदेशात्तु वयमप्यं[1]शभागिनः ॥७४॥

१. ०मप्यत्रा०–म. अ. ना.

तदागमनेत्यादि ॥ तद् इत्युपसंहारे । अलं ते महिमसंकीर्तनेन । [नः] अस्माकं तावद् [आगमनकार्यम्] आगमनकृत्यं [शृणु] आकर्णय । कार्यं तु[1] तव एव । न तु नः । किन्तु [श्रेयसाम् उपदेशात्] श्रेयोमार्गनिरूपणात् वयम् अपि अंशभागिनः शुभफलासादिनः । तेनास्माकमपि तत्कार्यमेवेति भावः[2] ॥७४॥

१. तदनार्थनीयत्वात्–व. ब. न. शा. मुद्रा. २. इत्यर्थः–. व. न. शा मुद्रा

अणिमादिगुणोत्थान[1]मस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः ॥७५॥

कल्पिता[2]न्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः ।
यस्येदं[3] तन्यते[4] विश्वं[5]धुर्यैर्यानमिवाध्वनि ॥७६॥

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥७७॥

स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम्[6] ।
वृणुते वरदः शम्भुरस्मत्संक्रामितैः पदैः ॥७८॥

१. ०गुणोपेत०–म स २. कलित०–म. ३. येनेद–म. ४. ध्रियते–म. स. तन्यते–चा ५. व्यक्त–अ. ना ६ कर्मण.–स. अ. ना' शा, मुना

अणिमादीत्यादि ॥ [ ७५ ] स [ ते ] तव वरदः शम्भुः [अस्मत् संक्रामितैः] अस्मासु निहितैः पदैः वचोभिः साक्षात् [दुहितरं] सुतां वृणुते अर्थयते ।[1] को सावित्याह । यः एवंविधः ईश्वरः इति शब्दम् उच्चः व्यापकं सार्धचन्द्रं बिभर्ति । शशिखण्डमपि वहतीत्यर्थः । कीदृशं शब्दम् । [अणिमादिगुणोत्थान] अणिमादीनां अणिमा–महिमा–लघिमा–गरिमा–ईशित्व–वशित्व–प्राकाम्य–यथाकामावसायितानां[2] गुणानामुत्थानं प्रभवम् । अणिमादिगुणयुक्तो हीश्वर उच्यते । उत्तिष्ठन्त्यस्मादित्युत्थानम् । [अस्पृष्टपुरुषान्तरम् ] अस्पृष्टमगतं[3] पुरुषान्तरमन्यः पुरुषः आत्मा येन । 'पुरुषविशेषो हीश्वरः'[4] । उच्चैः उन्नत महाप्रभावं वा । कल्पिताम्योन्येत्यादि॥ [७६] यस्य सम्बन्धिभिः [पृथिव्यादिभिरात्मभिः] पृथ्वप्तेजोवाय्वाकाशयजमानसोमार्कात्ममूर्तिभिः इदं [विश्वं] व्यक्तं महाण्डं तन्यते प्रसार्यते सम्पाद्यते । धुर्यैः अश्वैः [अध्वनि] मार्गे यानः इव रथ इव । कीदृशैस्तैः । [कल्पितान्योन्यसामर्थ्यैः] कल्पितं समर्थितमन्योन्यं सामर्थ्यं शक्त्याधानं यैः धृतिसंग्रहपङ्क्तिव्यूहावकाशवृत्तिभिः परस्पराहितशक्तिभिः किल ते भुवनानि निर्मातुं प्रभवन्ति । धुर्या अप्यन्योन्य शक्तिमुपजीवन्तो यानं तन्त्रयन्ति । योगिनः इत्यादि [७७] य देवं [ योगिनः ] अध्यात्मविदः [ क्षेत्राभ्यन्तरवर्तिनं ] शरीरान्तरस्थं परमात्माख्यं विचिन्वन्ति गवेषयन्ति । [यस्य] यदीयं पदमनावृत्तिभयमाहुः । अविद्यमानमावृत्तिभयं संसारप्राप्तेर्यस्य । न हि तत्स्थानमासाद्य पुनर्जायते । स त इत्यादि [७८] तथा विश्वस्य जगतः कर्मणां शुभाशुभानां साक्षी द्रष्टा इत्यन्वयितव्यात्[1] ।

वरदः अभीष्टार्थदाता। स एवंविधः [शंभुः] महेश्वरः साक्षात् आत्मार्थं [ते] तव दुहितरम् उमां [वृणुते] अर्थयते ॥७८॥ चतुर्भिः कुलकम्[७]।

१. प्रार्थयते–व. व. शा. मुशा. २. ०प्राकाम्येशित्ववशित्वाना–शा. मुशा. ३. अविषयीकृतम्–व. व. शा. मुशा. ४ द्र यो०सू० १–२४ ५. शक्तया-धारो–शा. मुशा. ६. हृस्वत्वात्–व. ७ चतुर्भि कलापकम्' इति समीचीन पाठ।, कलापकम्–शा. मुशा.

वरगुणान् श्रावयित्वा सम्यग्योजयन्नाह–

तमर्थमिव भारत्या सुतया योक्तुमर्हसि।
अशोच्या हि पितुः कन्या सद्भर्त्रे[१] प्रतिपादिता ॥७९॥

१. सद्भर्तृ०–म. म. ना.

तमर्थमित्यादि ॥ अतश्च तं शम्भुं त्वं [सुतया] दुहित्रा योक्तुं घटयितुम् अर्हसि। अर्थम् इव भारत्या। वागर्थौ हि नित्यसम्बद्धावन्योन्यमव्यभिचारात्। तदाने च तवैव गुणः यस्मात् सद्भर्त्रे साधवे पत्ये [प्रतिपादिता] निसृष्टा [कन्या] कुमारी [पितुः] पित्रोः अशोच्या भवति ॥७९॥

गुणान्तरमप्याह–

यावन्त्येतानि[१] भूतानि स्थावराणि चराणि च।
मातरं कल्पयन्त्वेनामीशो हि जगतः पिता ॥८०॥

१ यावद्द्दयानि–अ. ना. शा. मुशा.

यावन्तीत्यादि ॥ त्वमस्मै दुहितां देहि यावत् एनां गौरीं यानि[१] भूतानि [स्थावराणि च] चराणि च मातरं कल्पयन्तु। तदानेन कथमसौ जनित्री[२] सम्पद्यते इत्याह। [हि] यस्मात् ईशः महादेवः [जगतः]

१. द्दयानि–शा मुशा. २ जगज्जननी–व जगज्जनित्री–ब. शा मुशा

जगतां पिता सृष्टिकर्तृत्वात् योगक्षेमवहनाच्च[३] । पितुर्या भार्या सा मातेत्युच्यते ।८०॥

३ ०क्षेमोद्वहनाच्च–मुद्रा.

प्रणम्य सिति[१]कण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥८१॥

१. सित०.–म. स. शा. मुद्रा.

प्रणम्य सितीत्यादि ॥ अपि च विबुधाः देवाः आह्निकप्रक्रियायां[१] [सितिकण्ठाय] नीलगलं प्रणम्य अस्याः अपि गौर्याः [चूडामणिमरीचिभिः] शिरोरत्नरश्मिभिः [चरणौ] पादौ रञ्जयन्तु चित्रयन्तु । प्रणम्य सितिकण्ठाय 'इत्युपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीयाया न्याय्यत्वात् । 'स्वयम्भुवे नमस्कृत्य' इत्यादिप्रयोगदर्शनाच्चतुर्थीप्रयोगः । ॥८१॥

१. ०प्रक्रियया–मुद्रा. शा.

उमा वधूर्भवान् दाता याचितार इमे वयम् ।
वरः शंभुरलं ह्येष त्वत्कुलो[१]द्भूतये विधिः ॥८२॥

१ त्वत्कुल०–स.

उमा वधूरित्यादि ॥ [त्वत्कुलोद्भूतये] तव वंशस्योद्भूतयेऽभ्युदयाय विधिः भयम् अलं पर्याप्तः । कोऽसावित्याह । उमा वधूः गौरी दीयते त्वं च दाता वरः [शम्भुः] महेश्वरो वयं च याचितार इति । अनुद्योतिता[१] अपि गुणाः ध्वनितपदत्वा[२]त्प्रतीयन्ते । [यथा] 'रामोऽस्मि सर्वं सहे'[३] [हनुमन्नाटकम् ५–७] इति ॥८२॥

१. अनुद्घाटिताः–थ न शा मुद्रा. २. ध्वनिपदत्वात्–म. थ न. शा मुद्रा.

अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।
सुतासम्बन्धविधिना भव विश्वगुरोर्गुरुः ॥८३॥

अस्तोतुरित्यादि ॥ सुतासम्बन्धविधिना गौरीं दत्त्वा [विश्वगुरोः] शम्भोरपि गुरुः भव अतिपूज्यः सम्पद्यस्व । श्वशुरो हि पितृनिभः ।

कीदृशस्य । सर्वोत्कृष्टत्वात् स्तूयमानस्य वन्द्यस्य च । कदाचित्सोऽप्यन्यान् स्तुयात् प्रणमेच्चेदित्याह । अस्तोतुः [अनन्यवन्दिनः] अन्यांश्चावन्दितु[1] ॥८३॥

१ 'तत उत्कृष्टतरस्याभावात'–अधा–व. ब न शा मुशा

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥८४॥

एव वादिनीत्यादि ॥ पार्वती [एवम्] इत्थ [वादिनि] ब्रुवाणे [देवर्षौ] अङ्गिरसि [पितुः] हिमवत् [पार्श्वे] निकटे त्रपया [अधोमुखी] भवनता सती [लीलाकमलपत्राणि] विलासनलिनपलाशानि [गणयामास] अजीगणदिति लज्जाविर्भावेना[1]भिलाषातिशयसूचनम् ॥८४॥

१ लज्जाविनिह्नुवेन० शा. मुशा.

शैलः संपूर्णकामोऽपि मेनामुखमवैक्षत[1] ।
प्रायेण गृहिणीनेत्राः कन्यार्थे हि[2] कुटुम्बिनः ॥८५॥

१ उदैक्षत–म. स २. कन्यार्थेषु–म स अ ना

शैल इत्यादि ॥ [शैलः] हिमवान् अपि [संपूर्णकामः] संपन्न[1]मनोरथ अपि किमत्र वक्तव्यमिति [मेनामुखं] पत्नीवक्त्रम् [अवैक्षत] आलुलोके । [हि] यस्मात् ये कुटुम्बिनः गृहस्थास्ते [कन्यार्थे] कन्याप्रयोजने प्रायेण [गृहिणीनेत्राः] भार्याचक्षुषः । तस्मै[2] यद्रोचते तत्कुर्वन्तीत्यर्थः ॥८५॥

१ सपूर्ण०–व. ब शा मुशा २ तस्यै–शा मुशा

मेने मेनाऽपि तत्सर्वं पत्युः कार्यं समी[1]प्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥८६॥[2]

१ कार्यमभी०–म २. मुद्रितशारदायामयं श्लोकः नास्ति ।

इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः ।
आददे वचसामन्ते मङ्गलालङ्कृतां सुताम् ॥८७॥[3]

३. ८६–शा मुद्रा ब ना

मेने मेनापीत्यादि ॥ [८६] इदमत्रेत्यादि ॥ [८७] [मेना अपि] मेने[1] अङ्गीकार । [पतिव्रताः] [अव्यभिचारिण्यः] च अनिषेधिका भवन्ति । पत्युः [समीप्सितं] वाञ्छितं [कार्यं] न निषेधयन्ति, यदेव रोचते भर्तुस्तत्कुर्वन्तीत्यर्थः[1] । ततः [इदं] कन्यादानमेव उत्तरं न्याय्यं न त्वन्यदित्यसौ [बुद्ध्या] धिया [विमृश्य निश्चित्य प्रकृतार्थोपयोगि किञ्चिदुक्त्वा [वचसाम् अन्ते] वचनान्ते [मङ्गलालङ्कृतां] मङ्गलाभरणभूषितां तां [सुतां] तनयाम् [आददे] अग्रहीत् ॥ [८६] [८७] ॥ युग्मम् ।

१ १ 'मेने इत्यय'–नास्ति–व ब ल न शा मुद्रा

एहि शार्वपर्णे[1] वत्से भिक्षा त्वं[2] परिकल्पिता ।
अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥८८॥[3]

एतावदुक्त्वा तनयां मुनी[4]नाह महीधरः ।
इयं नमति वः सर्वा त्रिलोचनवधूरिति ॥८९॥[5]

१. धिश्वात्मने–म. सर्वात्मना–शू शार्वपर्ण–शा मुद्रा २. भिक्षासि–म. ना
३. ८७– ब ना शा मुद्रा ४ Oनृषीन्–म ५ ८८–शा मुद्रा

एहि शार्वेत्यादि ॥ [८८] एतावदुक्त्वा तनयामित्यादि ॥ [८९] हे [शार्वपर्णे] [वत्से] पुत्रि [एहि] आगच्छ इत्यर्थं त्वं भिक्षा मया परिकल्पिता । [अर्थिनः] मार्गकाश्च [मुनयः] सप्तर्षयोऽतश्च [गृहमेधिफलं] गृहस्थफलं मया अद्य प्राप्तम् । गृहमेधिना हि प्राप्तातिथये भिक्षा

देया[1] । [एतावत्] इत्थं तां [तनयां] पुत्रीम् [उक्त्वा] अभिधाय मुनीन्[2] [आह] अवादीत् । इयं [त्रिलोचनवधूः] शर्वपत्नी [वः] युष्मान् [सर्वान्] अखिलान् [नमति] प्रणमतीति दानं ध्वनितम् । अर्प्यतेऽस्मै इत्यर्पणम् । 'कृत्यल्युटो बहुलम्' [पा० सू० ३-३-११३] शर्वोऽर्पणो यस्याः सा शर्वार्पणा तस्याः संबोधनं क्रियते[3] । अथ ईश्वरार्थं निमित्ते गृहं वेश्म दाराश्च दारैर्मेधन्ते इति गृहमेधिनो गृहस्थाः। अर्थ्यन्ते [इति] अर्थिनः । [८८] [८९] । युग्मम् ।

१ गुणवते कन्या देया—धा. मुद्रा व ब ल  २ सत्पयोन—व. व. नं. धा. मुद्रा.  ३. 'तस्याः संबोधनं क्रियते'—नास्ति—धा. मुद्रा.

ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥९०॥[1]

१. ०भिर्वर्धया०—धा. २-८९—धा. मुद्रा. अ.ना.

ईप्सितार्थेत्यादि ॥ तत [ते] मुनयः [ईप्सितार्थक्रियोदारम्] अभिलषितवस्तुसम्पत्तिमहार्थं [गिरेः वचः] हिमवद्वचनम् अभिनन्द्य अनुमोद्य प्रणमन्तीम्[1] अम्बिकां गौरीम् आशीर्भिः एधयामासुः अवीवृधन् । कीदृशीभिः । [पुरःपाकाभिः] पुरोऽग्रे पाकः फलं भर्तृवाल्लभ्यलक्षणं यासां ताभिः, पुरः पाकाभिर्निकटाभ्युदयाभिः ।९०॥

१. 'प्रणमन्तीम्' नास्ति—अ. ब. न. धा. मुद्रा

तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥९१॥[1]

१. ९०—धा. मुद्रा. अ ना.

तां प्रणामेत्यादि ॥ भर्तृवार्तया [लज्जमानां] त्रपमाणां [ताम्] अम्बिकाम् [अरुन्धती] वसिष्ठपत्नी [अङ्कम्] आरोपयामास उत्सङ्गे जग्राह ।

[प्रणामादरस्रस्तजाम्बूनदवतंसकाम्] प्रणामादरेण पादवन्दनप्रयत्नेन स्रस्त पतितो हेमकर्णपूरो यस्यास्ताम् ॥९१॥

१ कनकक०—व ब ल व शा मुसा

तन्मातरं चाश्रुमुखीं दुहितृस्नेहविक्लवाम् ।
वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः ॥९२॥[1]

१ ९१—ना मुना अ ना

तन्मातरमित्यादि ॥ तथा [दुहितृस्नेहविक्लवां] सुतास्नेहव्याकुलत्वात् [अश्रुमुखीं] रुदन्तीं [तन्मातरं] मेनामसौ अनन्यपूर्वस्य अकृतदारान्तरस्य [वरस्य] जामातुः गुणैः [विशोकां] विगतदुःखाम् अकरोत् । 'सर्वेश्वरः सर्वशक्तिर्वत्सल'श्चैते जामाता सम्पन्न । तत्र प्रहुयस्थाने कः शोकावसरः' इति । अविद्यमाना अन्या पूर्वं यस्य स अनन्यपूर्वम् इति सपत्नीशङ्कापनोदं परं वचनमकृतदारान्तरस्येत्यर्थः[2] ॥९२॥

१ 'भक्तवत्सल' अपा—व ब ल न शा मुना २ सुस्मुदेति समास — अपा —व ब ल न शा मुना

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।
ते त्र्यहादूर्ध्वमाख्याय चेलुश्चीरपरिग्रहाः ॥९३॥[1]

१ चेरुश्ची०—भ स २ ९२—ना मुना अ ना

वैवाहिकीमित्यादि ॥ तत ते मुनयः गमनायोत्तस्थुः । तत्क्षणं हरबन्धुना हिमाचलेन हरसुरेण वैवाहिकीं तिथिं पृष्टाः कदा विवाहोऽस्त्विति तेऽपि त्र्यहादूर्ध्वं परं चतुर्थेऽहनीति [आख्याय] उक्त्वा चेलुः । [चीरपरिग्रहा] चीरं वल्कलमेव परिग्रहो धनं येषामिति निःस्पृहत्वकथनम् । प्रायेण हि कन्याविवाहमेलका सस्पृहा भवन्ति । विवाहः प्रयोजनं यस्याः सा ताम् वैवाहिकीम् ॥९३॥

१ चतुर्थे—नास्ति ना मुना

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य[1] च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥९४॥

१ प्राप्य–म न २ ९३–शा मुना अ ना

ते हिमालयमित्यादि ॥ तत ते मुनय [हिमालयम्] आद्रिनाथम् आमन्त्र्य आपृच्छ्य[1] [पुन] भूय [शूलिन] मय [प्रेक्ष्य] ददृशिरे । गौरीलाभस्वरूपम् अर्थं सिद्धम् [अस्मै] कथयित्वा [तद्विसृष्ण] तेनेश्वरेण[2] विसर्जिता खम् उद्ययु । दिवमगमन्निति लाघवेन कथोपसहार ॥९४॥

१ व्याकृत्य–ना मुशा २ तेन–ब ब

पशुपतिरपि तान्यहानि कृच्छ्रा-
दगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्यु-
र्विभुमपि तं यदमी स्पृशन्ति भावाः ॥९५॥[1]

१ ९४–शा मुना अ ना

पशुपतिरित्यादि ॥ मुनुय स्वस्थान गता । [पशुपति अपि] भगवानपि [अद्रितनयासमागमोत्क ]पार्वतीसङ्गमोत्कण्ठित तानि त्रीणि अहानि दिनानि कृच्छ्रात् क्लेशेन अगमयत् । तेषा पतिरिति यद्येव कथमसौ रागीत्याह । कम् अपरम् अवशम् अजितेन्द्रियम् [अमी] एते भावा पदार्था न [विप्रकुर्यु ] विकारिण कुयुर[1]पि तु सवमपि । यस्मात् विभुम् अपि वशिनमपि स्पृशन्ति नात्यस्मदादीना किमप्युपालम्भस्थानमिति कवे कालिदासस्य स्वाभिप्रायोक्ति , विलासित्वात्[1] । पुष्पिताग्रावृत्तमिति भद्रम् ॥९५॥

१–१ अपि विलासित्वात–नास्ति–ब ब ल न शा मुशा

इति कुमारसंभवपञ्जिकायामुमाप्रदानो नाम षष्ठः सर्गः ॥४॥[1]

१. इति कुमारसम्भवे महाकाव्ये कालिदासकृतायाम् टीकायामानन्ददेवायनिवल्लभदेवविरचितायां षष्ठ सर्गः समाप्तः ।—त्र. व ...कुमारसम्भवपञ्जिकायां.. म इत्यानन्ददेवात्मजवल्लभविरचितायां कुमारसम्भवलघुटीकायां उद्धृतसारायां षष्ठ सर्ग ।–ल न इत्यानन्ददेवात्मजवल्लभदेवविरचितायां कुमारसम्भवटीकायां षष्ठ सर्गः ।–मुद्रा. इति आनन्ददेवायनिवल्लभविरचितायां कुमारसम्भवटीकायां षष्ठ सर्गः ।–द्दा.

॥ श्रीः ॥

आनन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपञ्जिकायां

# सप्तमः सर्गः ।

अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥१॥

अथौषधीनामित्यादि ॥ अथ अनन्तरं [हिमवान्] नगाधिपः [सुताया] दुहितुः विवाहदीक्षाविधिं गोदानादिव्रतकरणम्[1] अन्वतिष्ठत् सम्पादयामास । कदा । ओषधीनाम् अधिपस्य शशिनि वृद्धौ शुक्लपक्षे तिथौ च [जामित्रगुणान्वितायाम्[2]] जामित्रशब्दोऽनौपचारिकं प्रशस्यतां लक्षयति । सुरपतो हि लग्नात् सप्तमं स्थानं जामित्रम् । तच्च यदानुकूलग्रहयुक्तं तदा शोभनं भवेत् । [समेतबन्धुः] मिलित[3]स्वजन इत्युत्सवधर्मः[4] ॥१॥

१ गोदानादिकं व्रतविधानम्—न ल गोदानादिकं व्रतकरणम्—धा मुद्रा॰ २ ‘जामित्रगुणेन लग्नाद्वैशयेनान्वितायां युक्तायां प्रशस्तायामित्यर्थः’—अना॰ —घ ल धा मुद्रा ३ घटित॰—न धा मुद्रा ४ ‘धर्मोऽस्मिन् उत्पातयोः धृतम्’—अना —ब

वैवाहिकैः कौतुकसंविधानैर्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।
आसीत्पुरं सानुमतोऽनुरागादन्तःपुरं चैककुलोपमेयम् ॥२॥

वैवाहिकैरित्यादि ॥ सानुमतः हिमवतः पुरम् अन्तःपुरं च एककुलोपमेयम् अभिन्नवंशसदृशम् [आसीत्] अभवत् । समस्तनगरमन्तःपुरं च स्वजनवत् आयत इत्यर्थः । यत अनुरागात् प्रीत्या [वैवाहिकैः] विवाहसम्भवैः [कौतुकसंविधानैः] माङ्गल्यप्रकारैः [गृहे गृहे] प्रतिवेश्म

[द्यप्रपुरन्ध्रिवर्गम्] आसन्नक्षणाः[1] पुरन्ध्रिवर्गा अङ्गनापूगा यत्र पु यन्मङ्गलार्थं सुधालेपनादिकं क्रियते तत्कौतुकम्[2] ॥ २ ॥

१ असकृत्क्षणा –भ. ब. ल. अक्षणाः– मुद्रा. २ 'मङ्गलं विवाहोत् –अपा.–शा.

संतानकाकीर्णमहापथं[1] तच्चीनांशुकैः कल्पितकेतुमालम् ।
भासा ज्वलत्काञ्चनतोरणानां[3] स्थानान्तरं स्वर्ग इवावभासे ॥३

१ ०चतुष्पथं–ल २. भासोज्ज्वलत्का०–म. ३. ०तोरणाङ्कं–अ. न

संतानकेत्यादि ॥ तत् स्थानान्तरं प्रदेशविशेषस्तदा [स्वर्ग स्वर्गवद् (अवभासे) रेजे । यतः [संतानकाकीर्णमहापथं] संतानका दिव्यकुसुमैराकीर्णो निर्भरो राजमार्गो[1] यत्र । [चीनांशुकैः] चीनं जैर्द्वाम्बरे [कल्पितकेतुमालं] रचितध्वजराजिर्यत्र । काञ्चनतोरणानां भासा दीप्त्या ज्वलत् भासमानम् । अन्यदन्यत्स्थानं[2] स्थानान्तरम्[3] ।

१. महापथः–ब. ल. शा. मुद्रा. २. अन्यत् स्थानम्–मुद्रा.
३. नानाविधमित्यर्थ.–शा.

एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य दृष्टेव मृतोत्थितेव ।
उपोढ[3]पाणिग्रहणेति पित्रोरुमा विशेषोच्छ्वसितं[4] बभूव ॥४॥

१. एकैव–म. चा. २. चिरेण–चा. मुद्रा. ३. आसन्न०
४. ०सिता–अ. ना.

एकैव सत्यामित्यादि ॥ उपोढपाणिग्रहणा निकटविवाहा इति हेतोः उमा गौरी [पित्रोः] मातापित्रोरेवंविधा स्नेहवशात् [बभूव] अभू किंविधा । [सत्यां] सत्सु अपि [पुत्रपंक्तौ] बहुषु अपत्येषु एकेव । अ तादृशस्नेहाभावात् । तथा सततसन्निहितापि चिरस्य दृष्टा इव उत्क त्वात् । जीवन्त्यपि मृतोत्थिता इव तथा विशेषोच्छ्वसितं[1] तदायत्तत्वा वितस्य । विरहसमये घनतरस्नेहाविर्भावादित्यमूढः । यदुक्त 'औत्सुक्यगर्भा भ्रमतीव दृष्टिः पर्याकुला क्वाऽपि मतिः प्रयाति । निरन्त प्रेमनिबन्धनं च वियोगकाले द्रवतीति[2] चेतः' ॥ ४ ॥

१. 'सातिशयजीवितम्'–अपा.–शा. मुद्रा. २. द्रवतीव–मुद्रा. ल.

अङ्काद्ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।
संबन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं[2] जगाम ॥५॥

१. मन्वि॰-म. चा. अ. ना.    २. ॰कायनता-मुद्रा.

अङ्काद्ययावित्यादि ॥ सा देवी बान्धवैः [उदीरिताशीः] उक्ताशीः सती [अङ्कात्] अङ्कम् उत्सङ्गादुत्सङ्गान्तरं [ययौ] तस्थौ[1]। [मण्डनात् मण्डनम्] एकेन चालंकरणे कृते तदैवान्यन्नीतं प्रसाधनान्तरम् [अन्वभुङ्क्त] निर्विवेश । तथा [गिरेः कुलस्य] गिरिकुलस्य स्नेहः [संबन्धभिन्नः][2] सम्बन्धवशाद् भिन्न. अपि अनेकरूपोऽपि [तदेकायतनं] तदेकाश्रयत्वं [जगाम] अयासीत् । सम्बन्धभेदाद्धि स्नेहो बहुप्रभेदस्तथा हि पुत्रेऽन्यादृशो भर्तरि दौहित्रे दुहितरि स्नुषायां सख्यां चाऽन्यादृश एव । न चास्ति सा प्रीतिर्या तदेकायतना । पुनस्तस्यां सकलजननेत्रसतत्कौमुदीभूतत्वात् सदा तदेकायतनप्रवृत्तेति वाक्यार्थः[3] ॥५॥

१. अधिनस्थौ-म. शा. मुद्रा.    २. 'तथा गिरिकुलस्य स्नेहः'-अपा. -च. शा. मुद्रा.    ३. 'यत्र चोपोढपाणि ग्रहणमेव कारणम् । सैवैकायतनं स्थानं यस्य स तदेकायतनस्तद्भावस्तदेकायतनता'-अपा.-च ल. शा. मुद्रा. 'आसन्नविवाहोत्सवत्वात्'-अपा.-शा.

मैत्रे मुहूर्ते शशलक्ष्मणेन[1] योगं गतासूत्तरफल्गुनीषु ।
तस्याः शरीरे प्रतिकर्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥६॥

१. ॰लाञ्छनेन-म. स. घ.

मैत्रे मुहूर्तेत्यादि ॥ ततः [तस्याः शरीरे] पार्वतीवपुषि [पतिपुत्रवत्यः] सभर्तृकाः पुत्रवत्यश्चाक्षयवत्साश्च [बन्धुस्त्रियः] स्वजनमहिलाः [प्रतिकर्म] प्रसाधनम् [चक्रुः] आरेभिरे । कदा । मैत्रे मुहूर्ते । अस्मिन्वधूवरयोगविनदशा प्रीतिर्भवतीति आहुर्ज्योतिर्विदः । शशलक्ष्मणेन[1] चन्द्रमसः [उत्तरफल्गुनीषु] उत्तरफल्गुनीनक्षत्रे योगं सम्बन्धं गतासु इत्यर्थः । शशिना हि योगे[2] तारकाणां नक्षत्रत्वम् । यद्वस्तु योऽस्तु सोऽस्तु[3] ॥६॥

१. ॰लाञ्छनेन-च.    २. योगेन-ग. न. च.    ३. 'मुहूर्ते मैत्रदैवत्ये'-अपा.-मुद्रा. 'अहोरात्रं त्रिंशन्मुहूर्तात्तत्र च उभयत्र घटिकासु वैराहिको मैत्राख्यो मुहूर्तः । तदि प्रशस्तम् ।'-अपा.-चा.

तदेवाभ्यङ्गादारभ्य शरीरप्रतिकर्माह—

सा गौरसिद्धार्थनिवेशवद्भिर्दूर्वाप्रवालैः प्रतिभिन्नरागम् ।
निर्नाभि[1] कौशेयमुपात्त[2]बाणमभ्यङ्गनेपथ्यमलंचकार ॥७॥

१. ०शोभम्–म थ ना  २. उन्नीवि०–अ ना  ३ ०मुपोढ०– शा

सा गौरेत्यादि ॥ [अभ्यङ्गनेपथ्यम्] अभ्यङ्गस्तैलपातन तत्र ... वेष सा देवी अलञ्चकार । न तु तेनाऽसावलङ्कृता इति सहजसुन्दर्योक्ति[1] । कीदृशीम् । [गौरसिद्धार्थनिवेशवद्भि] ... सितसर्षपाणा निवेशो रचना यत्र तै । दूर्वाप्रवालै शाद्वलाङ्कुरै प्रतिभिन्नराग विशेषितकान्ति । [निर्नाभिकौशेयम्] अविद्यमान नाभि कौशेयं जघनाम्बर यत्र । तदा हि तदपास्यते । यदि वा नाभिकौशेया त्रिष्कान्त भङ्क्त्वा बहिर्निर्गतमभ्यङ्गकाले तद्विरहकथनम् । वि या नाभिवियुक्त कौशेय यत्र । उपात्तबाण घृतसायकम् । पराविधौ हि लोकाचार ॥७॥

१ 'मण्डनम्'–अपा –ल व न  २ भूषितेऽप्यङ्गेनेसहजसुन्दर्योक्ति –शा मुगा
३ उपोढ०–शा मुद्रा

बभौ च संपर्कमुपेत्य बाला नवेन[1] दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने संधुक्ष्यमाणेव शशाङ्कलेखा ॥८॥

१ विवाह०–ह अ ना  २ ०रेखा–म अ ना

बभौ चेत्यादि ॥ तेन च नूतनेन विवाहदीक्षाविधिसायकेन [संपर्क] सश्लेषम् [उपेत्य] आसाद्य सा [बाला] वधू[1] बभौ शुशुभे । केव । [बहुलावसाने] कृष्णपक्षान्ते[2] [भानो करेण] रविरश्मिना सुषुम्णाख्येन संधुक्ष्यमाणा वर्धमाना शशाङ्कलेखा चन्द्रकला इव ॥८॥

१. 'उदयाच्चतुर्थे मुहूर्ते'–अपा –ल न  २ ०पक्षान्ते–शा मुगा

तां लोध्रकल्केन हृताङ्गतैलामाश्यानकालीयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं नार्यश्चतुष्काभिमुखीं व्यनैषुः ॥ ९ ॥

१ ०कल्केहृताङ्ग०–म. चा ना स  २. ०मुख व्यनैषु –म, मुखी व्यनैषु –चा.

तां रोध्रेत्यादि ॥ तत. ता स्नानार्थं [नार्यः] अविधवा [चतुष्काभिमुखीं] चतुष्कसम्मुखीम् [अनैषु] अनीयन्त। कीदृशीम्। रोध्रकल्केन रुक्षेण[1] हृताङ्गतैलाम् अपास्तदेहस्नेहाम् तथा [आश्यानकालीयरसाङ्गरागाम्] आश्यानेन परिम्लानेन कालीयरस एवानुलेपन यस्या। कुङ्कुमनिभ गन्धद्रव्य कालीयम्। तच्च स्नेहगन्धापासनाय लिप्यते[2]। तथा अभिषेकयोग्य स्नानकालानुरूप[3] वास अम्बरं वसानां परिदधतीम्। चतुष्कं वासवेश्म ॥९॥

१. लोध्रेन चूर्णेन–ल २ पात्यते–व शा. मुग्धा ३ स्नानानुरूपम्–व ल न शा मुग्धा

विन्यस्तवैदूर्यशिले च तस्मिन्नविद्धमुक्ताफलभक्तिचित्रे[1]।
आवर्जिताष्टापदकुम्भतोयैः सतूर्यमेनां स्नपयांबभूवुः ॥ १० ॥

१ ०आवद्ध०–म २ ०प्रतमंकलेपे–अ ना

विन्यस्तेत्यादि ॥ [तस्मिन्] तत्र चतुष्के [नार्यः] युवतय. सतूर्यं वादित्रान्वितम् एनां वधूं [स्नपयांबभूवुः] अस्नपयन्त। कीदृशे। स्नानभूमिभागार्थे [विन्यस्तवैदूर्यशिले] विन्यस्ता दत्ता वैदूर्यमणिशिला यत्र [अविद्धमुक्ताफलभक्तिचित्रे] अविद्धानामस्तानां[1] मुक्ताफलानां भक्त्या विच्छित्त्या चित्ररचिते[2]। नार्य कीदृश्य। [आवर्जिताष्टापदकुम्भतोयै.] आवर्जित क्षितमष्टापदकुम्भतोय कनकघटवारि याभि ॥ १०॥

१ ०मप्रोतानाम्–व न ० मप्रस्तानाम् –मुग्धा २ चित्रे रम्ये मनोज्ञे–ल न शा मग्धा ३ नष्टीकृतम्–अथा –न

सा मङ्गलस्नानविशुद्धगात्री गृहीतशुभ्रोद्गमनीयवस्त्रा।
निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥

१ ०दयुद्गम०–म स, ०अत्युद्ग–अ ना ०प्रयुद्ग–चा २ निर्वृत्त०–म मुग्धा.

सा मङ्गलेत्यादि ॥ सा गौरी [मङ्गलस्नानविशुद्धगात्री] विवाहाभिषेकेन विशुद्धगात्री कान्तिमत्काया [गृहीतशुभ्रोद्गमनीयवस्त्रा] आच्छादितधवलधौताम्बरा [रेजे] चकासे। केव। [निर्वृत्तपर्जन्यजलाभिषेका] निर्वृत्त[1] सम्पन्न पर्जन्यजलाभिषेको जीमूततोयवृष्टिर्यस्या सा। शारदि [प्रफुल्लकाशा]

विकसितकाशकुसुमा [वसुधा इव] भूमिर्यथा राजते तथाऽसौ । उद्गमनीयवस्त्रं धौतचेलम्॥११॥

१. निर्वृत्त–शा. मुद्रा. २. धौताम्बरम्–व. म. ल. न., धौतयुग्मम्–मुद्रा.

तस्मात्प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः परिगृह्य निन्ये क्लृप्तासनं कौतुकवेदिमध्यम् ॥ १२ ॥

तस्मात्प्रदेशादित्यादि ॥ तस्मात् [प्रदेशात्] स्थानात् असौ [पतिव्रताभि] साध्वीभिः [परिगृह्य] आदाय [कौतुकवेदिमध्यं] मङ्गलस्थण्डिलोत्सङ्गं निन्ये नीता । कीदृशम् । वितानवन्तं सचन्दकं[1] पटमण्डपयुक्तं [मणिस्तम्भचतुष्टयेन] रत्नस्थूणचतुष्केण [युक्तं] सम्बद्धं क्लृप्तासनं रचितभद्रपीठम् । 'कृपो रो लः' (पा० सू० ८-२-१८) ॥१२॥

१. सचन्द्रकम्–व. सवलयम्–मुद्रा

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥ १३ ॥

तां प्राङ्मुखीमित्यादि ॥ तत्र वेदिमध्ये [प्राङ्मुखीं] पूर्वाभिमुखीं तां [तन्वीं] कृशाङ्गीं [निवेश्य] उपवेश्य[1] संनिहिते अपि [प्रसाधने] अलङ्कारे [नार्यः] युवतयः [पुरः] अग्रतः स्थित्वा क्षणं[2] [व्यलम्बन्त] उदासत । यतः [भूतार्थशोभाह्रियमाणनेत्राः] भूतार्थया स्वाभाविक्या शोभया विलोभ्यमाननयनाः । अकृत्रिमस्य हि रूपस्य किं मण्डनेन । भूतार्थं[3] पारमार्थिकम् ॥ १३ ॥

१. स्थापय–शा. २. अलङ्कारे–मुद्रा. ३. 'अकृत्रिम'–अत–शा.

धूपेन संत्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् ।
पर्याक्षिपत्काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥

१. धूपेन । त्याजित०–म. म. थ. ना.

धूपेनेत्यादि ॥ तत्र[1] काचिद् अङ्गना [तदीयं] तस्याः [केशान्तं] केशपाशं [दूर्वावता] शाद्वलवल्लितेन [पाण्डुमधूकदाम्ना] सितमधूकपुष्प

१. 'हरिद्वर्ण'–अत.–शा. मुद्रा.

दोरकेण पर्यक्षिपत् अबध्नात् । कीदृशम् । [धूपेन] अगर्वादिधूपधूपेन [आर्द्रभावम्] आर्द्रत्वं संत्याजितं परिहापितम् । अन्तःकुसुमं पुष्पगर्भम्[2] । [उदारबन्धं] दीर्घत्वादुदारः श्रेष्ठो बन्धो रचनाविशेषो ग्रन्थिर्यस्य ॥१४॥

२. कुसुमगर्भम्–मुद्रा.

आसक्तशुक्लागुरु चक्रुरङ्गं[2] सरोचनापत्रविभङ्गमस्याः[3] ।
सा चक्रवाकाङ्कितसैकतायास्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥१५॥

१. विन्यस्त०–म., प्रभक्त.–स. २. चक्रुरस्याः–उ. शा. मुद्रा.
३. ०विभङ्गमङ्गम्–स. शा. मुद्रा.

आसक्तशुक्लेत्यादि ॥ सख्यः अस्याः [अङ्गं] देहमेवंविधं [चक्रुः] अकुर्वन् । [आसक्तशुक्लागुरु] आसक्तं निहितं शुक्लागुरु सितागरु सिताङ्गरागविशेषो यत्र । शुक्लकृष्णभेदेनागुरुणो द्वे रूपे । तथा सतनारौ गोरोचनायाः पत्रविभङ्गाः पत्रलताः सह तैर्वर्तत इति सरोचनापत्रविभङ्गम् । अतश्च सा गौरी । [त्रिस्रोतसः] त्रिपथगायाः [चक्रवाकाङ्कितसैकतायाः] रथाङ्गनामचिह्नितवीरायाः [कान्तिम्] शोभाम् [अतीत्य] अभिभूय [तस्थौ] आसीत् । सा हि सिता रोचनाभङ्गत्वाच्चचक्रवाकोपमानम्[1] ॥ १५ ॥

१. ०कोपादानम्–स. न.

लीनद्विरेफं परिभूय पद्मं समेघलेखं शशिनश्च बिम्बम्[1] ।
तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६ ॥

१. लग्न.–म. शा.

लीनद्विरेफमित्यादि ॥ [तदाननश्रीः] तस्याः आननलक्ष्म्याः प्रसिद्धैः प्रसाधितैः समाचितैः अलकैः [सादृश्यकथाप्रसङ्गं] सदृशं स्यादित्युपमानवचोऽवसरमपि चिच्छेद व्यनीनशत् । [लीनद्विरेफं] संश्लिष्टभ्रमरं [पद्मम्] अरविन्दं [समेघलेखम्] अभ्रवलययुतं [शशिनः बिम्बं] चन्द्रमण्डलम् । अत्र [अभिभूय] जित्वा । कमलशशिनौ किल मुखस्योपमानभूतौ अभिभवेत् । प्रसाधनमेव हेतुः ॥ १६ ॥

कर्णार्पितो रोध्रकषायरूक्षे गोरोचनाभेदनितान्तगौरे[1] ।
तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥

१. लोध्र०–म. चा. अ. ना. २. ०क्षेप०–म०,

कर्णार्पित इत्यादि ॥ तस्या [कर्णार्पित] श्रवणनिहित [यवप्ररोह] यवाङ्कुर लोकस्य [चक्षूंषि] नेत्राणि बबन्ध विषया-नरान्यवर्तयत् । कुत । कपोले परभागलाभात् शोभाप्राप्ते[१] । कीदृशे [गेध्रकषायरूक्षे] रोध्रस्य कषायेण रसेन रूक्षे विशदे[२] । तथा [गोरोचनाक्षेपनितान्तगौर] गोरोचनाया क्षेपो भङ्गस्तद्वदतिगौरे हरितस्य शोभोत्कर्षवति । शाल्वलयवा इकुरादीना च प्रशस्यत्वात् मङ्गलत्वाच्च निधानम् ॥ १७ ॥

१ शोभातिशयावाप्ते —शा मुश २ विषम—शा मुशा

३ शालियवा॰ ना मुना

रेखाविभक्तश्च विभक्तगात्र्याः किंचिन्मधूच्छिष्टविमृष्टरागः ।
कामप्यभिख्यां स्फुरितैरपुष्यदासन्नलावण्यफलोऽधरोष्ठः ॥ १८ ॥

१ रेखा॰—अ ना चा २ सुविभक्त॰—म, प्रविभक्त॰—स

३ ॰विमृष्ट॰—म अ ना

लेखाविभक्तश्चेत्यादि ॥ यौवनवशात् विभक्तगात्र्या[१] तस्या अधरोष्ठ अधोऽधर स्फुरिते कम्पै कामपि अवर्णनीयाम् अभिख्या शोभाम् अपुष्यत् अवर्धयत् । कीदृश । रेखाविभक्त मध्यरेखया विभक्तो द्विधाकृत । तथा [मधूच्छिष्टविमृष्टराग] मधूच्छिष्टेन सिक्थेन मनाक् विमृष्टरागोऽपास्तलौहित्य । ताम्बूलाद्युत्थो हि रागो मधूच्छिष्टेनोत्पुस्य मधुरं क्रियते । [आसन्नलावण्यफल] प्रियपरिचुम्बनादासन्न निकट लावण्यफल यस्य । अधो भवोऽधरो मुखस्थ ॥ १८ ॥

१ 'प्रकटीकृतगात्रयया —अना —र, विभक्तगात्र्या —ना मुना

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥ १९ ॥

पत्यु शिर इत्यादि ॥ सा देवी ता सखीं माल्येन रोषेण निर्वचन तूष्णीं जघान अताडयत् । यत [तया चरणौ] पादौ रञ्जयित्वा [परिहासपूर्वं] नर्मपूर्वम् [इति] इत्थ कृताशी । किमित्याह । अनेन चरणेन पत्यु शिवस्य [शिरश्चन्द्रकला] शिरसि सुरतविशेषवशा-दुत्तमाङ्गस्या शशिलेखा स्पृश इति । अतश्च परितोषान्माल्यप्रहार ॥१९॥

१ रोषात्॰—शा मना

तस्याः सुजातोत्पलपत्रकान्ते प्रसाधिकाभिर्नयने निरीक्ष्य[1] ।
न चक्षुषोः कान्तिविशेषबुद्ध्या कालाञ्जनं मङ्गलमित्युपात्तम् ॥२०॥

१. समीक्ष्य–स. अ. ना. चा.

तस्याः सुजातेत्यादि ॥ [सुजातोत्पलपत्रकान्ते] सुजातं परिपूर्णं[1] यदुत्पलपत्रं तद्वत् कान्ते रम्ये तस्याः [नयने] नेत्रे [निरीक्ष्य] विलोक्याऽपि प्रसाधिकाभिः यत् [कालाञ्जनं] कज्जलं तयोः [उपात्तम्] उपरोपितं तत् मङ्गलम् इति । न तु [कान्तिविशेषबुद्ध्या] शोभातिशयबुद्ध्या । ये हि प्रकृत्या विकसितकुवलयनिभे तयोः कथमिव वराकमञ्जनं कान्तिकारि[3] ॥ २० ॥

१. 'परिपूर्णम्'–नास्ति–हा. मुद्रा. २. आरोपि–व. म. न. हा. मुद्रा.
३. शोभा०–मुद्रा.

सा संभवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहङ्गैरिव लीयमानैरामुच्यमानाभरणा चकाशे ॥ २१ ॥

सा सम्भवद्भिरित्यादि ॥ सा देव्या [आमुच्यमानाभरणा] बध्यमानालङ्करणा चकाशे[1] रेजे । कैरिव । कन्या भरणानामनेकवर्णत्वादुपमानान्याह । सम्भवद्भिः जायमानैः [कुसुमैः] प्रसूनैः[3] [लता] वल्ली शोभते इति पद्मरागेन्द्रनीलादिलाभः । [ज्योतिर्भिः] नक्षत्रैः [उद्यद्भिः] उदयमानैः [त्रियामा] निशा इव इति मुक्तामणिलाभः । विहङ्गैः चक्रवाकैः [लीयमानैः] श्लिष्यद्भिः [सरित्] नदी वेति कनकाभरणादिलाभः ॥ २१ ॥

१. चकासे–व. म. न. ल. २. देव्यामा०–मुद्रा. ३. कुसुमैः–हा. मुद्रा.

आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने[1] त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः ॥२२॥

१. हरायान०–मुद्रा. चा.

आत्मानमित्यादि ॥ ततो गौरी [स्तिमितायताक्षी] निश्चलविशालनयना[1] आत्मानम् [आदर्शबिम्बे] मुकुरमण्डले शोभमानम् [आलोक्य]

१. ०लोचना–ल. व. म. न. व. हा. मुद्रा.

अवेक्ष्य [हरोपयाने त्वरिता] उपक्षा गमनसत्वरा [बभूव] आसीत् । यस्मात् [स्त्रीणां] नारीणां [प्रियालोकफलः] वल्लभदर्शनफल एव आकल्पो मण्डनम् । असति हि प्रियालोकने किं तेन क्रियते ॥२२॥

२ ०पक्षा०–व न म ब    ३. मण्डनेन–मुधा    ४ नियत इति–व न

अथाङ्गुलीभ्यां हरितालमार्द्रं माङ्गल्यमादाय मनःशिलां च ।
कर्णावसक्तामलदन्तपत्रं माता तदीयं मुखमुन्नमय्य ॥ २३ ॥
उमास्तनोद्भेदमनु प्रवृद्धो मनोरथो यः प्रथमं बभूव ।
तमेव मेना दुहितुः कथंचिद्विवाहदीक्षातिलकं चकार ॥ २४ ॥

१ मन०य०–स मुग अ ना    २ ०मुन्निनाय–भ ना

अथाङ्गुलीत्यादि ॥ [२३] उमास्तनेत्यादि [२४] ॥ अथ मेना सुताया [मुखं] वक्त्रं [उन्नमय्य] उत्क्षिप्य [अङ्गुलीभ्यां] तर्जनीमध्यमाभ्यां हरितालं मनःशिलां च [माङ्गल्यम् आदाय] मङ्गलार्थं गृहीत्वा विवाहदीक्षा-तिलकं विवाहदीक्षायां तिलकमानन्दाश्रुदृष्टित्वात् कथंचित् क्लेशेन चकार व्यधात् । उत्प्रेक्ष्यते । [उमास्तनोद्भेदम् अनु] उमायाः स्तनोद्भेदमनु पयोधरनिर्गमनेन सह योग्या योग्यवरलाभविषयो मनोरथः प्रवृद्ध आसीत् तमेव तमिवाकरोत् । तदा तस्या हृदयान्निर्गतस्याविर्भूत इवेत्यर्थः । कीदृशं मुखम् । कर्णावसक्तामलदन्तपत्रं कर्णयो-रवसक्तं योजितममलं दन्तपत्रं द्विरददशनघटिता दन्तपत्रलता यत्र । 'स्तनोद्भेदमनु' इत्यनुशब्दस्तृतीयार्थे कर्मप्रवचनीयः ॥२३॥२४॥ युग्मम् ।

१ 'योग्या'–नास्ति–धा मुग    २ 'विराग्म्'–अरा–भ ष न
३ द पा० सू० १–४–८०

बबन्ध चास्राकुलदृष्टिरस्याः स्थानान्तरे कल्पितसंनिवेशम् ।
धात्र्यङ्गुलीभिः प्रतिसार्यमाणमूर्णामयं कौतुकहस्तसूत्रम् ॥ २५ ॥

१ ०सुनवनाम् –न चा

बबन्धेत्यादि ॥ न केवलमसौ (मेना) गौर्यास्तिलकमकरोत् । यावत् [ऊर्णामयम्] और्णं कौतुकहस्तसूत्रं कङ्कणकं [बबन्ध] आमुमोच । कीदृशम् ।

[अघ्राकुलदृष्टिः] बाष्पलोललोचनत्वात् [स्थानान्तरे] अस्थाने [कल्पित-संनिवेशं] कृतरचनम् । अतश्च धात्र्या [अङ्गुलीभिः] करेण प्रतिसार्यमाणं स्थानं नीयमानम् ॥ २५ ॥

१. 'चकार'-अना. च. म.

क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥ २६ ॥

क्षीरोदेत्यादि ॥ सा गौरी [नवक्षौमनिवासिनी] प्रत्यग्रं पट्टांशुकं परिदधाना [दर्पणमादधाना] मणिमुकुरमाबिभ्राणा भूयः नितरां बभौ व्यद्योतिष्ट । केव । [सफेनपुञ्जा] डिण्डीरवलययुता [क्षीरोदवेला] दुग्धोदधिविकृतिः इव [पर्याप्तचन्द्रा] परिपूर्णमृगाङ्का इव [शरत्त्रियामा] कौमुदी निशा ॥ २६ ॥

१. परिदधती-म. च.   २. मृगाङ्का-ना. मुद्रा

तामर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता ।
अकारयत्कारयितव्यदक्षा क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥

तामर्चिताभ्य इत्यादि ॥ तां देवीं [माता] मेना [अर्चिताभ्यः] पुष्पादिपूजिताभ्यः [कुलदेवताभ्यः] गृहदेवताभ्यः [प्रणमय्य] नमस्कार्याऽनन्तरं क्रमेण अनुज्येष्ठं [सतीनां] साध्वीनां [पादग्रहणं] पादवन्दनम् [अकारयत्] अचीकरत् । यतः [कारयितव्यदक्षा] कारयितव्ये अवश्य कार्ये दक्षा प्रवीणा । तां तु [कुलप्रतिष्ठां] कुलकीर्तिकरीम् । 'प्रणमय्य' इति 'ल्यपि लघुपूर्वात्' [पा० सू० ६-४-५६] इति णेरयादेशः ॥ २७ ॥

१. अवश्यकर्तव्ये-न. म., अवश्यकार्ये-मुद्रा.   २. 'अयामन्त' [पा० सू० ६-४-५५]-मुद्रा.

अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीरलाभात्पश्चात्कृता स्निग्धजनाशिषोऽपि ॥२८॥

१. ०शरीरभाग-म.   २. स्निग्ध०-म. अ. ना. मुद्रा.

अखण्डितमित्यादि ॥ ताभिः वन्दिनाभिर्स्त्रियाभिः सा देवी नम्रा सती [पत्युः] भर्तुः सकाशात् अखंडितं परिपूर्णं [प्रेम] प्रीत्यतिशयं

[लभस्व] लप्सीष्ठा । इति उच्यते स्म अगदत । तया [तु] पुन पत्या [बन्धुजनाशिष] बान्धवलोकाशिष अपि पश्चात्कृता तिरस्कृता । कुत । तस्य पत्यु अर्धशरीरलाभात् । येन हि शरीरार्धमप्यदायि ततः प्रममात्र लाभो न दुर्लभ । शरीरस्यार्धमर्धशरीरम् 'अर्धं नपुसकम्' । [पा० सू० २-२-२] ॥ २८ ॥

इच्छाविभूत्योरनुरूपमद्रिस्तस्याः कृती कृत्यमशेषयित्वा ।
सभ्यः सभायां सुहृदास्थितायां तस्थौ वृषाङ्कागमनप्रतीक्षः ॥२९॥

१ ०मन प्रतीक्ष्य–चा अ ना

इच्छेत्यादि ॥ तत [अद्रि] नगनाथ [सुहृदास्थितायां] मित्रबन्धु सहित सभायां विवाहसदसि [वृषाङ्कागमनप्रतीक्ष] हरागमन प्रतीक्ष्यमाण तस्थौ । किं कृत्वा । [इच्छाविभूत्यो] अभिलाषविभवयो अनुरूप [तस्या] दुहितु [कृत्य] कार्यम् अशेषयित्वा समाप्य । कृतमस्यास्तीति कृती कृतार्थ, भगवति सर्वेश्वरे सुताया प्रतिपादनात् । सभाया साधु सभ्य प्रधान कुलशीलाद्युत्कर्षात् । 'सभाया य' [पा० सू० ४-४-१०५] । शिषेश्चौरादिकस्य अशेषयित्वा' इति रूपम् । नञ्पूर्वत्वाद् ल्यबभाव ॥२९॥

१ उमाया –भ न न न २ सुरासुरे–व न न मुद्रा
३ 'नञ् भाव'–नास्ति–मुद्रा

तावद्वरस्यापि कुबेरशैले तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्तात्पुरशासनस्य ॥ ३० ॥

१ भास्य–न भ ना हस्त्य–न

तावद्वरस्याऽपीत्यादि ॥ यावद् गौरी प्रसाध्यमाना विद्यते तावत् [पुरशासनस्य] पुरारे वरस्य परिणेतु कुबेरशैले कैलासे [आदृताभि] सयत्नाभि [मातृभि] मातृकाभिर्देवताभि [तत्पूर्वपाणिग्रहणानुरूपं] प्रथम विवाहानुरूप [प्रसाधनम्] अलङ्करण [पुरस्तात्] अग्रत [न्यस्तम्] निहितम् ॥ ३० ॥

१ प्रसाध्यते स्म–व न मुद्रा २ स्मरार –मुद्रा ३ हरस्य–व ■ न

तद्गौरवान्मङ्गलमण्डनश्रीः सा पस्पृशे केवलमीश्वरेण ।
स्व एव वेषः परिणेतुरिष्टं भावान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥

१. स एव वेशः-स., स्वभाववेषः-अ. ना.

तद्गौरवादित्यादि ॥ ततो देवेन [तद् गौरवात्] मातृगौरवात् सा [मङ्गलमण्डनश्रीः] कौतुकालङ्कारलक्ष्मीः केवलं पस्पृशे । अभिनन्दिता न त्वङ्गे निहिता । यतः तस्य [विभोः] ईशस्य [स्व] आत्मीय एव [वेषः] आकल्प. परिणेतुः वरस्य इष्टम् अभिमतं भावान्तरम् अन्यद्रूपं प्रपेदे प्राप ॥ ३१ ॥

तदेव भावान्तरं 'बभूव' [७।३२] इत्यादिना प्राह-

बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥

१. कृता०-चा. २. ०नाङ्कः सिंहा०-अ. ना. ३. दुगूल०-मुशा.

बभूव भस्मैवेत्यादि । तस्य भस्म एव [सिताङ्गरागः] चन्दनानुलेपनं [बभूव] आसीत् । कपालम् एव [अमलशेखरश्रीः] अवतंसलक्ष्मीरभूत् । तथा गजाजिनस्य करिकृत्तेः एव [दुकूलभावः] पट्टांशुकत्वम् । उपान्तभागेषु पल्लवप्रदेशेषु [रोचनाङ्कः] रोचनेयाङ्कः चिह्नम् यस्य गोरोचनालिखितहंसयुगलस्य इत्यर्थः । सिंहाजिनस्यैव अत्र (अप?) पाठः । गजकृत्तिवासस्त्वाद्भवस्य तथा च पूर्वमेवोक्तम् 'वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च' [कुमार० ५-६७] इति ॥ ३२ ॥

१. ०दुगूल-मुशा. २. पूर्वोक्तम्-च. न.

शंखान्तरद्योति विलोचनं यदन्तर्निविष्टामलपिङ्गतारम् ।
सांनिध्यपक्षे हरितालमय्यास्तदेव जातं तिलकक्रियायाः ॥३३॥

१. ०ष्टानल०-अ. ना. चा.

शंखान्तरेत्यादि ॥ [शंखान्तरद्योति] शंखौ ललाटान्तौ तयोरन्तरे मध्ये द्योतते शोभते यत् [विलोचनम्] अक्षितृतीयं तदेव हरितालमय्याः तिलकक्रियायाः सांनिध्यपक्षे सद्भावमार्गे जातं सम्पन्नम् । ललाटमक्षि

हरितालतिलकमभूदित्यर्थः । कीदृग् नेत्रम् । [अन्तर्निविष्टामलपिङ्गतारम्] अन्तर्निविष्टा स्थिरवाऽमला तारा कनीनिका पिङ्गतरं[1] यस्य ॥३३॥

१. अन्तर्निविष्टं स्थिरं अमलं पिङ्गं तारं यस्य—भ. ब. न, पिङ्गतारा—मुद्रा.

यथाप्रदेशं भुजगेश्वराणां करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे तथैव तस्थुः फणरत्नशोभाः ॥३४॥

यथाप्रदेशमित्यादि ॥ [भुजगेश्वराणां] वासुकिप्रभृतीनां फणीन्द्राणां[1] [यथाप्रदेशं] बाह्वादिप्रदेशानुरूपेण [आभरणान्तरत्वं] केयूरकण्ठकादिरूपमलङ्कारविशेष [करिष्यतां] विधास्यतां [शरीरमात्रं] देहमात्रम् आभरणमयं [विकृतिं] विकारं [प्रपेदे] प्राप । [फणरत्नशोभाः] शिरोमणिशोभाः पुनः तथैव तस्थुः, न रूपान्तरमापुः[2] । रत्नानां स्वत एवालङ्करणत्वात् ॥३४॥

१ नागेन्द्राणाम्—मुद्रा. २. रूपान्तरं प्रापुः—च. न. भ. ब. मुद्रा.

दिवापि निष्ठ्यूतमरीचिभासा[1] बाल्यादनाविष्कृतलक्षणेन[2] ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेश्चूडामणेः किं ग्रहणं हरस्य ॥३५॥

१. ०भाजा—अ. ना. २. ०लाञ्छनेन—म. स. वा.

दिवापीत्यादि ॥ [हरस्य] भवस्य [चूडामणेः] चूडामणौ शिरोरत्नविषये किं ग्रहणम् । क आदरः । यतः चूडामणिरूपेण नरास्थि न किञ्चिदकारीत्यर्थः । यतः नित्यमेव [चन्द्रेण] शशिना प्रतिभिन्नमौले[1] विशेषितजटस्य । कीदृशेन । [दिवा] अहनि अपि निष्ठ्यूतमरीचिभासा प्रसृतकिरणकान्तिना । [बाल्यात्] कलामात्ररूपत्वात् अनाविष्कृतलक्षणेनाऽव्यक्तमलेन । परिपूर्णस्य हि तस्य[1] शशाविर्भावः । अतश्च यस्य एवंविधः सितांशु[2]राभरणं शिरसि स किमिति चूडामणिमपेक्षते । ग्रहणमादरो भारः[3] ॥ ३५ ॥

१. हस्य—मुद्रा. २. शीतांशु०—च. न. ३. 'भारः'—नास्ति—मुद्रा.

इत्यद्भुतैकप्रभवः प्रभावात्प्रसिद्धनेपथ्यविधि[1]र्विधाता ।
आत्मानमासन्नगणोपनीते खड्गे[2] निषक्त[3]प्रतिमं ददर्श ॥३६॥

१. ०विधे०—म. स अ. ना. २. ट्ट्गे—अ. ना. ३. निविष्ट०—अ. ना.

इत्यद्भुतैकेत्यादि ॥ अथ हरः [ आसन्नगणोपनीते खड्गे ]पार्श्वस्थ-प्रमथढौकितमण्डलाग्रे [ निपक्कप्रतिमं ] लग्नप्रतिबिम्बमलङ्कृतम् आत्मानं [ ददर्श ] अवैक्षत[1] । कीदृशः । [ प्रभावात् ] महिम्नः इति इत्थं प्रसिद्ध-नेपथ्यविधिः सम्पन्नवेषरचनः । यतः अद्भुतैकप्रभवः आश्चर्यैकनिधिः विधाता स्रष्टा ॥ ३६ ॥

१. ऐक्षत–च. न. ध. म. मुद्रा.

स गोपतिं नन्दीभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥३७॥

स गोपतिमित्यादि ॥ ततः [ स ] देवं [नन्दीभुजावलम्बी] दौवारिकनन्दीभुजावलम्बनेन वीरभद्रभुजावलम्बनेन[1] [ गोपतिं ] वृषम् आरुह्य [ प्रतस्थे ] प्रययौ । कीदृशम् [ शार्दूलचर्मान्तरितोरुपृष्ठं ] व्याघ्राजिनेन[2] पिहितं स्थगितमुरुपृष्ठं यस्य । शौक्ल्यात्वादुच्चत्वाच्चोत्प्रे[3]क्षते [तद्भक्तिसंक्षिप्तबृहत्प्रमाणं] भगवद्भक्त्या संक्षिप्तं संहृतं महत्प्रमाणं येन तं तादृशं कैलासम् अद्रिमिवारुह्य ययावित्यर्थः ॥ ३७ ॥

१. 'वीर...नेन'–नास्ति–मुद्रा. २. व्याघ्रचर्मणा–च. न. मुद्रा.
३. शौक्ल्यादुत्प्रे०–मुद्रा.

तं मातरो देवमनुव्रजन्त्यः स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः पद्माकरं[2] चक्रुरिवान्तरिक्षम् ॥३८॥

१. ०राजि०–अ. ना. २ पद्माकरी–अ. ना.

तं मातर इत्यादि ॥ तं देवं मातरः अनुव्रजन्त्य मुखैः[1] [ अन्तरिक्षं ] व्योम [ पद्माकरं ] कमलषण्डम् इव चक्रुः विदधुः । मुखानां नलिन[2]-निभत्वात् । [ प्रभामण्डलरेणुगौरैः ] प्रभामण्डलमेव रेणुस्तेन गौरैः पिङ्गैः । पद्मे हि परागेण भवितव्यम्[3] । ताः कीदृश्यः । [ स्ववाहनक्षोभ-चलावतंसाः ] महिषोलूकहस्तिसिंहादिकं स्वं स्वं यद्वाहनं तत्क्षोभेण चलावतंसाः शेखरा यासाम् ॥ ३८ ॥

तासां च पश्चात्कनकप्रभाणां काली कपालाभरणा चकासे[1]।
बलाकिनी नीलपयोदराजि[2] दूरं पुरःक्षिप्तशतह्रदेव[3] ॥३९॥

१ चकाशे–स मुगा  २ ०राजी–म  ३. ०शतह्रदेव–म

तासां च पश्चादित्यादि ॥ तासां मातृणां [कनकप्रभाणां] सुवर्णाभानां पश्चात् [काली] कालीसंज्ञा माता चकासे। [कपालाभरणा] कपालालङ्कारा अद्युतत्[1]। केव। [बलाकिनी] बलाकायुक्ता पुरःक्षिप्तविद्युल्लता नीलपयोदराजि इव। अग्रे च दूरमत्यर्थं प्रसृतविद्युत् मेघमाला यथा चकासते। कालत्वात् काली[2] ॥ ३९ ॥

१ ०अद्युतत्–मुगा  २ 'काल्या कालत्वात् कालीति नाम। वर्णे ङीपुरस्ति। [पा० सू० ४–१–४२] –मुद्रा

ततो गणैः शूलभृतः पुरोगैरुदीरितो मङ्गलतूर्यघोषः।
विमानशृङ्गाण्यवगाहमानः शशंस सेवावसरं सुरेभ्यः ॥४०॥

ततो गणैरित्यादि ॥ अथ [शूलभृतः पुरोगैः] हरस्याग्रयायिभिः[1] [गणैः] प्रमथैः [उदीरितः] उत्पादितः [मङ्गलतूर्यघोषः] ढक्कादिमङ्गलवादित्रध्वनिः [सुरेभ्यः] देवेभ्यः सेवावसरं शशंस अचकथत्[2]। यतः [विमानशृङ्गाणि] सुरयानशिखराणि [अवगाहमानः] व्याप्नुवन्। अतश्च तद्वादनानन्तरं देवो विवाहार्थमुच्चलितो येनायं तूर्यरवस्तदग्रगामोऽस्य पुरत इति सेवाकालकथनम् ॥ ४० ॥

१ हरस्याग्रगामिभिः–च व भ न मगा  २ अकथयत्–व न

उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम्।
स तद्दुकूलादविदूरमौलिर्बभौ वहन् गाङ्गमिव प्रवाहम्[1] ॥४१॥

१ पतद्गङ्ग इवोत्तमाङ्गे–म अ ना

उपाददे इत्यादि ॥ त्वष्ट्रा विश्वकर्मणा [नवं निर्मितं] तत्कालघटितम् आतपत्रं [तस्य] अस्य देवस्य [सहस्ररश्मिः] सहस्रकिरणः[1] आदरेण [उपाददे] जग्राह। स च शम्भुः [तद्दुकूलात्] आतपत्र-

१ दशशतार्चिषु–च ल व मुद्रा, भास्कर–म

पट्टांशुकात् अविदूरमौलिः निकटोत्तमाङ्गः [बभौ] रेजे। सितत्वादुत्प्रेक्षते। गाङ्गं प्रवाहम् इव[२]। स हि गङ्गाधरः ॥४१॥

२. 'स्रोतो वहन्'–अपा.–च. भ. ब. न. मुद्रा.

मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम्।
समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे ॥४२॥

मूर्ते चेत्यादि ॥ तं च [देवम्] ईश्वरं गङ्गायमुने नद्यौ [सचामरे] चामराणि गृहीत्वा असेविषाताम् वीजयामासतुः। सचामरत्वादुत्प्रेक्षते। समुद्रगारूपविपर्यये अपि जलमयस्थानत्यागेऽपि [सहंसपाते] हंसपातान्विते इव [लक्ष्यमाणे] दृश्यमाने। स्रोतोरूपेण हि नदीनां सितच्छदै[१]र्भाव्यम्। तदा च मूर्तिमत्त्वादजलत्वे[२]ऽपि सितप्रकीर्णसद्भावात् हंससंपर्कोत्प्रेक्षा। समुद्रगाः सरितस्तासां रूपं स्रोतोमयम्। असेविषाताम् इति कर्तरि लुङ् ॥४२॥

१. हंसैः–मुद्रा. २. अजङ्गमत्वे–भ. ब.

तमभ्यग[१]च्छत्प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात्।
जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव वह्निम् ॥४३॥

१. समन्वग०–स.

तमभ्यगच्छदित्यादि ॥ तम् ईश्वरं प्रथमः विधाता ब्रह्मा [श्रीवत्सलक्ष्मा] श्रीवत्साङ्कः च पुरुषः विष्णुः अभ्यगच्छत् समा[१]ययौ। अस्य देवस्य 'जय जय' इति वाचा स्वयं महिमानं माहात्म्यं संवर्धयन्तौ। हविषा वह्निम् इव। चित्रभानुर्हविषा[२] वर्धते। श्रीवत्सो हरेरुरसि लक्षणविशेषः ॥४३॥

१. समुपगमा०–मुद्रा. २. हव्येन–भ. ब. मुद्रा.

ननु ब्रह्मविष्णू सर्वोत्कृष्टौ कथमिव हरस्य जयादिशब्दमुदचारयतामित्याह–

एकैव मूर्तिर्बिभिदे त्रिधा सा[१] सामान्यमेषां प्रथमावरत्वम्।
विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ[२] ॥४४॥

१. त्रिधासौ–स. २. धातुराद्यो–भ. स. अ. ना.

एकैव मूर्तिरित्यादि ॥ सा हरिहरब्रह्मलक्षणा एका एव मूर्तिः ततु [त्रिधा] त्रिभिः प्रकारैः विभिदे भेदं गता । यथा–अयं हरो हरिरयमयं च ब्रह्मेति । यदुक्तम् – 'नमस्त्रिमूर्तये तुभ्यं' [कुमार० २-४] इत्यादि । अतश्चैषां त्रयाणां प्रथमावरत्वं प्राधान्याप्राधान्यत्वं स्तोतृस्तुत्यत्वं तत् सामान्यं साधारणम् । तथा हि विष्णो कदाचित् हरं ईश्वरं ईडय स्तुत्य । कदाचित् तस्य हरिं ईडयं । कदाचिद् ब्रह्माणं तयो हरिहरौ ईडाते । कदाचित तौ स ईश्वर ईट्टे ॥४४॥

१ हरिहरब्रह्म०-ग न च ल मुगा  २ ०स्तुत्यत्वम् मुद्रा

त लोकपालाः पुरुहूतमुख्याः श्रीलक्षणोत्सर्गविनीतवेषाः ।
दृष्टिप्रदाने कृतनन्दिसञ्ज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥४५॥

त लोकेत्यादि ॥ [पुरुहूतमुख्या] इन्द्राद्या लोकपाला त देवं प्रणेमु । कीदृशा । [श्रीलक्षणोत्सर्गविनीतवेषा] श्रीलक्षणानि छत्रचामरादीनि तेषामुत्सर्गेण त्यागेन विनीतवेषा भक्तिपराकृत्या । तथा [दृष्टिप्रदाने] दृष्टिप्रदाननिमित्तं [कृतनन्दिसञ्ज्ञा] कृता नन्दिप्रतीहारस्य सञ्ज्ञा सङ्केतो यै । 'अवसरं कुरु, दर्शयाऽस्मान्' इति । ततः [तद्दर्शिता] तेन नन्दिना दर्शिता सन्तः [प्राञ्जलय] अञ्जलिं कृत्वा देवं ववन्दिरे ॥४५॥

१ छत्रप्रभृतयो लिङ्गी(?)त्रा –मुगा  २ अरतनिष्ठिताक पा –च न मुगा
३ वीरस्य–न मुगा नन्दीश्वरेण–च भ  ४ 'ईश्वर'–अया –मुगा

कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान्सम्भावयामास यथाप्रधानम् ॥४६॥

कम्पनेत्यादि ॥ ततो धूर्जटिस्तान् विरिञ्च्यादीन् [देवान्] यथाप्रधानं प्रधानानुरूपेण आवर्जयत् । तथा हि [मूर्ध्न कम्पेन] शिरश्चालनेन [शतपत्रयोनिं] ब्रह्माणं [सम्भावयामास] समभावयत् । ततोऽधिकं हरिं [वाचा] वचसा, वृत्रहणम् इन्द्रं [स्मितेन] ईषद्धसितेन अन्यांश्च [सुरान्] गीर्वाणान् [आलोकमात्रेण] दृष्टिमात्रेणेति ॥४६॥

१ प्रभावा० च भ य व ल मुगा  २ 'आधिकम्'–नास्ति–मुद्रा

तस्मै जयाशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान्स्मितपूर्वमाह ।
विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति ॥४७॥

तस्मै जयेत्यादि ॥ [जयाशीः] जयजयेत्याशीर्नुतिस्तैर्देवाय [पुरस्तात्] अग्रतः [सप्तर्षिभिः] वसिष्ठादिभिर्मुनिभिः ससृजे[1]। ततः तान् असौ [स्मितपूर्वं] सहासम् आह उवाच । अस्मिन् विवाहयज्ञे उद्वाहाध्वरे वितते प्रसृते पूर्ववृताः पूर्वमेव मया अध्वर्यव[2] यूयं प्रार्थिताः। ततः शीघ्रं प्रजेतेति भावः ॥४७॥

१. 'उच्चारिता'–अत–व. न. म. ब. ल. मुशा.     २. अध्वर्युर्वे–मुशा.

विश्वावसुप्राग्रहरैः[1] प्रवीणैः संगीयमानत्रिपुरावदानः[2] ।
अध्वानमध्वान्तविकारलङ्घ्यस्ततार ताराधिपखण्डधारी ॥४८॥

१. ०प्राग्रहरैः–अ. ना.     २. ०रापदानः–मुशा.

विश्वावस्वित्यादि ॥ ततः [ताराधिपखण्डधारी] देवः अध्वानं ततार मार्गं ययौ। कीदृशः। [विश्वावसुप्राग्रहरैः] विश्वावसुः गन्धर्वराजः प्राग्रहरः प्रधानं येषां तैः प्रवीणैः गेयकुशलैः [संगीयमानत्रिपुरावदानः] गीयमानं त्रिपुरदाहलक्षणं अवदान[1]माश्चर्यकर्म यस्य । [अध्वान्तविकारलङ्घ्यः] ध्वान्तमान्तरं तमस्तस्य विकारा हर्षादयस्तैरलङ्घ्यो[2]ऽनाक्रमणीयः। इत्थं महिमदर्शने[3]ऽप्यनहंकृत इत्यर्थः। [ताराधिपखण्डधारी] शशिकलाभृत्। त्रिपुरशब्देनाऽत्र तद्दाहो लक्ष्यते ॥४८॥

१. अपदान० –शा.     २. ०स्तैर्न लङ्घ्यो–मुशा.     ३. महिम्ना दर्शनेन–घ. व. म. न.

खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिङ्किणीकः ।
तटाभिघातादिव लग्नपङ्के धुन्वन्मुहुः प्रोतघने विषाणे ॥४९॥

खे खेलगामीत्यादि ॥ वाहः वृषभः तम् ईशं [खे] आकाशे [उवाह] अवहत् । कीदृशः । खेलगामी सविलासयायी । [सशब्दचामीकरकिङ्किणीकः] सशब्दाश्चामीकरकिङ्किण्यो हेम[1]घण्टिका यस्य शब्दायमानकनकघण्टिकः । तथा प्रोतघने स्यूतमेघे विषाणे शृङ्गे धुन्वन् कम्पयन् ।

उत्प्रेक्षते । तटाभिघाताद् इव वप्रक्रीडया[२] इव लग्नपङ्के । कर्दमाश्लेषाद्[३] विषाणकल्पः ॥ ४९ ॥

१. कनक०-च.न. मुद्रा  २. वप्रक्रीडात-मुद्रा.  ३. 'हि'-अधा-मुद्रा.

स प्रापदप्राप्तपराभियोगं नगेन्द्रगुप्तं नगरं मुहूर्तात् ।
पुरो विलग्नैर्हरदृष्टिपातैः सुवर्णसूत्रैरिव कृष्यमाणम्[१] ॥५०॥

१. कृष्यमाणः-म.

स प्रापदित्यादि ॥ अप्राप्तपराभियोगम् अनासादितरिपुपरिवेष्टनं [सः] असौ ईश्वरः [नगरम्] औषधिप्रस्थं [मुहूर्तात्] क्षणमात्रेण [प्रापत्] आसदत् । उत्प्रेक्षते । [पुरः] अग्रतः विलग्नैः [हरदृष्टिपातैः] हरदृतीयनयनपातैः इव हेतुभूतैः सुवर्णसूत्रैः [कृष्यमाणम्] आकृष्यमाणम् । अन्यथा कथं दूरस्याशु प्राप्तिः स्यादिति भावः[१] । [सुवर्णसूत्रैरिव] । एव इवशब्दो दृष्टिपातानामुपमार्थो नोत्प्रेक्षामपि प्रतिपादयितुं समर्थः यस्मादिवशब्दद्वयप्रयोगो न्याय्यः । यथा- 'अङ्गुलीभिरिव केशसञ्चयं संनिगृह्य तिमिरं मरीचिभिः । कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥' [कुमार० ८-६३] इत्यादि । हेतुतृतीयायां तु न किञ्चिदहृदयङ्गमम् ॥५०॥

१. 'कर्तृतृतीयया तु द्वितीयमिवशब्दं विनोत्प्रेक्षा दुर्घटा स्यात्'-अधा. -मुद्रा.

तस्योपकण्ठे घननीलकण्ठः कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य मार्गादासन्नभूपृष्ठमियाय देवः ॥ ५१ ॥

तस्योपकण्ठ इत्यादि ॥ तस्य अद्रेः उपकण्ठे समीपे [देवः] भगवान् आसन्नभूपृष्ठम् [इयाय] अगात् । स्वबाणचिह्नात् आकाशात् [अवतीर्य] अवरुह्य त्रिपुरवधकाले शरक्षेपान्नभसः स्वबाणचिह्नत्वम् । कीदृगसौ [घननीलकण्ठः] मेघकालगलः[१] । तथा [कुतूहलादुन्मुखपौरदृष्टः] कुतूहलेनोन्मुखैर्नागरिकैरीक्षितः[२] ॥ ५१ ॥

१. मेघनीलकण्ठः-च. न.  २. ०रैर्वीक्षितः-मुद्रा.

तमृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।
प्रत्युज्जगामागमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥

तमृद्धिमदित्यादि ॥ तम् ईशं [गिरिचक्रवर्ती] अद्रिराज[1] प्रत्युज्जगाम अभितो निर्ययौ । कै । [ऋद्धिमद्बन्धुजनाधिरूढै][2]स्फीतस्वजनालङ्कृतैः कुण्डलकेयूरमणिमाणिक्यादिभि स्फीता ये स्वजनास्तैरधिष्ठिते[2] [गजानां वृन्दै] हस्तिकै [प्रफुल्लवृक्षै] निकासितपादपै [स्वै] निजै इव [कटकै] नितम्बै । स कीदृश । [आगमनप्रतीत] भगवदागमनेन प्रतीतः प्रमुदित ॥ ५२ ॥

१ अद्रिनाथ –मुधा   २ २–‘स्फीत ष्ठितै’–नास्ति–मुधा

वर्गावुभौ देवमहीधराणां द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥

वर्गावुभावित्यादि ॥ [देवमहीधराणां] देवा[1] हरिहरहिरण्यगर्भ-रवीन्द्रचन्द्रादय मेरुमन्दरमलयादयो महीधरास्तेषामुभौ [वर्गौ] संघौ[1] उद्घटितापिधाने अपावृतकपाटे[2] पुरस्य द्वारे समीयतु सजग्माते । कापिव। पयसाम् [ओघौ] प्रवाहा इव [भिन्नैकसेतू] भिन्नस्त्रुटितो विदारित[3] एक साधारण सेतुर्ययोस्ता तोयपूरौ यथा सङ्गच्छेते । सेतुर्द्वारस्योपमानम् । दूरविसर्पिघोषौ इति उभयविशेषणम् । अपिधीयते स्थग्यतेऽनेनेत्यपिधानं कपाटम्[4] ॥ ५३ ॥

१ १ ‘देवा संघौ’–नास्ति–मुधा   २ ०कपाट–व न मुधा
३ ०टित –मधा   ४ कपाट –मुधा

ह्रीमानभूद् भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य दूरमावर्जितं नात्मशिरो विवेद ॥ ५४ ॥

ह्रीमानभूदित्यादि ॥ [त्रैलोक्यवन्द्येन] त्रिजगद्वन्द्येन[1] हरेण पूर्वं वन्दितत्वात् [भूमिधर] अद्रिनाथ ह्रीमान् लज्जितोऽभूत् । सर्वेश्वरो माम आदौ प्रणमतीति । स च दूरम् अत्यर्थम् आवर्जितं नामितमपि [आत्मशिर] निजमुत्तमाङ्गं न विवेद नाज्ञासीत् । कुत । तस्य महिम्ना प्रभावातिशयेन । अभ्युत्थानस्य हि पश्चाद् विहितमपि वन्दन किं पूर्वं एनमिति महिम्ना कथं मन्यते । यदि वा भगवत सर्वोपरि

१. भुवनवन्द्येन–मुधा

वर्तित्वाद् भुवनानामध:स्थत्वे सममेव सत्यात्मशिरसोऽत्र पूर्वना॰ योद्धव्यम् । न तु प्रणाममात्रेण । महिम्ना हि भगवता सर्वं न॰ अस्मिन्पक्षे महिम्नेति नमनापेक्षया कर्तरि तृतीया ॥ ५४ ॥

स प्रीतियोगाद्विकसन्मुखश्रीर्जामातुरग्रेसरतामुपेत्य ।
प्रावेशयन्मन्दिरमृद्धमेनमागुल्फकीर्णापणमार्गपुष्पम्[1] ॥ ५५ ॥

१ ०र्णान्तरपुष्पवर्षम्–स. ०पुष्पमार्गम्–मुग्ना.

स प्रीतीत्यादि ॥ स हिमवान् [प्रीतियोगात्] प्रीत्या जा॰ अग्रेसरतां पुरोयायित्वम् [उपेत्य] अवाप्य एनं श्रीकण्ठं [ ॰ आत्म[1]मन्दिरं प्रावेशयत् । ऋद्धं स्फीतं तथा [आगुल्फ॰ आगुल्फं पादपूर्वं कीर्णान्यापणमार्गे हट्टपथि पुष्पाणि यत्र ।[2] यावद् हट्टमार्गे निक्षिप्तकुसुमराशिः[3] । 'अन्तर' इति पाठे नगरा॰ मार्गोऽन्तर्मार्गः ॥ ५५ ॥

१. निज–च. न. ब म मुग्ना. २. .३. 'गुल्फिका ..राशिः' नास्ति–

तस्मिन्मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५६ ॥

१. मुक्तान्य०–चा.

तस्मिन्मुहूर्तेत्यादि ॥ अथ तस्मिन् मुहूर्ते महाराज॰ [ईशानसंदर्शनलालसानां] तदवलोकनसाभिलाषाणां [पुरसुन्दरी॰ नगरवनितानां [त्यक्तान्यकार्याणि] उत्सृष्टव्यापाराणि[2] विचे॰ चरितानि [प्रासादमालासु] हर्म्यावलिपृष्ठेषु इत्थं ॰ [बभूव] आसन्नभूवन् ॥ ५६ ॥

१. महेश्वर–ब. २ ०व्यापारान्तराणि–मुग्ना. ३. 'बलवनागपक्ते॰ नास्ति–च ब. भ. ट. न. मुग्ना.

कथमित्याह–

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धुं न संभावित एव तावत्करेण रुद्धोऽपि न केशपाशः ॥ ५७

१. च–भ., हि–म.

आलोकेत्यादि ॥ सहसा अनाशंकम्[1] आलोकमार्गं गवाक्षपथं गतया कयाचित् [ व्रजन्त्या ] यान्त्या [ केशपाश ] केशकलाप बद्धु ग्रथितुं न सभावित पर[2] तावत् । आस्तामेतत् करेण अपि न रुद्ध नावष्टब्ध । अतश्च यत्र करोधस्यैव त्वरावशादसम्भावनत्वम्[3] । तत्र बन्धाचरण दूरादपेतमेवेत्यर्थ । [उद्वेष्टनवान्तमाल्य ] मुक्तमाल्य उद्वेष्टनवशात् स्यकापीड । तस्यानवस्थित वात्[4] । मालाना समूहो माल्यम् । 'पाशादिभ्यो य' [पा० सू० ४-२-४६ ] । हस्तपक्षपाशा केशेषु प्रशसावाचका ॥५७॥

१ अनाङ्कम्-ल २ न नियोजित एव' अत्र -मुद्रा ३ असम्भावनत्वम्-ब मुद्रा, असम्भवतरम्-ल ४ तस्या-तस्यत्वात् मुद्रा

प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्का पदवीं ततान ॥ ५८ ॥

प्रसाधिकेत्यादि ॥ अ या काचित् अङ्गना प्रसाधिकालम्बित सैरन्ध्रीगृहीत द्रवरागम् अशुष्कालक्तकम् [ अग्रपाद ] चरणाग्रम् आक्षिप्य आच्छिद्य उत्सृष्टलीलागति परित्यक्तविलासगमना [अलक्तकाङ्का] लाक्षारसचिह्नं [पदवीं] मार्गम् [आगवाक्षात् ] आवातायनात् [ ततान ] अकरोत् । अग्रे चाऽसौ पादश्चाग्रपाद इति गुणगुणिनोरभेदात् विशेषणलक्षणसमास ।[1] अग्रे पादोऽग्रपाद इति सप्तमीसमासो वा ॥ ५८ ॥

१ भेदस्तु तु पदाग्रादीना [द्र पा० सू० २-२-८] पष्ठीसमास ।' अत्र -मुद्रा

विलोचन दक्षिणमञ्जनेन सभाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ५९ ॥

विलोचनमित्यादि ॥ [अपरा] अन्या नारी दक्षिण [ विलोचनम् ] अक्षि [ अञ्जनेन ] कज्जलेन समाव्य सयोज्य [तद्वञ्चितवामनेत्रा] वामे तु तदद्त्वैव करेण [ शलाका ] तुलिका [ वहन्ती ] दधाना तथैव उत्सृष्टलीलागति [ वातायनसन्निकर्षं ] गवाक्षसमीप[1] [ययौ ] अगात्[2] । वातोऽयते प्रसरत्यनेनेति वातायनो गवाक्ष ॥ ५९ ॥

१ ०निकर्षम्-ब न मुद्रा, ०सन्निधम्-व ०सन्निधिम्-भ २ अगमत्-मुद्रा

जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्ना न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥

जालान्तरेत्यादि ॥ [ अन्या ] अपरा वनिता त्वरावशात् [ भिन्ना ] गमनत्रुटिता नीवीं [ जालान्तरप्रविष्टदृष्टि ] उच्चगवाक्षविवरनिक्षिप्तनेत्रत्वात् न बबन्ध । केवल [ हस्तेन ] करेण [ वास ] [ अवलम्ब्य ] अवष्टभ्य तस्थौ आस्त । कस्य [नाभिप्रविष्टाभरणप्रभेण नाभौ प्रविष्ट¹कटककान्तित्वम् ॥ ६० ॥

१ नाभिप्रविष्ट०–व म मुद्रा

अर्धाचिता सत्वरमुत्थितायाः पदे पदे दुर्निमितं गलन्ती ।
कस्याश्चिदासीद्रसना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥

अर्धाचितेत्यादि ॥ अन्यस्याश्च सत्वर¹मुत्थितायाः तदानीं [ रसना ] मेखला [ अङ्गुष्ठमूलार्पितसूत्रशेषा ] पादाङ्गुष्ठार्पितसूत्रशेषा [आसीत्] बभूव । यत [ अर्धाचिता ] अर्धप्रोतोऽभिन्ना² । अत एव [ पदे पदे ] प्रतिपदं गलन्ती भ्रष्टाभरणा । [ दुर्निमिते ] दुष्टं निमितं निधानं निक्षेपो वा यत्र तद्दुर्निमितं चलनं³मत एव तन्तुशेषत्वम् ॥ ६१ ॥

१ त्वरितो०–मुद्रा २ अर्धनिचितोऽभिन्ना–नगा ३ रलन०–घ न म ब मुद्रा

तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ६२ ॥

१. ०पत्राभरणा–अ ना

तासां मुखैरित्यादि ॥ तत तासां [ सान्द्रकुतूहलानां ] वर्धमान¹कौतुकानामङ्गनानां [ मुखैः ] वक्त्रैः [ व्याप्तान्तराः ] आपूर्णमध्या गवाक्षाः [ सहस्रपत्राभरणाः ] कमलालङ्कृता इव आसन्² । मुखानां पद्म³निभत्वात् । तदेव साम्यमाह । [ आसवगन्धगर्भैः ] आसवगन्ध

१ ०धन०–अग –च न म मुद्रा. २ ‘अभवन्’–अग –च म. मुद्रा
३ कमल०–व ॥

पानसौरभ्यं[४] गर्भे गर्भो वा येषां तैः । [ विलोलनेत्रभ्रमरैः ] चटुलानि नयनानि षट्पदा येषां तैः ॥ ६२ ॥

४. सौरभ–च न मुद्रा.

तमेकदृश्यं नयनैः पिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६३ ॥

तमेकदृश्यमित्यादि ॥ ता नागरिका तं देवम् अतिदर्शनीयत्वात् [ नयनैः ] ईक्षणैः पिबन्त्य सादरमवलोकयन्त्य शब्दादीनि विषयान्तराणि न [ जग्मु ] ययु नाचिन्तयन्[१] । तद्गतमनस्कत्वात् । तथा हि नान्य पश्यन्ति न शृण्वन्ति न जिघ्रन्ति न स्पर्शमनुभवन्ति । अतश्चोत्प्रेक्षते । नूनम् [ आसा ] तासां [शेषेन्द्रियवृत्ति ] श्रवणादीनां शेषाणाम् इन्द्रियाणां वृत्तिराकर्णनादिको व्यापारस्तदा सर्वात्मना सामस्त्येन चक्षु इव प्रविष्टा नेत्रयोरेव कृतप्रवेशत्वात् । तदेकं रूपं पश्यन्ति ता शृण्वन्तीत्यादि सकामत्वादिति भाव । एकश्चासौ दृश्यश्च तम् [एकदृश्य] सर्वतो रम्यम् ॥६३॥

१ नाजशिरे–र म

स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयापि तप्तम् ।
या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्था किमुताङ्कशय्याम् ॥६४॥
परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥ ६५ ॥
न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये संन्यस्तदेहः स्वयमेव कामः ॥ ६६ ॥
अनेन सम्बन्धमवाप्य दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।
मूर्धानमालि क्षितिधारणोच्चमुच्चैस्तरं वक्ष्यति शैलराजः ॥ ६७ ॥
इत्योषधिप्रस्थविलासिनीनां शृण्वन्कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिं हिमालयस्यालयमाससाद ॥६८॥

१. कोमलाभि०–स. २. निर्यो०–चा. मुद्रा ३ ॰मुपत्य–म.
४. ॰पाल्नोच्चमुच्चैस्तरां–चा. मुद्रा. ५. मुष्टि –चा. मुद्रा

स्थाने तपो चतुर्भिः कलापकम्[1] । [इत्यौषधिप्रस्थेत्यादि ॥]
[त्रिनेत्रः] भगवान् [औषधिप्रस्थविलासिनीनां] अद्रिनगरनायिकानां [
सुखा ] कर्णपरितोषकारिण्यः इति इत्थं [कथा.] गिरः [शृण्वन्] क
[हिमालयस्य आलय] श्वसुरसद्म [आससाद] प्राप । [ पू
लाजमुष्टिः] केयूरैर्भुजाभरणैरन्योन्यसंघट्टवशाच्चूर्णीकृता. पिष्टा ला
मृदधान्यकरपल्लवसंवृत्तयो[2] यस्य [तम्] । प्रवेशकाले कौतुकला
नारीभिः क्रियते । कास्ताः कथा इत्याह – स्थाने तप इत्यादि
अपर्णया[3] पेलवया अपि सुकुमारयापि दुश्चरं तपः [अभितप्तं] च
एतदर्थं तत् स्थाने युक्तम् । यतः अस्य देवस्य या नारी [
प्रेष्यत्वमपि [लभेत] प्राप्नुयात् सा अपि [कृतार्था] कृतकृत्या [
भवेत् किं पुन. अङ्कशय्याम् उत्सङ्गस्थानम्[4] ॥ ६४ ॥ परस्परेणेत्यादि
इदं च द्वन्द्वं युगलं चेत् यदि न [अयोजयिष्यत्] सघटयेत्
अस्मिन् द्वये मिथुने [रूपविधानयत्नः] सौन्दर्य निर्मा
अस्य [प्रजानां पत्युः] वेधसः [विफल] निष्फल[5] [ अभविष्यत् ] अ
असदृशसमागमात् । कीदृशं द्वन्द्वम् । [परस्परेण] अन्योन्यं [
यशोभम् ] अभिलषणीयकान्ति । एषो भद्रोऽसावपि रम्येति[6] ।
पदाभावाल्लुङ्प्रयोगोऽत्र दुःसाधुः ॥६५॥ न नूनमित्यादि ॥ ६
कृतेन अनेन [नूनं] निश्चितं [कुसुमायुधस्य शरीरं] स्मर[7]वपुः न [
भस्मीकृतमपि तु रूपातिशयान्वितम् [अमुम्] एनं [देवं]
[उदीक्ष्य] दृष्ट्वा [ व्रीडात् ] लज्जया स्वयम् एव असौ का
[संन्यस्तदेहः] उत्सृष्टकायः । कथं[8] जितोऽहमेतेन सुरूपतयेति
भाविता जीवितःयेन प्रणादुत्तरेण । व्रीडाशब्दः स्त्रीपुंसयोः ॥ ६६
अनेन सम्बन्धमित्यादि ॥ अन्या सखी प्राह – हे आलि
[मनोरथप्रार्थितं सम्बन्धं] मनोरथाभिलषितसंबन्धम्[9] अनेन देवेन
दिष्ट्या सम्बन्धं [अवाप्य] प्राप्य [शैलराजः] नगराय.
भूमि[10]रक्षणोद्यतरम् अपि [मूर्धानं] शिर इदानीम् [उच्चैस्तरम्]
[वक्ष्यति] धारयिष्यति । ईश्[11]जामातृकत्वमौन्नत्यकारणम् ।
इति निपात आनन्दार्थे. । [12]सानन्दं मङ्गलेनाह्ना कल्याणमस्तु वा ।[13]॥६७
एवंविधाः कथा. शृण्वन् त्रिनेत्रो नगेशावासमाप[14] ।
क्षुभ्नादित्वाण्णत्वाभावः[15] ॥ ६८ ॥

१ कुल्कम्–अत्र 'चतुर्भि' इत्यसमीचीन पाठ । 'पञ्चभि कुल्कम्' इति पाठ एव न्याय्य । २. 'मृग वृत्तयो'–नास्ति मुद्रा ३ 'उमया'–अपा – ब भ ल मुद्रा ४ उत्सङ्गस्थानम्–मुद्रा ५ 'वितथ'–अपा – व न मुद्रा ६ अहो, एष स्तृयो रम्या चेयमिति–च भ ल न ज ७ समस्त–मुद्रा ८ आलोक्य–च मुद्रा ९ कष्टम्–भ व न मुद्रा. १० मनोऽभिलषितम्–मुद्रा ११ पृथिवी०–मुद्रा १२ सर्वं अर०–मुद्रा १३ १३ 'सानन्द वा–नास्ति, मुद्रा १४ हिमाद्रयमाददत्–मुद्रा १५ द्र पा० सू० ८–४–३९

तावत्पताकाकुलमिन्दुमौलिरुत्तोरण राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वन्ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥६९॥

१ ०द्युतीनि–म०

तावत्पताकेत्यादि ॥ यावदेव पुरवनिता इत्थमूचु । तावत् [इन्दुमौलि] ईश' [राजपथ] महापथ [प्रपेदे] आप' । [प्रासादशृङ्गाणि] सौधशिखराणि [दिवा] अहनि अपि [ज्योत्स्नाभिषेकद्विगुणद्युतीनि] चन्द्रिकास्नानसिततराणि [कुर्वन्] विदधन्' । कीदृश राजपथम् । [पताकाकुल] वैजयन्तीसकटम् । ऊर्ध्वी'कृतानि तोरणानि यत्र तत् उत्तोरणम् ॥६९॥

१ शशिशेखर मुद्रा २ आससाद–च न ३ रचयन्–मुद्रा ४ उर्ध्वी०–मुद्रा

ततोऽवतीर्याच्युतदत्तहस्तः शरद्घनाद्दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन कक्षान्तराण्यद्रिपतेर्विवेश ॥७०॥

१ तत–म २ कक्षा० म मुद्रा

ततोऽवतीर्येत्यादि ॥ [तत] अथ शिव' [अच्युतदत्तहस्त] हरेः करमवलम्ब्य [कमलासनेन] ब्रह्मणा' पूर्वं क्रान्तानि कक्षान्तराणि विवेश । किं कृत्वा । उक्ष्ण वृषभात् [अवतीर्य] अवरुह्य । कुत इव क इत्याह । [शरद्घनात्] सिताच्छदभ्रात् दीधितिमान् अर्को यथावतरति ॥ ७० ॥

१ हर –म २ २ पूर्वाक्रान्ता सप्तकक्ष्या हिमवतो–मुद्रा

तमन्वगिन्द्रप्रमुखाश्च देवाः सप्तर्षिपूर्वा परमर्षयश्च ।
गणाश्च गिर्यालयमभ्यगच्छेन्प्रशस्यमारम्भमिवोत्तमार्थाः ॥७१

१ ०मन्वगच्छन्–चा  २ प्रशस्तमा०– म चा

तमन्वगिन्द्रेत्यादि ॥ त भगवन्तम् अन्वग् पश्चात् देवा [परम] मुनय [गणा] पार्षदाश्च [गिर्यालय] हिमालयम् अभ्यगच्छन् प्राविशन् [प्रशस्य] यशोनिमित्तम् आरम्भमुत्तमार्थां श्रेष्ठवस्तूनि अनुसरन्ति । किलार्थे प्रशस्ता कर्म सिद्ध्यति । अन्वगिति पश्चादर्थे ॥ ७१ ॥

१ किल प्रयुक्तार्थं यशस्य मुखा

तत्रेश्वरो विष्टरभाग्यथावत्सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीते प्रत्यग्रहीत्सर्वममन्त्रवन्ध्यम् ॥७२॥

१ दुगूले मुखा  २ ०वर्जम्–भ स

तत्रेश्वर इत्यादि ॥ तत्र श्वशुरगृहे ईश्वर भगवान् विष्टरम् आसनस्थोऽधिनाथदत्तं सरत्न रत्नयुतम् अर्घ्यम् अर्घादिक च मधुमत् माक्षिकान्वितम् मधुपर्कमित्यर्थः । [नवे दुकूले] प्रत्यग्र च वासोयुगल एतद् [सर्वम्] अखिलम् अमन्त्रवन्ध्य समन्त्रम् आददे । मर्घाऽर्चा तदर्थ मुदकमर्घ्यम् । 'पादार्घाभ्यां च' [पा० सू० ५–४–२५] इति यत् । मन्त्रेण वन्ध्यं शून्य मन्त्रवन्ध्यम् । ततो नञ्समास । यथावदिति विधिवद् ॥ ७२ ॥

१ 'अथ उपनयनविनिपणम् । अमन्त्रवन्ध्यमिति तु प्रतिग्रहक्रियाया '–अपा–मुखा

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः[1] ।
वेलासकाश[2] स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥७३॥

१ ०रै म मुखा  २ ०समीपम्–म

दुकूलेत्यादि ॥ स वर दुकूलवासा सितपट्टाम्बरधर [विनीतै] सविनयै अवरोधदक्षै कञ्चुकिभि [वधूसमीपम्] उमासमीप निन्ये नीत । यथा [नवै] प्र यथोदित [चन्द्रपादै] शशिकिरणै [स्फुटफेनराजि] प्रकटडिण्डीरावलि [उदन्वान्] समुद्र [वेलासकाश] वेलापार्श्वं नीयते । तदुदये तस्योल्लासात् । इयस्यां वध्यमान, गौर्या वेला, अन्त पुरपतीनां शशिरश्मयो दुकूलस्य फेनपुञ्ज । निन्ये इति कर्मणि ॥ ७३ ॥

१. ०रधे –मुखा

तयो विवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥७४॥

१. प्रवृद्धा०–म. स.

तया विवृद्धेत्यादि ॥ [तया] उमया [विवृद्धाननचन्द्रकान्त्या] स्फीतसंपूर्णवदन[1]मृगाङ्करुचा संसृज्यमानः [शिवः] हरः [प्रफुल्लचक्षुःकुमुदः] विकसितनेत्रकैरवः [प्रसन्नचेतःसलिलः] प्रसन्नमनोजल इव [अभूत्] आसीत् । नेत्राणां मनसि चाऽस्य विकास आसीदित्यर्थः । विवृद्धेन्दुकान्त्या [शरदा] शरच्छ्रिया संयोज्यमानः लोकः जगद्यथा निर्मलसलिलो विकसितकुमुदश्च भवति । तदा ह्यम्भः[2] प्रसीदति कैरवाणि विकसन्ति शशी कान्तिमान् च भवति ॥ ७४ ॥

१. स्फीतमुद०–मुद्रा.     २. तोयम्–मुद्रा

तयोः समापत्तिषु कातराणि किञ्चिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणां [1]तत्क्षणमन्वभूवन्नन्योन्यलोलानि विलोचनानि ॥७५॥

१. आनशिरे मनोज्ञाम्–स

तयोः समेत्यादि ॥ तत्क्षणं संयोगसमये तयोः साभिलाषाणि [विलोचनानि] नेत्राणि[1] ह्रीयन्त्रणां त्रपामुकुलितत्वं[2] अन्वभूवन् दधुः[3] । कीदृशानि । समापत्तिषु अन्योन्यसंप्राप्तिषु [कातराणि] अधीराणि ग्रहणमशक्तानि, अतश्च किञ्चिन्मनाक् [व्यवस्थापितसंहृतानि] व्यवस्थापितानि, अपाङ्गक्षिप्तानि, अन्तरं लज्जया संहृतानि संकोचितानि[4] । अत एव ह्रीयन्त्रणामापुः । ह्रियन्त्रणामानशिरे मनोज्ञामिति पाठान्तरम् ॥७५॥

१. नयनानि–मुद्रा.     २. लज्जामुकुलितत्वम्–ब. न. लज्जामुकुलनम्–मुद्रा.
३. अवापुः–अ. ब. न. ब. मुद्रा.     ४. निवर्तितानि–मुद्रा.

तस्याः करं शैलगुरूपनीतं जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
उमात्मना[1] गूढतनोः स्मरस्य तच्छङ्किनः पूर्वमिव प्ररोहम् ॥७६॥

१. उमातनौ–म. मुद्रापाठः.

तस्याः करमित्यादि ॥ तस्याः उमायाः [करं] पाणिं [शैलगुरूपनीतं] हिमवता मेलितं [ताम्राङ्गुलिं] लोहितकराग्रकम् [अष्टमूर्तिः] हर

[जग्राह] आददे ताम्रन्यादुत्प्रेक्षते । उमात्मना गूढतनोः गौरीरूपेण प्रच्छन्नवपुषः स्मरस्य मदनस्य [पूर्वं प्ररोहं] प्रथमाङ्कुरम्[1] इव । कामेन हि नत्र[2] उत्पत्तव्यम् । उत्पित्सोश्च सर्वस्य ताम्राङ्कुरस्वरूपं जायते । उमारूपेण तस्य गुप्तशरीरत्वं शर्वस्य शङ्कावशात्[2] ॥ ७६ ॥

१. प्रथमं अङ्कुरम्–व. म. व. २...२. तन उत्पत्तव्यमिति । उत्पत्तेश्च पूर्वं ताम्राङ्कुरोद्गमो भवति–मुद्रा

रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥७७॥

रोमोद्गम इत्यादि ॥ करसंस्पर्शवशात् [उमायाः] गौर्याः [रोमोद्गमः] रोमाञ्चः [प्रादुरभूत्] उत्पादि । [पुङ्गवकेतुः] वृषभध्वजश्च [स्विन्नाङ्गुलिः] घर्मितकरशाखः [आसीत्] अभूत् । अतश्चोत्प्रेक्षते । हरगौर्योः [पाणिसमागमेन] करसंयोगेन [मनोभवस्य वृत्तिः] मनोभववृत्तिः तयो [सम विभक्ता] तुल्यभागीकृता इव । स्वेदरोमाञ्चयोः हि कामवृत्तयस्तद्वशादुत्पत्तेः । तदुक्तम्[1]–

'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः'[1] ॥७७॥

१...१. 'तदुक्तम्......स्मृताः'–नास्ति–च. म. ब. न. ल. मुद्रा.

प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।
सांनिध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥७८॥

प्रयुक्तपाणीत्यादि ॥ अन्यत् अपि [वधूवरं] स्त्रीकुमारं [प्रयुक्तपाणिग्रहणं] कृतविवाहं विवाहकाले यत् [अग्र्याम्] उत्कृष्टां [कान्तिं] श्रियम् अनयोः गौरीश्वरयोः [सांनिध्ययोगात्] सन्निवेशात् पुष्यति प्राप्नोति । तदा तस्य [उभयस्य] द्वयस्य स्वयं [श्रीः] शोभा किम् इति कविभिः [कथ्यते] उच्यताम् । यदनुप्रवेशादन्यस्य विवाहे शोभा भवति, तत्र तयोः स्वयं कान्तिरवश्यमेव सर्वातिशायिनी । वधूवरमिति सर्वद्वन्द्वो विभाषया एकवद् भवति[1] ॥ ७८ ॥

१. द्र. म० भा० २–२–२९

तौ दंपती त्रिः परिणीय वह्निं कराग्रसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधास्तस्मिन्समिद्धार्चिषि लाजमोक्षम् ॥७९॥

१. अन्योन्य०-ग. म. चा.

तौ दम्पतीत्यादि ॥ स पुरोधाः तौ दम्पती वधूवरौ त्रिः वारत्रयम् [ वह्निम् ] अनलं [ परिणीय ] प्रदक्षिणीकृत्य ततः [ वधूं ] केवलामेव गौरीं [ समिद्धार्चिषि ] स्फुरच्छिखे'ऽग्नौ [ लाजमोक्षं ] लाजक्षेपं [ कारयामास ] अचीकरत् । [ कराग्रसंस्पर्शनिमीलिताक्षौ ] कराग्रसंस्पर्शेन सुखानुभावाल्लज्जया च निमीलिताक्षौ सङ्कुचितनेत्रौ[२] । दम्पती इति कर्मपदम्[३] ॥ ७९ ॥

१. प्रसरज्ज्वाले-अपा.-ल.        २. संकुचन्नेत्रौ-मुशा.
३. 'परिणीय प्रदक्षिणीकरणम् । ण्यर्थश्चात्र बोद्धव्यः ।
अन्यथा भिन्नकर्तृकत्वात् क्त्वा दुर्लभो भवेत्-अपा. मुशा.

सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥८०॥

सा लाजधूमेत्यादि ॥ सा वधूः [ गुरूपदेशात् ] विरञ्चाज्ञया लाजधूमाञ्जलिम् आदाय [वदनं] मुखं [ निनाय ] अनयद्'जिघ्रत् । यतः इष्टगन्धं सौरभं हि तत्र श्रेष्ठम्[२] । स च लाजधूमः [ कपोलसंसर्पिशिखः कपोले प्रसरच्छिखत्वात् [ मुहूर्तं ] तत्क्षणं तस्याः [ कर्णोत्पलतां ] श्रोत्रोत्पलत्वं [ प्रपेदे ] भेजे । नीलकुवलयनिभत्वात्[३] ॥ ८० ॥

१. आनयत्-च.                    २. आघ्रेयम्-म. प्रेयम्-मुशा.
३. कुवलयनिभत्वात्-म. ध. ल., ०कुवलयनिभत्वात्-मुशा.

तदीषदार्द्रारुणगण्डलेखमुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंसमाचारधूमग्रहणाद्बभूव ॥८१॥

तदीषदित्यादि ॥ तत् [ वधूमुखम् ] उमावदनम् [ आचारधूमग्रहणात् ] आचारधूमपानात् एवंविधं [ बभूव ] अभवत् । कीदृशम् । [ ईषदार्द्रारुणगण्डलेखम् ] ईषन्मनागार्द्रे अरुणे च गण्डलेखे यत्र । अक्ष्णोः [ उच्छ्वासिकालाञ्जनरागम् ] उच्छ्वासी कज्जलरागो यत्र । 'यविकाव-

कज्जलरागम्[1] । तथा [ क्लान्तयवावतंसं ] म्लानो यवाङ्कुरो यत्र धूमग्रहणस्याचारत्वे लोकोपचारादनुष्ठानात् ॥ ८१ ॥

१ 'सविकाश रागम्'–नास्ति–मुद्रा

वधूं द्विजः प्राह तवैष वत्से वह्निर्विवाहं प्रति पूर्वसाक्षी[1] ।
शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥८२॥

१. धर्मसाक्षी–म

वधू द्विज इत्यादि ॥ ततः [ वधू ] गौरीं द्विज ब्रह्मा (प्राह) चत् किमित्याह [ शिवेन ] ईश्वरेण [ भर्त्रा ] पत्या सह त्वया [ मुक्तविचारया त्यक्तविचारया निःशङ्कया[1] [ धर्मचर्या ] धर्माचरणं [ कार्या ] कार्यम् सहधर्मचर्या हि साध्वीव्रतम् । अत्र च [ विवाह प्रति ] विवाहे तत्र [ वह्नि ] अग्नि [ पूर्वसाक्षी ] प्रथमसाक्षी । तेन चलितुमस्मा युज्यत इति भाव,। चरणं चर्या । गद्मद [ पा० सू० ३-१-१०० ] इति यत् ॥ ८२ ॥

१. निःसंशयम्–मुद्रा

आलोचनान्तं श्रवणो[1] वितत्य[2] पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्बणमेदयेव माहेन्द्रमम्भः प्रथमं पृथिव्या ॥८३॥

१. श्रवणे–मुद्रा २ निहत्य–मुद्रा अ ना.

आलोचनान्तमित्यादि ॥ तद् [ गुरो ] ब्रह्मणो [ वचनं ] वाक्यं [ आलोचनान्त ] नेत्रपर्यन्त [ श्रवणो ] कर्णौ [ वितत्य ] विस्तार्य [ भवान्या ] गौर्या पीतं श्रुतमङ्गीकृतम् । यथा [ निदाघकालोल्बणतापया ] ग्रीष्मसमये प्रचण्डरविरुचा तप्तया [ पृथिव्या ] विश्वम्भरया[1] प्रथमं [ माहेन्द्रम् अम्भ ] मेघजल पीयत इति प्रहर्षकथनम् ॥ ८३ ॥

१. क्षोण्या–म ह मुद्रा

ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच ॥८४॥

ध्रुवेण भर्त्रेत्यादि ॥ ततः सा ध्रुवेण शाश्वतेन [ भर्त्रा ] पत्या

[ध्रुवदर्शनाय] ध्रुवतारावलोकप्रश्नाय [प्रयुज्यमाना] च उपयुज्यमाना[2] [आननं] मुखम् [उन्नमय्य] उत्क्षिप्य [ह्रीसन्नकण्ठी] व्रीडया सृष्टगला[3] 'दृष्टः असौ' इति [कथमपि] कृच्छ्रात् [उवाच] जगाद । एवंविधो हि लोकाचारः ॥ ८४ ॥

१. ०दर्शन०-मुद्रा. २. चोद्यमाना-मुद्रा. ३. व्रीडासृष्टगला-व. न. मुद्रा.

इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥८५॥

इत्थं विधिज्ञेनेत्यादि ॥ [विधिज्ञेन] विवाहसमाचारविदा पुरोहितेन ब्रह्मणा इत्थं पूर्वोक्तविधिना [प्रयुक्तपाणिग्रहणोपचारौ] उपदिष्टोद्वाहविधानौ तौ ईश्वरौ अनन्तरं [पद्मासनस्थाय] नलिननिविष्टं [पितामहाय] पितामहं[1] प्रणेमतुः ववन्दाते । माता च पिता च पितरौ मातापितरौ । पितामहाय इति शिरःप्रहणव्याख्यानम् । द्वितीया तु व्याख्या ॥ ८५ ॥

१. ब्रह्माणम्-मुद्रा.

वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि सोऽष्टमूर्तौ त्वाशास्यचिन्तास्तिमितो बभूव ॥८६॥

१. ०मूर्तेः-अ. ना.

वधूर्विधात्रेत्यादि ॥ ततः प्रणमितेन [विधात्रा] वेधसा [वधूः] गौरी प्रतिनन्द्यते स्म आशास्यते स्म । किमित्याह । [कल्याणि] भद्रे वीरप्रसवा भव इति विक्रान्तपुत्रा भूयाः । [अष्टमूर्तौ] महेश्वरे तु [सः] असौ [वाचस्पतिः] वागीश्वरः [सन्] अपि [आशास्य चिन्तास्तिमितः] अभिलषणीये चिन्तानिश्चलः [बभूव] अभूत्[1] । परिपूर्णत्वादस्य मनीषितस्या[2] भावात्[3] ॥ ८६ ॥

१. 'अभवत् किमस्मायाशास्यमिति'-अरा-मुद्रा. २. आशासनीयस्या०-ल. य. भ. व. न मुद्रा. ३. 'इति भावः'-अरा-मुद्रा.

क्लृप्तोपचारां[1] चतुरस्रवेदीं[2] तावेत्य पश्चात्कनकासनस्थौ ।
जायापती लौकिकमेषितव्यम्[3] आर्द्राक्षतारोपणमन्वभूताम् ॥८७॥

१. ०चारा-मुद्रा. २. ०वेदिं-मुद्रा. ३. ०मेषणीयमा०-न.

क्लृप्तोपचारामित्यादि ॥ तत्र तौ [जायापती] वधूवरौ [क्लृप्तोपचारां] दत्तोपचारां[1] [चतुरस्रवेदीं] चतुरस्रां वेदीं स्थलीम् [एत्य] आगत्य यात्वा आर्द्राक्षतारोपणम् अपत्यवर्तनिधानम् अन्वभूताम् आसेवतु । यतस्तद् लौकिकम् पर्यितव्यं लोकोपचाराचतुष्टयम् । सम्पन्नविवाहयोर्हि विप्रैः[2] स्वजनैरविधवाभिश्चार्द्रा यवा देया इति लोकाचारादृद्यत्र्यक्तरसम् ॥ ८७ ॥

१ दत्तपुष्पप्रकराम्–व. व न. मुद्रा. २. ब्राह्मणैः–व. मुद्रा.

पत्रान्तलग्नैर्जलबिन्दुवृन्दैराकृष्टमुक्ताफलजालशोभम् ।
तयोरुपर्यायतनालदण्डमाधत्त लक्ष्मीः कमलातपत्रम् ॥८८॥

२. ०जाले–म., ०वृन्दैः–व

पत्रान्तलग्नैरित्यादि ॥ तयोः गौरीश्वरयोः [उपरि] शिरसि साक्षात् [लक्ष्मी] कमला कमलातपत्र छत्रं आधत्त दध्रे । कीदृशम् । पत्रान्तलग्नैः[1] लग्यमानैः [जलबिन्दुवृन्दैः] मुदकणावस्थानैः [आकृष्टमुक्ताफलजालशोभम्] आकृष्टा आनीता[2] मुक्ताफलजालशोभा यस्य । तथा [आयतनालदण्डम्] आयत नालमेव दण्डो यस्य । छत्रं हि दण्डमौक्तिकैर्भाव्यम् ॥८८॥

१. पत्राग्र०–मुद्रा. २. 'आनीता' नास्ति–र.

द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥८९॥

द्विधा प्रयुक्तेनेत्यादि ॥ सरस्वती अपि तत् मिथुनं युगलं [द्विधा प्रयुक्तेन] द्विभेदेन वाङ्मयेन वचनप्रबन्धेन नुनावास्तुत । असौ तद्द्विभेदत्वमाह । वरं पाणिग्राहं[1] संस्कृतेनाशंसते स्म । वधू [सुखग्राह्यनिबन्धनेन] सुखेनाक्लेशेन ग्राह्यं बोध्यं निबन्धनं रचना यस्य तेन प्राकृतेनेत्यर्थः । तद्धि सुबोधं युवतिजनानुचितम् । वरेण्यमुत्कृष्टम् । वाचां विकारो वाङ्मयं गद्यपद्यम् ॥ ८९ ॥

१. ०गृहीतारं–मुद्रा.

तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९० ॥

३. प्रतिभिन्न०–व.

तौ सन्धिष्वित्यादि ॥ तौ दम्पती [अप्सरसां] सुरवधूप्रयुक्तम् [आद्य] प्रधानं पुरातनं वा प्रयोगम् नाट्यम् अपश्यताम् ऐक्षिषाताम् । कीदृशम् । मुख-प्रतिमुख-गर्भ-विमर्शन-निर्वहणाख्येषु सन्धिषु [व्यञ्जित-वृत्तिभेद] व्यञ्जितः प्रकटीकृतो वृत्तीनां सात्वती-आरभटी-कौशिकी-भारतीनां भेदो विशेषो यत्र । सन्धिविभागेन हि तत्र वृत्तीनामवस्थानात् । तथा प्रसङ्गेन वृत्तीनामवस्थानयुक्तिमाह-

'शृङ्गारहास्यबीभत्सा रौद्रवीरभयानकाः ।
करुणाद्भुतशान्ताश्च रसाः स्युर्नव भावजाः ॥'[1]

तथा रसान्तरेषु शृङ्गारहास्यादिषु[2] अष्टसु रसविशेषेषु [प्रतिबद्ध-राग] प्रतिबद्धोऽवस्थितो रागः सम्बन्धो यत्र । रसान्तरसञ्चारे विरागता यत्र न जायत इत्यर्थः[3] । ललिताङ्गहारं ललितः सुकुमारोऽङ्गहारो नृत्यं यत्र, कोमलोर्ध्वभेदेन हि द्विविधं नृत्तम्[4] ॥ ९० ॥

१ १ 'शृगार भावजा'-नास्ति-भ ए ग न य  २ शृगारादिषु-भ. ए न य व मुद्रा  ३ न जातेत्यर्थ -मुद्रा  ४ नृत्तम्-च भ ए मुद्रा

५ 'पञ्चसन्धिश्चतुर्वृत्तिश्चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतं नाटकं कवयो विदुः ॥
यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः ।
यतो मनस्ततो भावो यतो भावस्ततो रसः ॥' इति पादटिप्पणी-
भधिकपाठ । -भ १०

देवास्तदन्ते हरमूढभार्यं किरीटबद्धाञ्जलयो[1] निपत्य ।
शापावसाने[2] प्रतिलब्धमूर्तेर्ययाचिरे[3] पञ्चशरस्य सेवाम् ॥९१॥

१ ०ञ्जल०-मुद्रा अ ना  २ ०वसाने-भ चा  ३ ०ल्ब०-भ ग.

देवास्तदेत्यादि ॥ तत्र तदन्ते नाट्यावसाने सर्वे [देवाः] सुराः भूमौ निपत्य [ऊढभार्यं] पत्नीप्राप्तं [हर] भवं [पञ्चशरस्य] विषमेषोः सेवां ययाचिरे प्रार्थयन्त । [किरीटबद्धाञ्जलयः] कीरीटेषु बद्धा विरचिता अञ्जलयो येषां ते तथोक्ताः । कीदृशस्य । [शापावसानप्रतिलब्धमूर्तेः] शापावसानेन लब्धमूर्तेः जनमनसि प्राप्तवपुषः । एवं ह्युक्तम्-'परिणेष्यति पार्वतीम्' [कुमार० ४-४२] इत्यादि ॥ ९१ ॥

१. असमेषोः—मुद्रा. 'कामस्य'—अपा.—च. म. ल.    २. दष्टाः लग्नाः—मुद्रा.
३. भूयः शरीरं येन—मुद्रा.

तस्यानुमेने भगवान्विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।
काले प्रयुक्ता[1] खलु काल[2]विद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ॥९

१. कालप्रयुक्ता—म. चा.    २. कार्य०—म. स.

तस्यानुमेनेत्यादि ॥ ततो गीर्वाणाभ्यर्थितः [ भगवान् ] [ विमन्युः ] विगतरोषः[1] कामस्य [ आत्मनि ] आत्मदेहे अपि [सा. पृषत्कानां [ व्यापारं ] पातम् [ अनुमेने ] अङ्गीचकार । यस्मात्[2] विद्भिः [ काले प्रयुक्ता ] अवसरकृता [ भर्तृषु ] प्रभुषु विज्ञापना [ एति ]सिद्ध्यति कृतविवाहत्वाच्च स्मरावसरः[3] ॥ ९२ ॥

१. ०विरोधः—च. मुद्रा. २. 'कारणात्'—अपा.—र. न. ३. सोऽवसर.—र. भ ०त्वादसावसरः—मुद्रा.

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः[1] करेण ।
कनककलशरक्षा[2]भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥९३॥

१. ०दधानः—मुद्रा.    २. ०युक्तं—म.

अथ विबुधेत्यादि ॥ [ अथ ] ततः[1] [ विबुधगणान् ] विरञ्चादीन् देवसंघान् [ विसृज्य ] उत्सृज्य [ क्षितिधरपतिकन्याम् ] अचलेश्वरसुतां[2] [ करेण ] हस्तेन आददानः [ कौतुकागारं ] मङ्गलान्तःपुरम् [ इन्दुमौलिः ] शिवः [ आगात् ] । कीदृशम् [कनककलशरक्षाभक्तिशोभासनाथं] कनककलशाः सुवर्णघटा रक्षा रत्नौषधिरूपा भक्त्यो विच्छित्तयः पुष्पशष्प-चूर्णादिरचनाभिर्या शोभा दीप्तयस्ताभिः सनाथं युक्तं सकलम् । तथा [ क्षितिविरचितशय्यं ] क्षितौ भूमौ न तु पर्यङ्कादौ विरचिता शय्या यत्र । त्रिरात्रं पञ्चरात्रं[3] वा अधःशायित्वात् ॥ ९३ ॥

१. 'शशिशेखरः'—अपा—मुद्रा.  २. 'पार्वतीम्'—अपा. ब. म., नगेन्द्रसुतां—मुद्रा.
३. षड्रात्रं—मुद्रा.

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृतोत्क्षेपमीशः[1] ।
अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
प्रमथ[2]मुखविकारैर्हासयामास गूढम् ॥९४॥

१. तत्कृताक्षेपमीशः—म. २. प्रथम०—चा.

नवपरिणयेत्यादि ॥ तत्र वासागारे[1] [ईशः] भगवान् त्र्यक्षः [गौरीं] कान्तां प्रमथमुखविकारैः पार्षदानां वक्त्रविकारैः गूढम् अप्रकटं [हासयामास] अहासयत् । यतः [शयनसखीभ्यः] शयने सह शायिन्योश्च याः सख्यस्तासां विश्वस्तानाम् अपि कथञ्चित् दत्तवाचम् । अतश्च यदासावुक्तापि लज्जया गिरं नार्पयति न मिश्रयति[3] नोदीरयति[4] तदा विकृतवपुषान् गणान् सृष्ट्वा गूढं जहासेत्यर्थः । स्मितादिविभावार्थं भगवान् बहुविकृतीः कारयते[5] । ततस्ताभिरनुमोदयित्वा तामीश्वरो-ऽजीहसदित्यर्थः । कीदृशीं ताम् । [तत्कृतोत्क्षेपं] तेन हरेण कृतमुत्क्षेप-मुन्नमनं यस्य तद् वदनम् अपहरन्तीं अन्यतः कुर्वन्तीम् । यतः [नवपरिणयलज्जाभूषणां] नवो यः परिणयो विवाहस्तेन या लज्जा व्रीडा सैव भूषणं यस्याः सा ताम् । मालिनीवृत्तमिति भद्रम्[6] ॥ ९४ ॥

१. वासगृहे—मुद्रा. २. प्रमथानाम्—ब. म. मुद्रा. ३. नामिश्रयत्—मुद्रा.
४. 'नोदीरयति'—नास्ति—मुद्रा. ५. वक्त्रविकृतीः कुरुते—मुद्रा.
६. 'श्लोकद्वयेऽपि'—अत्र—मुद्रा.

आनन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपञ्जिकायां पार्वती-पाणिग्रहणवर्णनो नाम सप्तमः सर्गः ।[1]

१. इति श्रीकुमारसंभवे सप्तमः सर्गः —ब. इति श्रीकुमारसम्भवे महाकाव्ये कवि-कालिदासकृतौ टीकाया सुबोधदुबोधे आनन्ददेवायनिवल्लभविरचिताया कुमारसंभवपञ्जि-काया सप्तमः सर्गः । —म. इति श्रीकुमारसम्भवे महाकाव्ये कालिदासकृतौ टीकाया आनन्ददेवायनिवल्लभविरचिताया कुमारसम्भवविवृतौ सप्तमः सर्गः —च. इत्यानन्ददेवाय-निवल्लभदेवविरचिताया कुमारसम्भवलघुटीकाया उद्धृतसाराया सप्तमः सर्गः समाप्तः —ल. इति कुमारसम्भवे महाकाव्ये आनन्ददेवायनि वल्लभविरचिताया उमापरिणयो नाम सप्तमः सर्गः समाप्तः । —न, इत्या ..टीकाया सप्तमः सर्गः —शा. इत्यानन्ददेवा-यनवल्लभदेवविरचिताया कुमारसंभवटीकाया सप्तमः सर्गः । —मुद्रा.

॥ श्रीः ॥

आनन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपञ्जिकायां

# अष्टमः सर्गः ।

अथोमा[1]परिणयनमुपवर्ण्य कुमारोत्पत्तिनिदानस्य [illegible] निधुवनवर्णनं चिकीर्षुर्नववधूवृत्तान्तवर्णनं तावदाह–

१. पार्वती०–ल.

पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभूत्कामदोहदसुखं मनोहरम्[1] ॥ १ ॥

१. कामदोहदमनोहर वपु –स., ०दोहद०–अ. ना.

पाणिपीडनेत्यादि । अथ [ शैलराजदुहितुः ] पार्वत्याः [ हरं ] प्रति [ पाणिपीडनविधेः अनन्तरं ] करग्रहणानन्तरं [ कामदोहदसुखं ] कामदोहदेन मन्मथाभिलाषेण सुखं[1] [ मनोहरम् ] उपजोषरम्यम्[2] अभूत् । कुतः । [ भावसाध्वसपरिग्रहात् ] भावसाध्वसयोः प्रीतिभीत्योः परिग्रहात् आश्रयणात् । स्वाभाविकं हि तत्रोमाया नवोढत्वाच्च साध्वसम् । अस्मिन्सर्गे रथोद्धतावृत्तम् ॥ १ ॥

१. सुरतम्–ल. न., अस्मिन् सर्गे मुद्रितशारदाया प्रायः भिन्नः पाठः दृश्यते ।

इदानीमेतदेव वर्णयितु[1]माह–

व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥ २ ॥

१. विवारयितुम्–ल.

व्याहृता प्रतीत्यादि ॥ सा गौरी [ तथा अपि ] एवंविधाऽपि [ पिनाकिनः ] शूलिनः [ रतये ] प्रीत्यै एव आसीत् । सा हि व्याहृता प्रश्नाय प्रश्नं चोदिता[1] [ प्रतिवचः ] प्रतिवचनं न [ संदधे ] ददाति । [ अवलम्बितांशुका ] आश्रितवसना गन्तुम्[2] [ ऐच्छत् ] इच्छति । [ शयनं ]

१. नोदिता–ल.
२. 'यातुम्'–अपा.–ल.

शयने च [ पराङ्मुखी ] परावृत्य [ सेवते स्म ] आस्ते । तथापि हरस्य प्रीतिमकरोत् । नवोढायाः साध्वसस्यैवालंकारत्वात् । तदुक्तम्-'दृष्टा दृष्टिमधो ददाति' इत्यर्थः ॥ २ ॥

कैतवेन शयिते कुतूहलात्पार्वती प्रतिमुखं निपातितम् ।
चक्षुरुन्मिषति सस्मितं प्रिये विद्युदाहतमिव[1] न्यमीलयत् ॥ ३ ॥

१. विद्युतेव विहितं —मुद्रा.

कैतवेनेत्यादि ॥ [ पार्वती ] गौरी कुतूहलात् कर्णनिहितं चक्षुः [ विद्युदाहतं ] तडिदाहतम् इव न्यमीलयत्, पिदधौ । यतः कैतवेन व्याजेन [ शयिते ] सुप्ते सति प्रिये वीक्ष्य किमेषा करोतीति । ततस्तस्मिन् सस्मितं चक्षुः उन्मिषति सति विकसिताक्षे । यावदेव सा वीक्षितुमारब्धा तावदीश्वरो हसन्नेवमुदमीलयत् ॥ ततः सा विद्युतेव आहतं[1] स्वचक्षुः [ न्यमीलयत् ] समकोचयत्[2] ॥ ३ ॥

१. निहतम्-ल. २. 'समकोचयत्' नास्ति-ल, न.

नाभिदेशनिहितः सकम्पया शङ्करस्य रुरुधे तया करः ।
तन्निितम्यमथ[1] चाभवत्स्वयं दूरमुच्छ्वसितनीविबन्धनम् ॥ ४ ॥

१. तद्दुकूलमथ-म. अ. ना.

नाभिदेशेत्यादि ॥ [ सकम्पया ] स्पन्दमानया [ तया ] उमया [ शंकरस्य ] पत्युः [ करः ] पाणिः रुरुधे अवष्टभ्यत यतः [ नाभिदेशनिहितः ] नाभिदेशे श्रोणीभागे निक्षिप्तः । अथ च कररोधेऽपि [ तन्नितम्बं ] तज्जघनं स्वयम् एव दूरम् अत्यर्थम् उच्छ्वसितनीविबन्धनं श्लथोच्चयग्रन्थनम्[1] [ अभवत् ] आसीत् । [2]पाणिस्पर्शेनैव शरीरोच्छ्वासात् ॥४॥

१. ०ग्रन्थिः-न. व. २. 'पाणि....स्याच्छ्वासात्'-नास्ति-ल. न.

एवमालि निगृहीतसाध्वसं शङ्करो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥ ५ ॥

एवमालीत्यादि ॥ सा सखीभिः इत्थम् उपदिष्टं [ प्रमुखवर्तिनि ] सम्मुखासीने [ प्रिये ] वल्लभे [व्याकुला] व्याकुलत्वात् [ न अस्मरत्]

विसस्मार[1]। किमुपदिष्टमित्याह। हे आलि। सखि निगृहीतसाध्वसं भयमपहाय[2] [शङ्कर] प्रियं त्वया पत्र [सेव्यताम्] आवर्जयितव्य इति। पत्रमिति यस्ताभिरुक्तो विधिः स बोद्धव्यः। उपदिष्टमिति भावः ॥५॥

१ व्यस्मरत्–ल　　　　　　　२ 'रहसि एकान्तेरे शयने'–अपा ल न

अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिगृह्य पार्वती मूर्धकम्पमयमुत्तरं ददौ ॥ ६ ॥

अप्यवस्तुनीत्यादि ॥ [प्रश्नतत्परं] पृच्छन्तं प्रियं पार्वती [वीक्षितेन] दृष्ट्या [परिगृह्य] गृहीत्वा [मूर्धकम्पमयं] शिरःकम्पेनास्य उत्तरं ददौ। न च वचसा, शालीनत्वात्। कीदृशं तम्। [अपि अवस्तुनि] असम्पुज्यमानेऽप्यर्थे प्रेमतत्परं लम्पटम्[1]। किमर्थम्। कथाप्रवृत्तये प्रश्नव्याजेनानया सह मे कथा प्रवर्ततामिति। सा त्वधापर्यादभिनयेन तमुत्तरयति ॥ ६ ॥

१ प्रश्नलम्पटम्–ल

शूलिनः करतलद्वयेन सा संनिरुध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत् ॥ ७ ॥

शूलिन इत्यादि ॥ रहसि [हृतांशुका] हृताम्बरत्वात् प्रियस्य [करतलद्वयेन] पाणिद्वयेन [नयने] नेत्रयुग[1] [संनिरुध्य] पिधायाऽपि मोघयत्नविधुरा निष्फलोद्यमाकुला [अभूत्] अभवत्। यत तस्य [ललाटलोचने] तृतीयेऽक्षिणि पश्यति। न हि तया तत्सन्निरुद्धम् ॥७॥

१ ०युगलम्–र न

चुम्बनेष्वधरदानवर्जितं[1] सन्नहस्तमदयोपगूहने[2] ।
क्लिष्टमन्मथमपि प्रियं प्रभोर्दुर्लभप्रतिकृतं वधूरतम् ॥ ८ ॥

१ ०दान०–व मुशा　　　　　　　　२ मिन्नहस्तसम्भोगगूहनम्–म अ ना

चुम्बनेष्वित्यादि ॥ तस्य [प्रभो] ईश्वरस्य वधूरतं नवोढानिधुवनं [दुर्लभप्रतिकृतं] कृतप्रतिकृतरहितत्वात् [क्लिष्टमन्मथं] कदर्थितमदनम् अपि प्रियं रन्तुरावर्जकं लज्जाया मूकप्रायत्वात्। तदेव दुर्लभप्रति

कृतत्वमाह-चुम्बनेषु [ अधरदानवर्जितम् ] अधरार्पणहीनम् । अदयोपगूहने ] निर्दयालिङ्गने [ सन्नहस्तम् ] उदासीनकरम् । प्रियकृते ह्यधरदाने कण्ठाश्लेषे चोष्ठार्पणं प्रत्यालिङ्गनं च कार्यम् । तच्चाऽसौ नववधूत्वान्न चकार ॥ ८ ॥

यन्मुखग्रहणमक्षताधरं दानमव्रणपदं नखस्य[1] यत् ।
यद्रतं च सदयं प्रियस्य[2] तत्पार्वती विषहते स्म नेतरत् ॥ ९ ॥

१. दत्तमव्रणपदं नरं च-स. अ. ना. २. हरस्य-स.

यन्मुखग्रहणमित्यादि ॥ [ प्रियस्य ] कान्तकृतं [ मुखग्रहणं ] चक्रुपानं यत् [ अक्षताधरम् ] अखण्डितोष्ठं यत् च [ दानं ] कररुहदानं [ अव्रणपदं ] अकृतक्षतं यत् च अन्यत् मुष्टिदानादिकं [रतं] सदयं तत् [ पार्वती ] गौरी [ विषहते स्म ] सेहे न तु इतरत् विपरीतं खरम् ॥ ९ ॥

रात्रिवृत्तमनुयोक्तुमुद्यतं सा प्रभात[1]समये सखीजनम् ।
नाकरोदपकुतूहलं ह्रिया शंसितुं तु[2] हृदयेन तत्वरे ॥ १० ॥

१. प्रभात०-ल. मुग्धा. २. च-म.

रात्रिवृत्तमित्यादि ॥ सा गौरी [ प्रभातसमये ] प्रत्युषसि[1] [रात्रिवृत्तं] निशाव्यापारम् [ अनुयोक्तुम् उद्यतं ] विपृच्छिषुं [ सखीजनम् ] आलिलोकम् [ अपकुतूहलम् ] अपगतकौतुकं[2] न [ अकरोत् ] व्यधात् । अथ च [ हृदयेन ] चेतसा तत् [ शंसितुं ] कथयितुं तत्वरे त्वरांचक्रे, वक्तुमियेषेत्यर्थः । एवंविधो ह्येष नवोढास्वभावः ॥ १० ॥

१. प्रत्यूषः काले-ल न. २. ०कौतूहलम्-ल. न.

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
प्रेक्ष्य बिम्बमनुबिम्बमात्मनः[1] कानि कानि न[2] चकार लज्जया ॥११॥

१. ०मुरबिम्बमा०-म. २. कान्यपि-अ. ना.

दर्पणे चेत्यादि ॥ सा देवी [ दर्पणे ] मुकुरतले [ परिभोगदर्शिनी ] अधरखण्डनादिकं प्रियोपभोगं द्रष्टुं प्रवृत्ता सती पृष्ठतः पश्चाद्भागे गुप्तं [ निषेदुषः ] निषण्णस्य [ प्रणयिनः ] कान्तस्य बिम्बं पुरः [ आत्मनः अनुबिम्बं ] आत्मबिम्बनिकटे दर्पणसंक्रान्तं [ प्रेक्ष्य ] विलोक्य कानि

कानि[1] वर्णयितुमशक्यानि वस्तूनि [ लज्जया ] ह्रिया न [ ' व्यधात् । विम्बस्य समीपे अनुबिम्बम्[2] ॥ ११ ॥

१. 'अपि'–अपा.–ल न. २. 'च पूर्वापेक्षया समुच्चये । एवमन्यत्र'–अपा.–ल

नीलकण्ठपरिभुक्तयौवनां तां विलोक्य जननी समाश्वसत् ।
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं वधूजनः ॥१२॥

नीलकण्ठेत्यादि ॥ ततो जननी मेना सुतां [ नीलकण्ठ' यौवनां] हरोपभुक्ततारुण्यां आलोक्य समाश्वसत् । [ हि ] [ वधूजन ] सुवासिन्यः [ मातु ] मातॄणां [ भर्तृवल्लभतया ] प [ मानसीं शुचं ] हृदयदुःखम् [ अस्यति ] अपहरन्ति समाश्वसादि गार्ग्यगालवयो. ॥ १२ ॥

वासराणि कतिचित्कथञ्चन स्थाणुना पदमकार्यत प्रिया[1] ।
जातमन्मथरसा शनैः शनैः सा मुमोच रतिदुःखशीलताम् ॥१३॥

१. रतमकारि चानया–म.

वासराणीत्यादि ॥ स्थाणुना भवेन [ कतिचित् ] [ वासराणि ] दिनानि [ प्रिया ] गौरी [ कथञ्चन ] कथञ्चित् पदम् अकार्यत स्थितिमग्राहत विश्रम्भ कारिता । अनन्तरं [ अनुभूतमन्मथरसास्वादात् [ शनै. शनै. ] क्रमेण सा [ रतिदुःखशीलतां रतौ सुरते दुःखशीलतां कष्टस्वभावत्व [ मुमोच ] अत्याक्षीत् । काम सुखानुभावात् सुरतं क्लेशापहमभूदित्यर्थ. । पदमिति पदस्थैर्ये । इति पश्चात् कर्मणि ॥ १३ ॥

सस्वजे प्रियमुरोनिपीडितं[1] प्रार्थितं मुखमनेन नाहरत् ।
मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥१४॥

१. ०निपीडनम्–म., ०निपीडिता–म.

सस्वजे प्रियमित्यादि ॥ [ उरोनिपीडितम् ] यत्र तत् तथा कृत्वाऽसौ गाढं [ प्रियं ] वल्लभं [ सस्वजे ] आश्लिष्यत् । तेन चुम्बनाय गृहीतं [ मुखं ] वक्त्रं न अहरत् नान्यतश्चकार । तथा [ मेखला-

प्रणयलोलता ] मेखलाप्रणये रसनाप्रार्थने जघनाम्बरग्रहणे चटुलत्व गतं [ हस्त ] प्रियपाणि [ शिथिलं ] मनाग् [ करोध ] अवष्टम्भात् अवारयत् । पूर्वं त्वेतद् विपरीतमखिलमासीत् ॥ १४ ॥

हाव[1]सूचितमदृष्टविप्रियं चाटुमत्[2] क्षणवियोगकातरम् ।
कैश्चिदेव दिवसैस्तयोस्तया[3] प्रेम रूढ[4]मितरेतराश्रयम् ॥१५॥

१ भाव०–त म
२ दार्ढ्यमाप्–म
३ तथा तयो –म, तयोस्तदा –मुद्रा
४ गूढ० म

हावसूचितमित्यादि ॥ तत [ कैश्चिदेव ] कतिपयरेव [ दिवसै ] अहोभि तयो दम्पत्यो एवविध प्रेम रूढम् इति प्रीतिरुत्पन्ना । कीदृशम् । [ हावसूचित ] हावेन चेष्टाविशेषेण सूचित कथितम् [ चाटुमत् ] प्रियवचोऽन्वितम् । [ क्षणवियोगकातर ] क्षणमात्रविरहेण च कातरमधीरहृदयाभिप्रायसूचकचेष्टाविशेषो भाव ॥ १५ ॥

तं यथात्मसदृशं वरं वधूरन्वरज्यत वरस्तथैव ताम् ।
सागरादनपगा हि जाह्नवी सोऽपि तन्मुखरसैकनिर्वृतिः[1] ॥१६॥

१ ०कनिर्वृतिमान् ॥

तं यथात्मेत्यादि ॥ सा देवी त पति [ आत्मसदृशम् ] आत्मानुरूप यथा येन प्रकारेण अन्वरज्यत अस्निह्यत् तथैव सोऽपि ता जायामिति । समानरागत्वकथनम् । एतदेव दृष्टान्तेन दृढयति । [ सागरात् ] सागरवर्जं हि [ जाह्नवी ] गङ्गा [ अनपगा ] अन्यत्र क्वचिन्न प्रसरति[1]। सोऽपि अब्धि तन्मुखरसैकनिर्वृति तस्या जाह्नव्या मुखरसेन वक्त्रेणोदकेन एका निर्वृतिरुल्लासो यस्य स तथोक्त । न हि गङ्गातोऽन्यया सरिता असौ पूरयितु शक्य । रक्तयोश्च दम्पत्योरन्योन्यमुखपाननिर्वृत्तिरन्यत्र वा न पानत्वमुचितम् । अन्वरज्यत इति कर्तरि सकर्मकत्वाच्च तमिति कर्म- सम्बन्ध । केचित्तु तमनु त प्रति कर्मप्रवचनीयमाहु[2] ॥ १६ ॥

१ प्रविशति–ल
२ सहासनसहशयनसहभोजनाच्छादनपानसमानदु खसुखसहजीवितमरणेषु समानम् । इति टिप्पण्यामधिकपाठ. –भ-१

शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया ।
शिक्षितं युवतिनैपुणं तया यत्तदेव गुरुदक्षिणीकृतम्[1] ॥१७॥

शिष्यतामित्यादि ॥ निधुवनोपदेशिनः सुरतोपाध्यायस्य [शङ्करस्य] हरस्य[1] रहसि शिष्यतां [प्रपन्नया] प्राप्तया यद् युवतिनैपुण्यं स्त्रीकौशलं [शिक्षितम्] अभ्यस्तम् । तदेव गुरुदक्षिणीकृतं हराय प्रतीपं दत्तम् । सर्वस्यैव तस्य तत्र प्रयोगात् । अन्तेवासिना हि गुरवे दक्षिणा देया[2] ॥ १७ ॥

१ वरस्य–ल न    २ 'समाप्तविद्येन सता'–अा.–ल. न.

दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्त[1]पल्लवा ।
शीतलेन निरवापयत्क्षणं मौलिचन्द्रशकलेन शूलिनः ॥१८॥

१ ०पाणि०–स

दष्टमुक्तमित्यादि ॥ प्रियेण [दष्टमुक्तं] पूर्वं दष्टं खण्डितमनन्तरं तं मुक्तम् [अधरोष्ठम्] अधोऽधरम् [अम्बिका] गौरी शीतलेन [मौलिचन्द्रशकलेन] शिरःशशिशकलेन क्षणं निरवापयत् समाश्वसत्[1] इति प्रौढाङ्गनाचेष्टाकथनम् । [वेदनाविधुतहस्तपल्लवा] अधरदष्टेन या वेदना तया विधुतहस्तपल्लवा कम्पितकरकिसलयेत्यम्बिकाया विशेषणम् ॥ १८ ॥

१ 'शीतीचकारेत्यर्थः'–अा.–ल. न

चुम्बनादलकचूर्णदूषितं[1] शंकरोऽपि नयनं ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने ॥१९॥

१. ०दूषि॑म्–म. मुञा

चुम्बनादलकेत्यादि ॥ न केवलं गौर्यधरं शिवः शशिना निरवापयत् । यावत्सोऽपि [चुम्बनादलकचूर्णदूषितं] चुम्बनवशादलकस्थेन[1] चन्दनादिक्षोदेन पीडितं [ललाटजं नयनं] तृतीयमक्षि [पार्वतीवदनगन्धवाहिने] पार्वत्या वदनमुखमारुताय ददौ अर्पयत् । मुखफूत्कारेणाक्ष्णो नीरजस्त्वापत्तेः [उच्छ्वसत्कमलगन्धये] उच्छ्वसन् विकसत्कमलं तस्येव गन्धः सौरभं यस्य तस्मै । उपमानाच्च [पा. सू. ५-४-१३७] इतीत्वम् ॥ १९ ॥

१. कुटिलकेशस्थेन –ल. न.

एवमिन्द्रियसुखस्य वर्त्मनः सेवनादनुगृहीतमन्मथः ।
शैलराजभवने सहोमया मासमात्रमवसद्वृषध्वजः ॥ २० ॥

एवमिन्द्रियेत्यादि ॥ [एवम्] इत्थम् [उमया] प्रियया[1] [सह] साकं [वृषध्वजः] ईश्वरः [शैलराजभवने] श्वशुरगृहे मासमात्रम् [अवसत्] अतिष्ठत् । [इन्द्रियसुखस्य वर्त्मनः] हृषीकाणां सुखकारि यद् वर्त्म मार्गो[2] युवत्यादिकः तत् [सेवनात्] उपभोगात् [अनुगृहीतमन्मथः] अनुगृहीतौ[3] मन्मथौ[4] येन ॥ २० ॥

१. 'गौर्या'–अपा.–ल. न. २. 'कीदृशः'–अपा.–ल.
३. 'प्रसादितः'–अपा.–ल. न. ४. कामः–ल. न.

सोऽनुमान्य[1] हिमवन्तमात्मभूरात्मजाविरहदुःखपीडितम् ।
तत्र तत्र विजहार संपतन्[2]प्रमेयगतिना ककुद्मता ॥ २१ ॥

१. ०नुमन्त्र्य–उ. २. सचरन्न०–म.

सोऽनुमान्येत्यादि ॥ ततः [सः] हरः[1] [आत्मजाविरहदुःखपीडितं] दुहितृविरहदुःखितं [हिमवन्तं] श्वशुरं [अनुमान्य] समाश्वास्य [अप्रमेयगतिना] वेगवाहिना [ककुद्मता] वृषभेण [संपतन्] व्रजन् [तत्र तत्र] तेषु वक्ष्यमाणेषु दिव्योद्यानेषु [विजहार] विक्रीड । अनुमान्य अनुज्ञां दापयित्वेत्यर्थः ॥ २१ ॥

१. भवः–ल. न.

तान्येव विहारस्थानान्याह–
मेरुमेत्य मरुदाशुवाहनः[1] पार्वतीस्तनपुरस्कृतः[2] कृती ।
हेमपल्लवविभंगसंस्तराम[3]न्वभूत्सुरततत्परः क्षपाम्[4] ॥ २२ ॥

१. ०दाशुगौक्षकः–म. २. ०कृतान्–म. ३. ०संस्तरान्–म. ल.
४. सुरतमर्दनक्षमान्–म. स.

मेरुमेत्येत्यादि ॥ ततो देवः [मेरुं] मेरुपर्वतम् एत्य[1] त्रिभुवनैकसत्कः स हेमपल्लवविभक्तसंस्तरां सौवर्णकिशलयशकलशयनायां [क्षपां] निशाम् [अन्वभूत्] बुभुजे । [मरुदाशुवाहनः] मरुद्वदाशु[2] शीघ्रो वाहनः

१. 'आगत्य'–अपा.–ल. २. 'वायुवदा'०–अपा–ल.

वृषभो[३] यस्य । [पार्वतीस्तनपुरस्कृतः] पार्वतीस्तनाभ्यां[४] पुरस्कृतोऽग्रतो विहितः पश्चात् तस्या अवस्थानादिति । अतश्च कृती पुण्यभाक्[५] [६]निजकान्ताकुचकलशाक्षेपणाद्याधारशृङ्गाररसमनुभवति । तदुक्तं—

शुकैश्चञ्चूत्कीर्णं छविफलयुगं यौवनतरो-
रय शङ्कुक्षुण्णं मदनकरिणः कुम्भयुगलम् ।
समुद्रं सम्भोगामृतकलशयुग्मं सुकृतिनः
स्तनद्वन्द्वं तस्या नयनखमुखाङ्कं विजयते[६] ॥ २२ ॥

३. 'वृषभो'—नास्ति-ल. ४. गौरीकुचाभ्यां-ल. ५. 'प्रियापयोधरस्पर्शात् । सत्तीर्येन-इति सन्तरस्तल्पम्'—अपा.-ल. ६...६. 'निजकान्ता...विजयते'—नास्ति-ल.

पद्मनाभवलया[१]ङ्कितास्मसु प्राप्तवत्स्वमृतविप्रुषो नवाः ।
मन्दरस्य कटकेषु चावसत्पार्वतीवदनपद्मषट्पदः ॥ २३ ॥

१. ०चरणा०-म. मुद्रा.

पद्मनाभेत्यादि ॥ कदाचिदसौ प्रियामुखं पिबन् [मन्दरस्य कटकेषु] मन्दरगिरिनितम्बेषु अवसत्[१] । कीदृशेषु । [नवाः] प्रत्यग्रान् [अमृतविप्रुषः] पीयूषबिन्दून् [प्राप्तवत्सु] आसादितवत्सु मन्थाचलत्वात्[२] । अत एव [पद्मनाभवलयाङ्कितास्मसु] विष्णोः वलयैः कटकैर्वा[३]ङ्कितासु सुचिह्नितोपलेषु मन्थानीकृत्य तद् बाहुयुग्मस्योपयोगात्कटकाङ्कितत्वम् ॥ २३ ॥

१. 'तस्थौ'—अपा.-ल २. मंथरगिरित्वात्-ल. न. ३. चरणैर्वलयैर्वा-ल. न.

रावण[१]ध्वनितभीतया तया कण्ठसक्तघनबाहुबन्धनः ।
एकपिङ्गलगिरौ जगद्गुरुर्निर्विवेश विशदाः शशिप्रभाः ॥२४॥

१. धारण०-अ. ना.

रावणध्वनितेत्यादि ॥ कदाचिदसौ [एकपिङ्गलगिरौ] वैश्रवणाद्रौ कैलासे [विशदाः] निर्मलाः [शशिप्रभाः] चन्द्रिकाः निर्विवेश उपबुभुजे । कीदृशः । [रावणध्वनितभीतया] दशमुखविरावत्रस्तया [तया] गौर्या [कण्ठसक्तघनबाहुबन्धनः] कण्ठे सक्तं घनं निबिडं बाहुबन्धनं भुजपाशो यस्य । रावणेन हि पूर्वमुन्मूलनेच्छया[१] कैलासः कम्पितोऽभूत् । तत्काले

१. उन्मूलेच्छया-ल.

व रावणस्यापि चिरन्तनत्वात् तत्सद्भावः । [2]दशमुखचीत्कारत्रस्तया तत्कालेऽपि रावणस्य चीत्कृतसम्भवो हरपादाङ्गुष्ठनिपीडितकैलाशपीठत्वात्[2] ॥ २४ ॥

२. 'दश ..त्वात्'-नास्ति-ल.

तस्य जात[1]मलयस्थलीरतेर्धूतचन्दनलतः प्रियाक्लमम् ।
आचचाम सलवंगकेसरश्चाटुकार इव दक्षिणानिलः ॥ २५ ॥

१. जातु-म. स.

तस्य जातमलयेत्यादि ॥ तस्य [जातमलयस्थलीरतेः] उत्पन्नमलयाद्रितटीप्रीतेः [दक्षिणानिलः] मन्दरशैलमारुतः [प्रियाक्लमं] प्रियाखेदं [चाटुकारः] सेवकः इव आचचाम पपौ ॥ मलयमन्दरौ ह्यन्योन्यसम्बद्धौ । कीदृक् [धूतचन्दनलतः] वातोद्धूताः कम्पिताश्चन्दनलता येन । तथा [सलवंगकेसरः] सह लवंगकुसुमकेसरैर्वर्तते यः स सलवंगकेसरः इति सौगन्ध्योक्तिः । फलमोऽत्र किं देव्या देवस्य चेति चर्व्यमेतत् ॥ २५ ॥

हेमतामरसताडितप्रिया तत्कराम्बुविनिमीलितेक्षणा ।
खे[1] व्यगाहत तरङ्गिणीमुमा मीनपङ्क्तिपुनरुक्तमेखला ॥ २६ ॥

१. खा-म.

हेमतामरसेत्यादि ॥ [उमा] गौरी जलक्रीडार्थं [खे तरङ्गिणीं] नभोनदीं [व्यगाहत] व्यलोडयत् । कीदृशी । [हेमतामरसताडितप्रिया] कनक[1]कमलैराहतः प्रियो यया । तथा [तत्कराम्बुविनिमीलितेक्षणा] तस्य कान्तस्य कराम्बुभिः पाणिप्रक्षिप्तपानीयैः स्थगिताक्षी[2] [मीनपङ्क्तिपुनरुक्तमेखला] मत्स्यावलिरेव पुनरुक्ता द्वितीया रसना यस्याः, श्रोणीदेशे परिवृत्य स्थितत्वात् ॥ २६ ॥

१. सुवर्ण०-ल.
२. स्थगितलोचना-ल.

तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः सस्पृहं सुरवधूभिरीक्षितः ॥ २७ ॥

तामित्यादि ॥ तां कान्तां [पुलोमतनयालकोचितैः] शचीकेशपाशयोग्यैः पारिजातकुसुमैः [प्रसाधयन्] अलङ्कुर्वाणः[१] [अयुग्मलोचनः] त्रिनेत्रः [सस्पृहं] साभिलाषं [सुरवधूभिः] नाकललनाभिरिन्द्राण्यादिभि [ईक्षित] अवलोकितः[२] । पुण्यवत्येषा यस्याः सर्वेश्वरोऽपि चाटुकृदिति ॥ २७ ॥

१. 'मण्डयन्'–अग.–स. २. 'चिरं दीर्घकालमवलोकयत्'–अग–स.

इदानीं सूर्यास्तमयादिवर्णनं चिकीर्षुराह–

इत्यभौममनुभूय शङ्करः पार्थिवं च वनिता[१]सखः सुखम् ।
लोहितायति कदाचिदातपे गन्धमादनगिरिं[२] न्यवर्तत[३] ॥ २८ ॥

१. दयिता०–म. मुद्रा. २. ०वनम्–म. स. ३. ०व्यगाहत–म.

इत्यभौममित्यादि ॥ अभौमं दिव्यं पार्थिवं नृलोकजं च सुखम् इत्थं [शंकर] ईश्वरः [वनितासख] देव्या सह [अनुभूय] संसेव्य कदाचित् अस्तमयवशात् [लोहितायति] अरुणायमाने [आतपे] सूर्यातपे सत्यसति गन्धमादनगिरिं [न्यवर्तत] प्रत्यावर्ती। अलोहितो लोहितो भवति लोहितायति । प्रत्यागमनमपि निवृत्तिः । यथा–

प्रोषितायां प्रजन्त्यस्तं प्रजाधर्मो यशः सुखम् ।
निवर्तन्ते निवृत्तायामहो बन्धुः कुलं गृहम्[१] ॥ ॥ २८ ॥

१. कुलाङ्गनाः–स. न.

तत्र काञ्चनशिलातलाश्रयो नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां व्याजहार सहधर्मचारिणीम् ॥ २९ ॥

तत्र काञ्चनेत्यादि ॥ तत्र कैलाशोपवने [काञ्चनशिलातलाश्रयः] कनकशिलापृष्ठमध्यास्य नेत्रगम्यं [भास्करं] सुदर्शनमर्कम् अवलोक्य [दक्षिणेतरभुजव्यपाश्रयां] वामपार्श्वस्थां [सहधर्मचारिणीं] भार्यामीश्वरः [व्याजहार] जगाद[१] ॥ २९ ॥

१. 'उवाच । दक्षिणेतरो वामः स चासौ करश्च दक्षिणेतरो भुजः, तस्य व्यपाश्रय, आश्रय आधारो यस्याः । त्रिभिराह'–मरा–स. न.

पद्मकान्तिमरुणत्रिभागयोः संक्रमय्य तव नेत्रयोरिव ।
संक्षये जगदिव प्रजेश्वरः संहरत्यहरसावहर्पतिः ॥ ३० ॥

पद्मकान्तिमित्यादि ॥ [अरुणत्रिभागयो] लोहितापाङ्गयो [संक्रमय्य] निक्षिप्येव । [पद्मकान्ति][1] पद्मना विच्छायत्वात् च नेत्रयो च सानुरा ण वादित्यमूह । प्रजेश्वर अत्र कल्पान्तरुद्र [जगदिव] त्रिभुवनमिव असौ [अहर्पति] अर्क दिन संहरति क्षपयति [संक्षये] कल्पान्ते । किं कृत्वा । तवाक्ष्णो कमलकान्तिं सङ्क्राम्येव अह्न पतिरहर्पति । 'रोऽसुपि' [पा० सू० ८-२ ६९]इति रेफ ॥ ३० ॥

१ 'कमलशान्तिम्'-अपा-ल न

शीकर[1]व्यतिकरं मरीचिभिर्दूरयत्य[2]वनते विवस्वति ।
इन्द्रचापपरिवेषशून्यता निर्झरास्तव पितु[3]र्व्रजन्त्यमी ॥ ३१ ॥

१ सीकर० म  २ धूनयत्य०-ल  ३ प्रसवितु०-अ ना

शीकरेत्यादि ॥ तव [पितु] हिमवत अमी निर्झरा प्रपाततोयानि इदानीं [इन्द्रचापपरिवेषशून्यता] इन्द्रधनुषा य परिवेषोऽभिव्याप्तिस्तेन शून्यता विरहस्य[1] [व्रजन्ति] यान्ति । कुत । कुत्र [विवस्वति] सूर्ये अवनते अवलम्बमाने [मरीचिभि] मयूखै [शीकरव्यतिकर] जलकणसम्पर्कं [दूरयति] विश्लेषमाणे । जलविप्रुट्सु हि रविरश्मिसम्बन्धात्सुरचापोत्पत्ति[2] । दूर करोति दूरयति । 'प्रातिपदिकाद् धात्वर्थे'[3] इति णिच् ॥ ३१ ॥

२ सुरेशकार्मुकोत्पत्ति ल
१ विरहम्-ल
३ पा सू ३-१-२५ अन्तर्गत वार्तिकम् ।

दष्टतामरसकेसरस्रजो[1]' क्रन्दतोर्विपरिवृत्तकण्ठयोः ।
निघ्नयोः सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ॥ ३२ ॥

१ ०रस्रजो -म

दष्टतामरसेत्यादि ॥ दम्पत्यो चक्रवाकयो सरसि[1] अल्पम् अन्तरं व्यवधानम् अनल्पता गत दूर सम्पन्न संश्लेष[2] कर्तुमशक्यत्वात् । यतः
१ 'तडागे'-अपा-ल.  २ संश्लेषस्य-ल.

निध्नयोः परवशयोः दैववशाद्धि तयोर्निशि वियोगः । अतश्च दुःखवशात् [दष्टतामरसकेसरत्यजोः] दष्टस्य खण्डितस्य जिघांसितस्य तामरसस्याब्जस्य[3] केसरं[4] त्यक्तवतोः क्रन्दतोः कूजतोः । तथा [विपरिवृत्तकण्ठयोः] विपरिवृत्तौ विस्वरीभूतौ[5] गलौ ययोः । संयोगे हि तौ मधुरगलौ । 'विरहदीनकण्ठयोः' इति पाठान्तरम् । शत्रुघ्नादिवत् निध्नशब्दः । 'चक्रवाकयोः' इति 'पुमां स्त्रिया' [पा सू. १-२-६७] ॥ ३२ ॥

३. 'पद्मस्य'–अपा–ल. ४. 'किञ्जल्कम्'–अपा–ल. ५. 'कण्ठः'–अपा–ल न.

स्थानमाह्निकमपास्य दन्तिनः शल्लकीविटपभङ्गवासितम् ।
आविभातचरणाय गृह्णते वारि वारिरुहबद्धषट्पदम् ॥ ३३ ॥

स्थानमाह्निकमित्यादि ॥ हे प्रिये, एते [दन्तिनः] करिणः आह्निकं दिवातनं स्थानम् [अपहाय] हित्वा वारि गृह्णते जलमध्यं श्रयन्ति । किमर्थम् । [आविभातचरणाय] आविभातं रात्रिपर्यन्तं यच्चरणं भोजनं तदर्थम् । निशि हि ते जलान्तर्विचरन्ति । कीदृश स्थानम् । [शल्लकीविटपभङ्गवासित] शल्लकीनां गजभक्ष्याणां विटपभङ्गेन पल्लवखण्डेन वासितं सुरभितम् । ते हि शल्लकीभोजिनः । वारि कीदृशम् । [वारिरुहबद्धषट्पदं] वारिरुहेष्वब्जेषु सङ्कोचवशाद् बद्धा[1] षट्पदा अलयो यत्र । अहि भवमाह्निकम् ॥ ३३ ॥

१. 'भृताः'–अपा–ल. न.

पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे विवस्वता ।
दीर्घया[1] प्रतिमया सरोम्भसां तापनीयमिव सेतुबन्धनम् ॥ ३४ ॥

१. लब्धया–म.

पश्य पश्चिमेत्यादि ॥ हे मितकथे स्वल्पभाषिणि [पश्य] विलोकय [पश्चिमदिगन्तलम्बिना विवस्वता] वारुणीस्थेनार्केण दीर्घया प्रतिमया आयतेन प्रतिबिम्बेन [सरोम्भसां] सरसामम्भसां तापनीयम् इव सेतुबन्धनं निर्मितम् । सौवर्णमयसंक्रम[1] इव रचितः प्रतिमायाः पारावारव्याप्तेः ॥३४॥

१. सौवर्णमयम्–ल.

उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः ।
दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥ ३५ ॥

उत्तरन्तीत्यादि ॥ [वनवराहयूथपाः] काननसूकरसङ्घपतयः [गाढपङ्कपल्वलं] घनकर्दमपल्वलं वेशन्तं[1] विनिकीर्य अपहाय[2] तापाभावात् उत्तरन्ति स्थलमुद्यां निर्गच्छन्ति अतिवाहितातपाः[3] । उष्मभयादिव वराहमहिषादयो दिनं पङ्कमध्ये क्षपयन्ति । दंष्ट्रा विद्यन्ते येषां ते दंष्ट्रिणः । अतश्चोत्प्रेक्षते । [दष्टभङ्गुरबिसाङ्कुराः] दंष्ट्रालग्ना भङ्गुराः कुटिला बिसाङ्कुरा येषां ते तथाविधा इव । दंष्ट्राणां मृणालाङ्कुरवत् । अव्यभिचारेऽप्युत्प्रेक्षार्थं दंष्ट्रिण इति विशेषणम् ॥ ३५ ॥

१. 'अल्पसरः'–अपा–ल.  २. त्यक्त्वा–ल.  ३. निर्गमितोष्मागः–ल. न.

एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलम्[1] ।
हीयमानमहरत्ययातपं पीवरोरु पिबतीव बर्हिणः ॥ ३६ ॥

१. ०मण्डलः–स.

एष वृक्षेत्यादि ॥ हे [पीवरोरु] संहितोरु[1] एष [बर्हिणः] मयूरः [वृक्षशिखरे कृतास्पदः] तदग्रासीनः दिनान्ते अर्कमीक्ष्यमाणः [हीयमानं] क्षीयमाणं [अहरत्ययातपं] दिनान्तातपं पिबति इव ग्रसत इव । अन्यथा क्व तर्हि स गत इति भावः । कीदृशम् । [जातरूपरसगौरमण्डलं] जातरूपरसवद् गौरमण्डलम् । [2]कनकद्रववत्ताम्रपिङ्गलपरिणाहं[2] चक्रवालम्[3] । केचित्तु बर्हिविशेषणमेतदाहुः । मण्डलं च बर्हमेतदसम्यद्धं तस्य गौरत्वाभावात् ॥ ३६ ॥

१. 'स्थूलोरु'–अपा–ल.  २...२. 'कनक...णाहम्'–नास्ति–ल.
३. ताम्रचक्रवालम्–ल. न.

पूर्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्कमिव जातमेकतः ।
खं हृतातपजलं विवस्वता भाति किञ्चिदिव शेषवत्सरः[1] ॥ ३७ ॥

१. शोष०–स.

पूर्वभागेत्यादि ॥ खं व्योम किञ्चिद् शेषवत् अवशिष्टम् अवशेषं सरः इव भाति प्रतिभासते । [पूर्वभागतिमिरप्रवृत्तिभिः] ऐन्द्र्याऽन्धकारा-विर्भावे एकतः व्यक्तपङ्कम्[1] इव जातमित्युत्प्रेक्षा । एष विवस्वता

२. 'सूर्येण'–अपा–ल.

१. पटुकर्दमम्–ल.

[हृतातपजलं] संहृतमातपम् एव जलं यस्य । रविपीतजलस्य हि किञ्चिच्छिष्टस्य कर्दमाविर्भावो भवति । शेषं विद्यते यस्य तच्छेषवद् । इवशब्दो भिन्नक्रम ॥ ३७ ॥

आविशद्भि[1]रुटजाङ्गणं मृगैर्मूलसेकसरसैश्च वृक्षकैः ।
आश्रमाः प्रविशदग्नि[2]धेनवो बिभ्रति श्रियमुदीरिताग्नयः ॥३८॥

१. आवसद्भि०–मुशा. २ ०द्म०–म

आविशद्भिरित्यादि ॥ एते आश्रमा [श्रियं] शोभां [बिभ्रति] वहन्ति । केन उटजाङ्गणं पर्णमठिकाजिरम् [आविशद्भि] अधितिष्ठद्भि [मृगैः] हरिणै. [मूलसेकसरसै] आलवालसेकहर्षितै. च वृक्षकै [प्रविशदग्निधेनव.] प्रविशन्तीभिः अग्निधेनुभिर्होमगवीभि । तथा उदीरिताग्नय. उदीरितै. संधुक्षितैश्च त्रेतानलै. । अग्निधेनुशब्दे चतुर्थ्यर्थे प्रदर्शाश्वघासवत्षष्ठीसमास । एवमन्यत्र ॥ ३८ ॥

बद्धकोशमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्वमिव दातुमन्तरम् ॥ ३९ ॥

बद्धकोशमित्यादि ॥ एतत् कुशेशयं राजीवं बद्धकोशम् अपि सङ्कुचितामोदमपि सावशेषविवरं किञ्चिद् रन्ध्रान्वितं क्षण [तिष्ठति] आस्ते । मनोऽप्रेक्षते । वसतिमवस्थानं ग्रहीष्यते करिष्यते [षट्पदाय] भ्रमराय [प्रीतिपूर्वं] प्रीत्या अन्तरम् अवकाश दातुम् इव । न सर्वं मुकुलितं तत्र हि तेन प्रवेष्टव्यम् । अवशिष्यत इत्यवशेषम्, तच्च तद्विवरम् । सह तेन वर्तते इति सावशेषं सरन्ध्रमित्यर्थ ॥ ३९ ॥

दूरमग्र[1]परिमेयरश्मिना वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता बन्धुजीवकुसुमेन[2] कन्यका ॥ ४० ॥

१. ०मग्रि०–म. ०म्रम०–मुशा. अ. ना. ०ल्म०–म. २ ०क्लिन्नेन–म. म. मुशा.

दूरमग्रेत्यादि ॥ वारुणी दिक् प्रतीची [अरुणेन] लोहितेन [भानुना] रविणा [भाति] विराजते । [बन्धुजीवकुसुमेन] बन्धुजीवकुसुमचित्रकेण [कन्यका] कुमारी इव दूरम् अत्यर्थं [मण्डिता] । अत एव अग्रपरि-

मेयरश्मिना परिमेया अल्पा रश्मयो यस्येति भानुविशेषणम् । तिलकेनापि केसरवता सकिञ्जल्केन ॥ ४० ॥

१. दीधितयः-ल. न.

सामभिः सहचराः सहस्रशः स्यन्दनाश्वहृदयंगमस्वरैः[1] ।
भानुमग्निपरिकीर्णतैजसं संस्तुवन्ति किरणोष्मपायिनः ॥ ४१ ॥

१. ०स्वनैः-म. मुद्रा.

सामभिरित्यादि ॥ एते सहचराः वालखिल्याः सहस्रशः [भानुं] रविं सामभिः [स्तुवन्ति] नुवन्ति । रविरथेन सह गमनादेषां सहचरत्वम् । अतिबहुत्वाच्च तेषां सहस्रसंख्यत्वम् । कीदृशैस्सामभिः । [स्यन्दनाश्वहृदयंगमस्वनैः] स्यन्दनाश्वानां रथ्यानां हृदयंगमः प्रियस्वरो ध्वनिर्येषाम् । यजिनो हि प्रियगेयाः । सामानिव गीयन्ते । भानुं कीदृशम् । अग्निपरिकीर्णतैजसम् अग्नौ परिकीर्णं निक्षिप्तं तेजो येन । वनौषधीषु च तेजो निधाय रविरस्तमेतीति श्रुतिः । मुनयो हि तपःप्रभावात् क्षुत्तृषाभिर्न पीड्यन्ते । तत्र किरणोष्मपायिनः उष्मवत्वात् ॥ ४१ ॥

सोऽयमानतशिरोधरैर्हयैः कर्णचामरविघट्टितेक्षणैः ।
अस्तमेति युगभुग्नकेसरैः सन्निधाय दिवसं महोदधौ ॥ ४२ ॥

सोऽयमानतेत्यादि ॥ सः अयम् एवंविधो रविः हयैः अस्तम् एति अस्ताद्रिं प्रविशति । कीदृशैः । अवरोहवशात् आनतशिरोधरैः भुग्नग्रीवैः अत एव [कर्णचामरविघट्टितेक्षणैः] कर्णचामराभ्यां विघट्टितेक्षणैः आहतनेत्रैः । किं तथा [युगभुग्नकेसरैः] युगेन मूर्धकाष्ठेन भुग्नकेसरैः सङ्कुचितसटैः । किं कृत्वेति । महोदधौ दिवसं दिनं सन्निधाय निक्षिप्य समुद्रे तस्य प्रवेशात् । यदुक्तम्-'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति' इति । सोऽयमिति ध्वनिपदं गुणोत्कर्षप्रतिपादकम् ॥ ४२ ॥

खं प्रसुप्तमिव संस्थिते[1] रवौ तेजसो महत ईदृशी गतिः ।
तत्प्रकाशयति यावदुद्गतं मीलनाय[2] खलु तावतश्च्युतम् ॥ ४३ ॥

१. प्रस्थिते-मुद्रा. २. मिलनेन-मुद्रा.

खं प्रसुप्तमिवेत्यादि ॥ [रवौ]सूर्ये संस्थिते नष्टे सति खं नभोऽपि प्रसुप्तम् इव निश्चेष्टं यथा । नाश्चर्यमथवा । यतः महत् तेजस¹ ईदृशी गति एवंविधमस्त । यद्यदुरु तत् तेज उद्गत सत् यावत् यत्परिमाणं प्रकाशयति च्युतं नष्टमपि तत् [तावत] तावदेव मीलनाय² भवतीति³ सत्पुरुषवृत्तान्तः सूचित । तरणौ चोदिते निखिलमिव नभ उच्छ्वसित⁴ मासीदस्तमिते तु⁵ शयितमिव ॥ ४३ ॥

१ 'महतो धाम्नः'–अपा ल २. 'संकोचाय'–अपा–ल ३. प्रभवति–ल.
४ 'विकसितम्'–अपा–ल ५ 'सुप्तम्'–अपा–ल.

सन्ध्ययाप्यनुगतं रवेर्वपु¹र्वन्द्यम²स्तशिखरे समर्पितम् ।
येन पूर्वमुदये पुरस्कृता नानुयास्यति कथं तमापदि ॥ ४४ ॥

१. रवे पद–मुद्रा २ पद धर्म्यम०–शा.

सन्ध्ययाप्यनुगतमित्यादि ॥ न केवलमर्कोऽपगतो यावत् सन्ध्या¹ अपि रवे वपु अनुगतम् । तेनैव सहास्तमितेत्यर्थ । युक्तं चैतत । येन [उदये] रविणोदयकाले या सन्ध्या पूर्वं [पुरस्कृता] अग्रतो विहिता सा तम् आपदि अपि कथम् इव न अनुयास्यति । प्रभाते हि आदौ सन्ध्या पश्चात् तु सूर्योदय । वन्द्य वन्दनीयम् । [अस्तशिखरे] अस्ताद्रिशिरसि समर्पितम् अस्तमगतमिति वपुर्विशेषणम् ॥ ४४ ॥

१. 'सन्ध्यावेलया'–अपा–ल न

रक्तपीतकपिशाः पयोमुचां कोटयः कुटिलकेशि भान्त्यमूः ।
द्रक्ष्यसि त्वमिति संधिवेलया¹ वर्तिकाभिरिव साधु वर्तिताः² ॥४५॥

१. सन्ध्ययानया–म, साध्यवेलया–मुद्रा २ मण्डिता–म स मुद्रा.

रक्तपीतेत्यादि ॥ हे [कुटिलकेशि] अरालमूर्धजे अमू एता पयोमुचां कोटय अभ्रलेखा भान्ति राजन्ते । कीदृश्यः । रक्तपीत कपिशा] काश्चिद् रक्ताः हरिद्रा काश्चित् कपिशा पिङ्गाः । उत्प्रेक्षते । त्वद्दर्शनार्थं¹ वर्तिकाभि खटिकाभि इव [साधु] सम्यग् [वर्तिता] वर्णाङ्कता । ईश्वरस्य ह्यनेकवर्णयुक्त वस्तुदर्शनयोग्यम् । अहोरात्रयोः सन्धिः संश्लेष, तस्य वेला सन्धिवेला-सध्योच्यते² ॥ ४५ ॥

१. 'भवत्यालोकनार्थम्'–अपा–ल. २. 'संधिसंश्लेषरात्र्यहयोः'–अपा–ल. न.

सिंहकेसरसटासु भूभृतां पल्लवप्रसविषु द्रुमेषु च ।
पश्य धातुशिखरेषु चात्मनः[1] संविभक्तमिव सांध्यमातपम् ॥४६॥

१ भानुना–म स, चात्मना–मुशा

सिंहकेसरेत्यादि ॥ प्रिये पश्य एतत् । भूभृता अद्रिणा सान्ध्यम् आतप तेजोऽमीषु [आत्मन ] आत्मीयेषु संविभक्तम् इव । केषु । [सिंह-केसरसटासु] सिंहाना केसरसटासु मूर्धजरोमवल्लीषु । केसराणा सटा इति षष्ठीसमास । केचिदूर्ध्वरोमाणि केसराण्याहुर्लग्नमानानि तु सटा । एव च–'सटाच्छटाभिन्नघनेन बिभ्रन' [शिशु० १-४७] इत्यादि । अवाचक स्यादित्येवत् । तथा पल्लवप्रसविषु [द्रुमेषु] वृक्षेषु किसलयाना लौहितत्वात् । [धातुशिखरेषु] गैरिकादिधातुमत्सु[1] शृङ्गेषु । आतपस्य दृशि क्रियापेक्षं कर्मत्वम् ॥ ४६ ॥

१ ०मयेषु–ट न

पार्ष्णिमुक्तवसुधास्तपस्विनः पावनाम्बुसरसा[1]ञ्जलिक्रियाः ।
ब्रह्म गूढमभिसन्ध्यमादृताः शुद्धये विधिविदो गृणन्त्यमी ॥४७॥

१. ०रचिता०–स ०विहिता०–म

पार्ष्णिमुक्तेत्यादि ॥ एते [तपस्विन ] मुनय प्रसिद्धा[1] [अभिसान्ध्य] सन्ध्याभिमुख गूढम् उपांशु ब्रह्म वेद [गृणन्ति] जपन्ति । शुद्धये पवित्री-करणाय । कीदृशा । विधिविद विधानज्ञा । तथा हि [पार्ष्णिमुक्तवसुधा ] पादाग्रस्थितत्वात् पार्ष्णिभ्या[2] मुक्ता वसुधा[3] यै । तथा [पावनाम्बुस रसाञ्जलिक्रिया ] पावनाम्बुना मन्त्रपूतेन तोयेन सरसश्चार्द्रोऽञ्जलिबन्धो[4] येषाम् ॥ ४७ ॥

१ श्रद्धाना –ट                    २ 'चरणपश्चिमभागाभ्याम्'–अपा–ल
३ 'उत्सृज्य उर्वी'–अपा–ल              ४ 'प्रसृतिरचना'–अपा–ट न

तन्मुहूर्तमनुमन्तुमर्हसि प्रस्तुताय नियमाय मामपि ।
त्वा विनोदनिपुणः सखीजनो वल्गुवादिनि विनोदयिष्यति ॥४८॥

तन्मुहूर्तमित्यादि ॥ यत मुनय सन्ध्या वन्दन्ते तत् माम् अपि त्व [प्रस्तुताय] प्रकृताय नियमाय सन्ध्यावन्दनाख्याय [अनुमन्तुम् ] अनुज्ञा

दातुम्[1] अर्हसि । न चैकाकिनी भवती भविष्यति । यत [विनोदनिपुण] विनोदचतुर [सखीजन] वयस्यालोक [वल्गुवादिनि] मधुरभाषिणि विनोदयिष्यति ॥ ४८ ॥

१ अनज्ञातुम् ल

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधारणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥ ४९ ॥

निर्विभुज्येत्यादि ॥ तत सन्ध्याप्रणामालापमाकर्ण्य सेर्ष्यत्वात् [दशनच्छदम्] अधर निर्विभुज्य दष्ट्वा[1] [शैलराजतनया] पार्वती [समीपगा] निकटस्था [विजया] विजयाख्या प्रतीहारीम् अहेतुक निर्निमित्तमेव [आललाप] किञ्चिदूचे । यतो भर्तुर्वाचि[2] [अवधीरणापरा] अवहेलापरा[3] । सपत्न्या इव सन्ध्याया वन्दन हि सह्या उद्वेगकरमत पत्युरवलेप कुर्वती कथान्तर प्राप्तेत्यर्थ[4] ॥ ४९ ॥

१ 'कुटिल कृत्वा'—अग ल   २ ०व क्ये—ग न   ३ 'अननुगामिनी'—भा—ल न   ४ प्रस्तावयती यथ, प्राप्नोदित्यर्थ (इति) पाठान्तरम्—ल न

ईश्वरोऽपि दिवसात्ययोचितं मन्त्रपूर्वमनुतस्थिवान्विधिम् ।
पार्वतीमवचनाम[1]सूयया प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥

१ ०मवचनाम०—अ ना

ईश्वरोऽपीत्यादि ॥ [ईश्वर] भगवान् अपि [दिवसात्ययोचित] सर्वथाऽनुष्ठेयत्वात् सन्ध्योपासन [मन्त्रपूर्वं] समन्त्रम् [अनुतस्थिवान्] अनुष्ठितवान् । स तु [प्रत्युपेत्य] प्रतीपमागत्य [सस्मित] सहास [पार्वतीं] प्रियाम् [आह] अब्रवीत् । असूयया ईर्ष्यया अवचना तूष्णीभूताम् । अत एव सहस । पार्वतीमनुनयन्नसूयिताम्' इति पाठान्तरम् ॥ ५० ॥

मुञ्च कोपमनिमित्तकोपने सन्ध्यया प्रणमितोऽस्मि नान्यथा[1] ।
किं न वेत्सि सहधर्मचारिणा चक्रवाकसमवृत्तिमात्मनः ॥ ५१ ॥

१ तोऽहमन्यथा—भ स मुग

मुञ्च कोपमित्यादि ॥ हे [अनिमित्तकोपने] निर्निमित्तरोषणे सन्ध्याप्रणतिनिमित्त कोप रोष [मुञ्च] त्यज । यस्मात् सन्ध्यया अहम्

अन्यथा अन्येन वक्ष्यमाणप्रकारेण प्रणमितः [अस्मि] वन्दनं कारितः । न तु रागेण । मां च [किं] कस्मात् आत्मनः चक्रवाकसमवृत्तिं सहधर्मचारिणं पतिं न [वेत्सि] न बुध्यसे । प्रभुरपि रथाङ्गनामवत्त्वचायं चाटुकारीत्यर्थः । भगवान्नमति सन्ध्या गौरवान्नमयतीति प्रयोज्यप्रयोजकविवक्षया प्रणमित इति णिजुत्पत्तिः ॥ ५१ ॥

तदेव कारणमाह—

निर्मितेषु पितृषु स्वयंभुवा या तनुः सुतनु पूर्वमुज्झिता ।
सेयमस्तमुदयं च सेवते तेन मानिनि ममात्र गौरवम् ॥ ५२ ॥

निर्मितेष्वित्यादि ॥ हे सुतनु कृशाङ्गि पूर्वं स्वयंभुवा वेधसा पितृषु देवविशेषेषु निर्मितेषु या तनुः [उज्झिता] उत्सृष्टा सा रवेः अस्तम् उदयं च सेवते । सा सन्ध्या सम्पन्नेत्यर्थः । हे मानिनि तेन मम अत्र गौरवम् आदरः । एवं ह्यागमः । ब्रह्मा सत्त्वबहुलो मुखाद् देवान्निर्माय वपुरत्याक्षीत् । तद्दिनं समपद्यत । पुनरसौ प्रचुरतमो जघनादसुरान् सृष्ट्वा तनुममुञ्चत् । सा निशाऽभवत् । पुनरपि रजोमात्ररूपो मनसा मानवान्निर्माय देहमुत्ससर्ज । सा ज्योत्स्नाऽभवत् । भूयः सत्त्वमात्रकोऽहोरात्रान्तराले च राक्षसान् पितॄनुत्पाद्य मूर्तिममुञ्चत् । सा सन्ध्या जातेति । ब्रह्मतनुरेषा गौरवेण नमस्क्रियते न तु सन्ध्या काचिदङ्गनेति ॥ ५२ ॥

तामिमां तिमिरवृद्धि[1]पीडितां भूमिलग्नमिव[2] संप्रति[3] स्थिताम्[4] ।
एकतस्तटतमालमालिनीं पश्य धातुरसनिम्नगामिव ॥ ५३ ॥

१. ०वृत्ति०—म. २. भूमिलं गमित—म.
३. शैलराजतनयेऽधुना—म. ४. भूमिलग्नमम्बरस्थितम्—मुरा.

तामिमामित्यादि ॥ नन्वेतदास्ताम् । प्रकृतमनुसरामः । ताम् इमां सन्ध्याम् एवं सम्प्रति विलोक्य । कीदृशीम् । [तिमिरवृद्धिपीडितां] तमोवृद्ध्या पीडितामाक्रान्ताम् । अतश्च भूमिलग्नम् इव स्थिताम् । उर्वीपर्यन्ते लगित्वा चासीनाम् । अत एव धातुरसनिम्नगाम् इव गैरिकरसनदीतुल्याम् । कीदृशीं नदीम् । एकतः एकस्मिन् पारे तटतमालमालिनी तटे तमालमालान् बिभर्ति या ताम् । तमस्तमालनिभत्वात् । 'तटनिवक्रवोरुलाम्' इति पाठान्तरम् ॥ ५३ ॥

सान्ध्यमस्तमितशेषमातपं रक्तरेख[1]मपरा बिभर्ति दिक् ।
संपराय[2]वसुधा सशोणितं मण्डलाग्रमिव तिर्यगुज्झितम् ॥ ५४ ॥

१. ०लेख०–म. मुग्धा. २. सपराय०–म.

सान्ध्यमस्तमित्यादि ॥ अपरा पश्चिमा दिक् अस्तमितशेषं[1] [रक्तरेखं] लोहितराजि [सान्ध्यं] सन्ध्याभवम् आतपं बिभर्ति वहति । [इव] यथा संपरायवसुधा सङ्ग्रामभूमिः सशोणितम् असृगनुलिप्तं तिर्यग् [उज्झितं] पतितं[2] मण्डलाग्रम् असिं[3] धारयति ॥ ५४ ॥

१. 'निमीलितावशेषम्'–अपा–ल. न २. पातितम्–ल. न.
३. 'तरवारिम्'–अपा–ल

यामिनीदिवससन्धिसम्भवे तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं[1] निराकुलं दिक्षु दीर्घनयने विजृम्भते ॥ ५५ ॥

१. ०दन्धतिमिरम्–ल

यामिनीत्यादि ॥ हे [दीर्घनयने] विशालाक्षि [यामिनीदिवससन्धिसम्भवे] सान्ध्ये [तेजसि] आतपे [सुमेरुणा व्यवहिते] मेरुपर्वतान्तरिते सति एतत् अन्धतमसं[1] घनान्धकारं [निरङ्कुशं] उच्छृङ्खलमाशु [विजृम्भते] प्रसरति । मेरु[2]व्यवधानमेवास्तमय इति ज्योतिर्विदः[3] । अन्धयतीत्यन्धम्, अन्धं च तमश्च अन्धतमसम् ॥ ५५ ॥

१. 'अन्धतिमिरम्'–अपा–ल. न. २. स्मा०–ल.
३. 'यामिनीदिवससन्धिसम्भवे तेजसि रजनीदिनमध्यव्यापेलोद्भवे महसि'–अपा–ल. न.

नोर्ध्वमीक्षणगतिर्न चाप्यधो नामितो न पुरतो न पृष्ठतः ।
लोक एष तिमिरोल्ब[1]वेष्टितो गर्भवास इव वर्तते निशि ॥ ५६ ॥

१. ०रौघ०–म.

नोर्ध्वमीक्षणेत्यादि ॥ [तिमिरोल्बवेष्टितः] तिमिरमेवोल्बं[1] जरायुस्तेनावृतो यः [निशि] निशीथिन्यां लोकः गर्भवासः मातुर्जठरे इव [वर्तते] तिष्ठति । तथाहि । [नोर्ध्वमीक्षणगतिः] नोर्ध्वमीक्षणयोर्गतिः प्रसरो यस्य ।

न अपि मध्य ऊर्ध्वे[1] न अभित पार्श्वद्वयेन पुरत अग्रय । न अपि पृष्ठत पश्चात् । योऽपि गर्भे तिष्ठति तस्य सर्वतो दृष्टिरोधो भवतीति ॥ ५६ ॥

१ उद्धयेत–ख

शुद्धमाविलमवस्थित चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसता हतान्तरम्[1] ॥ ५७ ॥

१ हतान्तरम्–म

शुद्धमाविलमित्यादि ॥ सम्प्रति संहतेन [ तमसा ] ध्वान्तेन [ शुद्धम् आविलं ] निर्मलानिर्मलं च [ अवस्थित चल ] स्थिरचञ्चलं च [ वक्रम् आर्जवगुणान्वितं ] स्पष्टकुटिलं च इत्यादि सर्वम् एव समीकृतम्[1] । न हि तमसि पदार्थाना भेदग्रहणव्यक्ति[2] । अतश्च असता दुर्जनाना महत्त्व प्रभावं धिक्[3] निन्दाम । यत. हतान्तर नष्टविशेषम् । न ह्यसता महत्त्वे गुण्या गुण्ययोर्विशेषो भवति ॥ ५७ ॥

१ 'समान कृतम्'–अग ए     २ ग्रहणभदयात–ए     ३ 'निन्दनीयम्'–भग–ए न

मन्दरान्तरितेत्यादि ॥ सतारका नक्षत्रान्विता [निशा] शर्वरी [मन्द-रान्तरितमूर्तिना] मन्दराद्रिव्यवहितवपुषा [शशभृता] शशिना लक्ष्यते दृश्यत इव यथा [प्रियसखीसमागता] प्रियाभिः सखीभिः समागता त्वं मया रहसि [वचनानि] वचांसि [श्रोष्यता] आकर्णयितुं पृष्ठतः पश्चाद्भागाल्लक्ष्यसे ॥ ५६ ॥

रुद्धनिर्गमनमादिनक्षयात्पूर्वदृष्टतनुचन्द्रिकास्मितम् ।
एतदुद्गिरति रात्रिनोदिता¹ दिग्रहस्यमिव चन्द्रमण्डलम्² ॥ ६० ॥

१ चन्द्रमण्डल-म ०चोदिता-मुद्रा अ ना		२. रात्रिनोदितम्-म

रुद्धनिर्गमनमित्यादि ॥ [रात्रिनोदिता] निशाप्रेरिता दिगैन्द्री [चन्द्रमण्डलं] शशिबिम्बम् एतत् उद्गिरति उद्वमति । रहस्यम् इव इत्युपमा । तदपि सखीचोदनयोच्यते¹ । कीदृशं रहस्यम् । [आदिनक्षयात्] आदिवसान्तं रुद्धनिर्गमनं रक्षितप्रसरम् । रहस्यं हि दिने न कस्यचिदुदीर्यते [पूर्वदृष्टतनुचन्द्रिकास्मितं] पूर्वं दृष्टा तन्वी चन्द्रिकेव स्मितं यस्य । हासपूर्वं हि रहस्योद्गिरणम् ॥ ६० ॥

१ 'नोच्यते इति पाठान्तरम्'-अपा-क न.

पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोम्भसा ।
विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ ६१ ॥

पश्य पक्वेत्यादि ॥ पार्वति पश्य एतत् वियुक्तं [चक्रवाकमिथुनं] रथाङ्गनामयुगं [हिमांशुना] इन्दुना विडम्ब्यते अनुक्रियते । यतः [पक्वफलिनीफलत्विषा] परिणतप्रियङ्गुफलपीतेन नवोदितत्वात् । तथा [बिम्बलाञ्छितवियत्सरोम्भसा] बिम्बेन मण्डलेन लाञ्छितेऽङ्किते वियत्सरोऽम्भसी येन, नभसि ह्यसौ स्वयमेव स्थितः । सरसि तु प्रतिबिम्बितः । अतश्च व्यवहितचक्रवाक[युगल]सारूप्यम् । केचित् तु भ्रान्त्युत्पादाद्विडम्ब्यते विचार्यत इति किलाहुः । एवं च वियद्ग्रहणमकिञ्चित्करं स्यात् ॥ ६१ ॥

शक्यमोषधिपतेर्नवोदयाः कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसंपुटैः कराः ॥ ६२ ॥

शस्यमोपधिपतेरित्यादि ॥ [ओषधिपते ] इन्दो [ करा ] किरणा· तव कर्णपूररचनाकृते श्रोत्रावतंसकरचनार्थम् [ अग्रनखसपुटै ] कररुहकुड्मलाग्रै छेत्तु शस्य शक्यन्ते । यत नवोदया अचिरोदिता । अत एव [अग्रगलभयवसूचिकोमला ] अजरठयवाङ्कुरसुकुमारा । कोमलत्वाच्च छेदशक्तिसम्भावना । यवाङ्कुराश्च मङ्गलत्वात्प्रायेण कर्णे क्रियन्ते । शस्यशराच्छेतुमिति पूर्वं सामान्योपक्रम पश्चाद्विशेषाभिधानमिति भिन्नलिङ्गवचन येऽपि सामानाधिकरण्यं न विरुध्यते । कूपशताद्वापी इत्यादि ॥६२॥

अङ्गुलीभिरिव केशसंचय सन्निगृह्य तिमिर मरीचिभिः ।
कुड्मलीकृतसरोजलोचन चुम्बतीव रजनीमुख शशी ॥ ६३ ॥

अङ्गुलीभिरित्यादि ॥ [अङ्गुलिभि इव] अङ्गुलिनिभै [मरीचिभि ] मयूखै [केशसचय] केशकलापकल्प [तिमिर] तम सन्निगृह्य आकृष्य [रजनीमुख] यामिनीवधूवक्त्र [शशी] चन्द्र[1] चुम्बति इव पिबतीव, इत्यतिसन्निकर्षाच्चुम्बनारोप । [कुड्मलीकृतसरोजलोचन][2] मुकुलितानि कमलान्येव लोचनानि यत्र मुकुलीकृतनलिननेत्रम् । मुखपाने हि कामिन्य श्चक्षुषी सङ्कोचयन्तीति स्वभावोक्ति ॥ ६३ ॥

१ यामिनीन थ –ल २ 'कुड्मलीकृतानि'–अपा–ल

पश्य पार्वति नवेन्दुरश्मिभिर्भिन्नसान्द्रतिमिर नभस्तलम् ।
लक्ष्यते द्विरदभोगदूषित[1] संप्रसीदद्दिव[3] मानस सरः ॥ ६४ ॥

१ शामिभिन्न०–स अ ना म २ ०दूषित स ३० सम्प्रसादमिव–म

पश्य पार्वतीत्यादि ॥ [पार्वति] प्रिये [पश्य] विलोकय । [नवेन्दुरश्मिभि ] शशिकर [भिन्नसान्द्रतिमिरम् ] ईषदुन्मूलितान्धकार [नभस्तलं] त [मानस सर ] मानसाख्यसर [इव] सदृशं [लक्ष्यते] दृश्यते । कीदृक् सर । [द्विरदभोगदूषित] पूर्वं द्विरदाभोगै सुरकरिकायैर्दूषितमाविलीकृत मनन्तर सम्प्रसीदत् वैमल्यमाप्नुवत् । मानसस्यातिविपुलत्वात् एतदुपमानम् ॥ ६४ ॥

रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डलः ।
विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥ ६५ ॥

रक्तभावमित्यादि ॥ एष [चन्द्रमाः] शशी [रक्तभावं] लौहित्यम् [अपहाय] त्यक्त्वा [परिशुद्धमण्डलः] निर्मलबिम्बः [जातः] सम्पन्नः । यस्मात् [निर्मलप्रकृतिषु] शुद्धस्वभावेषु [कालदोषजा] कालदोषवशादुत्पन्ना [विक्रिया] विकृतिः न [स्थिरोदया] बहुकालभाविनी । शशी च प्रकृत्या निर्मलः ॥ ६५ ॥

उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः ।
नूनमात्मसदृशी प्रकल्पिता वेधसा हि[1] गुणदोषयोर्गतिः ॥ ६६ ॥

१ वेधसेह–स. मुद्रा.

उन्नतेष्वित्यादि ॥ एष शशिनः प्रभा ज्योत्स्ना [उन्नतेषु] उच्चभागेषु [स्थिता] अवस्थिता । [निशातमः] तिमिरं तु निम्नसंश्रयपरं कूपाद्यधोभागस्थमभवत् । [हि] अतश्च जानीमहे । [वेधसा] प्रजापतिना [नूनं] निश्चितं गुणदोषयोः गतिः स्थितिः [आत्मसदृशी] आत्मानुरूपा [प्रकल्पिता] कृता । गुणानामुन्नतेषु सज्जनवदवस्थानं दोषाणां तु दुर्जनवन्नीचेषु ॥६६॥

चन्द्रपादजनितप्रवृत्तयश्चन्द्रकान्तजलबिन्दवो[2] गिरौ[3] ।
मेखलातरुषु निद्रितान्[4]मून्बोधयत्यसमये शिखण्डिनः ॥ ६७ ॥

१. ०प्रवृत्तिभि०–म. २. ०बिन्दुभिः–म. ३. गिरि–म.
४. निद्रता०–अ ना.

चन्द्रपादेत्यादि ॥ अत्र गिरौ [मेखलातरुषु] नितम्बवृक्षेषु निद्रितान् सुप्तान् [शिखण्डिनः] मयूरान् [असमये] अकाण्डे एवैते चन्द्रकान्तमणिजलबिन्दवः[1] [बोधयन्ति] उन्निद्रयन्ति । यतस्ते चन्द्रपादजनितप्रवृत्तयः शशिकरसंस्पर्शादुत्पन्नस्रुतयः । अतश्च जलधरजलकणभ्रान्त्या बर्हिणामुल्लासः ॥ ६७ ॥

१. 'सोमकान्ततोयविप्रुषः'–अत्र–ग.

कल्पवृक्षशिखरेषु सम्प्रति प्रस्फुरद्भिरविकल्पसुन्दरि[1] ।
हारयष्टिगण[2]नामिवांशुभिः कर्तुमागतकुतूहलः शशी ॥ ६८ ॥

१. ०भिरिव पश्य सुन्दरि–म. अ. ना. २. ०रत्ना०–म.

कल्पवृक्षेत्यादि ॥ हे [अविकलसुन्दरि] निःसंशयरम्ये [कल्पवृक्ष-शिखरेषु] कल्पपादपशिरस्तलेषु सितैः [अंशुभिः] करैः नूनमयं [शशी] इन्दुः [हारयष्टिगणनां] मुक्ताहारलतासंख्यानं [कर्तुं] विधातुम् [आगत-कुतूहलः] उत्पन्नकौतुकः । सर्वेष्वेव मुक्ताप्रालम्बेषु कराणां स्फुरितत्वाद् गणनां चकार । संस्पर्शेण[1] कियत इत्येवं सम्भावना ॥ ६८॥

१. गणना च करस्पर्शेन—ख. न.

उन्नतावनतभागवत्तया चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तहस्तिनः[1] ॥ ६९ ॥

१. ०दन्तिनः—स.

उन्नतावनतेत्यादि ॥ सतिमिरा चन्द्रिका इयं गिरेः [भाति] शोभते [भूतिः] भस्म इव [मत्तहस्तिनः] करीन्द्रस्य । कुतः । ज्योत्स्नायास्तमो-मिश्रत्वमाह । [उन्नतावनतभागवत्तया] उन्नतावनतभागवत्त्वेन उच्चेषु भागेषु ज्योत्स्ना, निम्नेषु तमः । कीदृशी भूतिः । भक्तिभिः विच्छित्तिभिः [बहुविधार्पिता] नानाप्रकारं रचिता । अतश्च क्वचित् स्वाभाविककार्ष्ण्य-मुपलक्ष्यते ॥ ६९ ॥

एतदुच्छ्वसितपीतमैन्दवं वोढुमक्षममिव प्रभारसम् ।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥ ७० ॥

एतदुच्छ्वसितेत्यादि ॥ एतत् कुमुदं कैरवम् आ निबन्धनात् आवृन्तं कार्त्स्न्येन अञ्जसा आशु भिद्यते विकसति । उत्प्रेक्षते । ऐन्दवं प्रभारसं कान्तिजलम् [ उच्छ्वसितपीतम् ] उच्छ्वसस्योच्छ्वसस्य पीतत्वाद् वोढुम् अक्षमम् इव अशक्तमिव । यः किलातितृप्तोऽतितरां पिबति, असौ वोढुमक्षमो विसूचिकया भिद्यते स्फुटति । यच्च [ कुमुदं ] भिद्यते तत्पुरतः मुक्तषट्-पदविरावं [ भवति ]। विकसति हि कुमुदे रजोलम्पटा भ्रमरा विरुवन्ति । उच्छ्वसितेन विकसितेन सोच्छ्वासेन पीतमुच्छ्वसितमिति तृतीया-समासोऽत्र । प्रभैव रसः प्रभारस इति मयूरव्यंसकादित्वात्समासः । भिद्यत इति कर्मकर्तरि । कुमुदमिति जातावेकवचनम् । ॥ ७० ॥

पश्य कल्पतरुलम्बि शुद्धया[1] ज्योत्स्नया जनितरूपसंशयम् ।
मारुते चलति चण्डि केवलं[2] व्यज्यते विपरिवृत्तमंशुकम् ॥७१॥

१. शुभ्रया—स. २. चण्डिके व्यक्त्—म.

पश्य कल्पेत्यादि ॥ हे चण्डि[1] भामिनि [ पश्य ] विलोकयैतत् । [ कल्पतरुलम्बि ] कल्पवृक्षे लम्बमानम् [ अंशुकं ] चीरं [ मारुते ] वाते [ चलति ] वहति [ विपरिवृत्तं ] विपरिवृत्तत्वात् केवलं व्यज्यते स्फुटी-भवति न तु स्वसत्तया । यतो [ शुद्धया ] निर्मलया [ज्योत्स्नया] चन्द्रिकया [ जनितरूपसंशय ] कृतसत्तासन्देह द्वयोरपि सितत्वात् । वातचलनात्तु निश्चय । चण्डीशब्दे षिद्गौरादित्वान्ङीष्[2] । व्यज्यत इति कर्मकर्तरि ॥ ७१ ॥

१ 'प्रणयकुपिता नारी चण्डीत्यभिधीयते'—अपा—त. २ इ पा. सू ४-१-४५

शक्यमङ्गुलिभिरुद्धृतैरधः शाखिनां पतितपुष्पपेशलैः ।
पत्रजर्जरशशिप्रभालवैरेभिरुत्कचयितुं तवालकान् ॥ ७२ ॥

१. ०रुत्थितैर०—म.

शक्यमङ्गुलिभिरित्यादि ॥ [ शाखिनाम् ] अध तरुविटपविवर- [ पत्रजर्जरशशिप्रभालवैः ] पत्र. जर्जरा. खण्डा ये शशिप्रभालवा ज्योत्स्नाबिन्दवस्ते अङ्गुलिभि उद्धृतै गृहीतैः तव [ अलकान् ] अलका कचाः [ उत्कचयितुम् ] अलङ्कर्तु [ शक्यम् ] शक्या । वृक्षाणामध पतितानि यानि पुष्पाणि तद्वत् पेशलमनोज्ञैः । कोमलैरिति पाठे कोमल सुकुमार सदृशं च अतश्च तदतलपतितै. पुष्पैर्यद्वदलङ्कारो मण्डयते तद्वदेभिस्तव तत्सदृशैश्चन्द्रिकाभिरपीति वाक्यर्थ । उत्कचनमलङ्करण-मूर्ध्वरन्ध इति केचित् ॥ ७२ ॥

एष तारमुखि[1] योगतारया[2] युज्यते तरलबिम्बया शशी ।
साध्वसादुपगतप्रकम्पया कन्ययेव नवदीक्षया[3] वरः ॥ ७३ ॥

१. चारुमुखि—म म मुद्रा. २ योग्यतारया—म. ३. नवदीक्षि—म.

एष तारमुखीत्यादि ॥ हे [ तारमुखि ] विमलवदने एष शशी [ तरलबिम्बया ] चटुलदेहया योग्यतारया प्रयुज्यते सम्बध्यते । यथा [ साध्वसात् ] भयात् [ उपगतप्रकम्पया ] वेपथुमत्या [ नवदीक्षया कन्यया ] नवोढया वरः [योगतारया] तथा । दीक्षाऽत्र विवाह. ॥ ७३ ॥

पाकभिन्नशरकाण्डगौरयोरुल्लसत्प्रतिकृतिप्रसन्नयोः[1] ।
रोहतीव तव गण्डलेखयोश्चन्द्रबिम्बनिहिताक्षि[2] चन्द्रिका ॥ ७४ ॥

१. ०प्रकृतिप्रसादयो—म. मुद्रा. २. ०निहिताक्षि—म. ०निमिताक्षि—ड. मुद्रा.

पाकभिन्नेत्यादि ॥ हे चन्द्रबिम्बनिहिताक्षि शशिमण्डलक्षिप्तनयने तवैषा चन्द्रिका [ गण्डलेखयोः ] कपोलयोः रोहति इव जायत इव । कीदृशयोः । [पाकभिन्नशरकाण्डगौरयोः] पाकेन भिन्ना विशेषिताः शरकाण्डाः शरतृणस्तम्बास्तद्वद् गौरयोः । [ उल्लसत्प्रतिकृतिप्रसादयोः ] अत एवोल्लसन्ती स्फुरन्ती याऽसौ प्रतिकृतिश्चन्द्रिकाबिम्बं तया प्रसन्नयोः सतेजसोः । प्रतिकृतिरिति पृथक्वाक्ये तु चन्द्रिकाविशेषणम् ॥ ७४ ॥

इत्यभिदधति भगवति वनदेवता मद्गलोद्दीपकं दिव्यं पानमादाय देवीनिकटमुपाययौ । ततो भगवान्पुनराह–

लोहितार्कमणिभाजनार्पितं कल्पवृक्षमधु बिभ्रति स्वयम् ।
त्वामियं स्थितिमती समागता[1] गन्धमादनवनाधिदेवता ॥ ७५ ॥

१. ०मनीमुपागता–म., ०मतीमुपस्थिता–ष.

लोहितार्केत्यादि ॥ इयं [ गन्धमादनवनाधिदेवता ] गन्धमादनाद्रिवनदेवता [ कल्पवृक्षमधु ] कल्पतरूणां[1] मधु मद्यं स्वयं [ बिभ्रति ] आदाय त्वां [ समागता ] समुपागता प्राप्ता । यतः स्थितिमती साचारा । कीदृक् मधु । [ लोहितार्कमणिभाजनार्पितं ] लोहितो रक्तोऽर्कमणिः पद्मरागस्तन्निर्मिते भाजने पात्रेऽर्पितं न्यस्तम् ॥ ७५ ॥

१. कल्पवृक्षकम्–ल.

आर्द्रकेसरसुगन्धि ते मुखं रक्तमत्तनयनं[1] स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं किं विलासिनि मदः करिष्यते ॥ ७६ ॥

१. मत्तरक्त०–ष. मदमत्त०–सुधा., रक्तनेत्र–म. प्रान्तरक्त०–सूपा.

आर्द्रकेसरेत्यादि ॥ हे विलासिनि त्वदीये अत्र [ मुखं ] मुखे [ लब्धवसतिः ] प्राप्तावस्थानः मदः किम् इव गुणान्तरं [ करिष्यति ] विधास्यति । यतस्तद् आर्द्रकेसरसुगन्धि सरसबकुलकुसुमवत्सुरभि [ स्वभावतः ] प्रकृत्या च [ रक्तमत्तनयनं ] लोहिते मत्तमत्ते क्षीबे इव[1] चटुलत्वान्नयने यत्र । मदेन हि सौरभे नेत्रे [ सति ] चटुलविलासा विधेयाः ॥ ७६ ॥

१. 'क्षीबे इव'–नास्ति–ल. न.

किं तर्हि न पेयमित्यादि—

मान्यभक्तिरथवा सखीजनः सेव्यतामिदमनङ्गदीपनम् ।
इत्युदारमभिधाय शङ्करस्तामपाययत पानमम्बिकाम्[1] ॥ ७७ ॥

१. पानमङ्गनाम्–अ. ना.

मान्यभक्तिरित्यादि ॥ अथवा [सखीजनः] वयस्यालोकः मान्यभक्तिः अनुष्ठेयः सेव्यः । यदि च त्वं प्रत्याचक्षे तदपमानितैषा स्यादतः [सेव्यतां] पीयतामिदं मधुगुणान्तरम् [अनङ्गदीपनं] मदनसंधुक्षणम् इति उदारं महार्घं [अभिधाय] उक्त्वाऽसौ [तां] प्रियां [पानम्] आसवं अपाययत । अपोप्यादिति पिबतेः प्रत्ययसानार्थत्वात् द्विकर्मकता ॥ ७७ ॥

पार्वती तदुपभोगसंभवां विक्रियामपि सती[2] मनोहराम्[3] ।
अप्रतर्क्यविधियोगनिर्मितामाम्रतेव सहकारतां ययौ ॥ ७८ ॥

१. ०दुपयोग०–अ. ना. २. सगम्–म., सतीम्–मुद्रा.
३. मनोभराम्–स. ४. ०विनियोग–अ. ना.

पार्वती तदुपभोगेत्यादि ॥ ततः [पार्वती] गौरी तदुपभोगसम्भवां मधुपानोत्थां विक्रियां क्षीबताख्यं विकारं ययौ प्राप । असावपि विक्रियाऽपि मनोहरा[1] । अपि विस्मयगर्भे विरोधे वा । विकारः किल न तथा रम्यः स्यात्[2] । का यथा कां विक्रियां रम्यां यातीत्याह । आम्रता इव सहकारताम् इति । आम्रो हि प्रकृतिः सहकारता विकृतिरपि प्रकृतेरुत्कृष्टा सुस्वादु सुगन्धित्वात् । आम्रता कथं सहकारतां यातीत्याह । [अप्रतर्क्यविधियोगनिर्मितां] अप्रतर्क्यो दुर्ज्ञेयो यो विधियोगो दैवव्यापारस्तेन विनिर्मितां रचिताम् । आम्रता हि केनचिद् दैववशात्[3] सहकारतां सम्पद्यते यं न विद्मः[4] । कस्मिन् देशे कविना आम्रसहकारयोः प्रकृतिविकारभावो दृष्टोऽस्माभिर्हि सामान्यविशेषभावस्तयोरुपलब्धः ।

१. 'शोभना'–अत्र–स. २. भवति–स. ३. वशात्–स.
४. जानीमः–स.

तथा चोक्तम्—

अपुष्पफलवानाम्रः पुष्पितश्चूत उच्यते ।
पुष्पैः फलैस्तु संयुक्तः सहकार उदाहृतः ॥ ७८ ॥

तत्क्षणं विपरिवर्तितह्रियोर्नेष्यतोः[1] शयनमिद्धरागयोः ।
सा बभूव वशवर्तिनी द्वयोः शूलिनः सुवदना मदस्य च ॥ ७९ ॥

१. दिक्षतोः–स.

तत्क्षणमित्यादि ॥ सा [सुवदना] कान्तमुखी द्वयोः उभयोः [वशवर्तिनी] आयत्ता [बभूव] आसीत् । कीदृशयोः । विपरिवर्तितह्रियोः अपास्तत्रपयोः । निशि द्वयमपि निर्लज्जयति । रिरंसार्थं च [शयनं] शयनतलं नेष्यतोः [इद्धरागयोः] इद्धो दीप्तो रागोऽनुरागो ययोः ॥७९॥

घूर्णमाननयनं स्खलद्वचः[1] स्वेदबिन्दुमदकारणस्मितम् ।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥ ८० ॥

१. ०त्कचं–स., ०त्कथम्–म. मुद्रा.

घूर्णमानेत्यादि ॥ एवंविधम् [उमामुखं] गौरीवक्त्रम् [ईश्वरः] भगवान् [आननेन] मुखेन न तावत् पपौ अपि चक्षुषा एव दृश्यमानेनैव तेन सुखोत्पादनात् । तावच्छब्दोऽनन्तरं मुखपानमपि सूचयति । तथा घूर्णमाननयनं चञ्चलनेत्रं स्खलद्वचः अन्तराविच्छिन्नवचनं स्वेदबिन्दुमद् घर्मकणाचितम् । अकारणस्मितं निर्निमित्तहासम् । चुम्बनं दर्शनं च पानम्[1] ॥ ८० ॥

१. 'अत्र पाठान्तरम् । चुम्बने पानदर्शनम्' । अपा–ल. न.

तां विलम्बितपनीयमेखलामुद्वहञ्जघनभारदुर्वहाम् ।
ध्यानसंभृतविभूतिरीश्वरः[1] प्राविशन्मणिशिलागृहं रहः[2] ॥ ८१ ॥

१ ध्यानसभवविभूतिसम्भृत–स. ०तिगोचरम्–मुद्रा. ०तिभास्वरम्–अ. ना.

२. हरः–स. मुद्रा.

तां विलम्बीत्यादि ॥ ततः [ईश्वरः] शंभुः गौरीम् [उद्वहन्] आदाय रहः एकान्ते मणिशिलागृहं प्राविशत् । कीदृशीं । मदवशात् [विलम्बितपनीयमेखलां] विलम्बिनी[1] मेखला कनकरशना यस्याः । तयां

१. 'लम्बमाना तपनीय०'–अपा–ल.

[जघनभारदुर्वहा] जघनभारेण[२] दुर्वहा गुर्वीम् । कीदृशो हरः[३] । [ध्यानसंभृतविभूति] ध्यानेनेच्छामात्रेण सम्भृतविभूतिरुपस्थापिततल्पाद्युपकरणः ॥८१॥

२ 'श्रोणीभारेण'–अपा–ल. ३ भगवान्–र

तत्र हंसधवलोत्तरच्छदं जाह्नवीपुलिनचारुदर्शनम् ।
अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः ॥ ८२ ॥

तत्र हंसेत्यादि ॥ तत्र वासवेश्मनि असौ [प्रियासखः] प्रियया सह[१] शयनम् अध्यशेत पर्यङ्कमधितस्थौ । शारदाभ्रम्[२] इव रोहिणीपतिः रोहिण्या साकमिन्दुः । कीदृशम् । [हंसधवलोत्तरच्छदं] हंसवद् धवल उत्तरच्छदः प्रच्छादनपटो[३] यस्य । तथा [जाह्नवीपुलिनचारुदर्शनं] गङ्गासैकतवन्नेत्रसुखकारि सितत्वाद् विशालत्वाच्च ॥ ८२ ॥

१ भार्यासहाय –अपा–र २ सिताभ्रम्–अपा–र ३ प्रच्छदपट –ल

क्लिष्टकेशमवलुप्तचन्दनं[१] व्यत्ययार्पितनखं[२] समत्सरम् ।
तस्य तच्छिदुरमेखलागुणं पार्वतीरतमभून्न तृप्तये[४] ॥ ८३ ॥

१ ०मभिन्न०–ह ०मविन्न०–मुद्रा २. क्लिष्टचन्द्रमन्ये कचग्रहे –म अ ना
३ व्युत्पया०–ह ह्रत्या०–मुद्रा ४ ०मभूदतृप्तये–अ ना म

क्लिष्टकेशमित्यादि ॥ तस्य ईश्वरस्य [पार्वतीरतम्] उमानिधुवनं तृप्तये न अभूत् । अभिलाषमवर्धयत् । कीदृशम् । [क्लिष्टकेशं] कदर्थितकेशपाशम्[१] । अवलुप्तचन्दनम् उत्पुंसिताङ्गरागम् । [व्यत्ययार्पितनखम्] अस्थानदत्तकररुहं मांसलेष्वपि स्थानेषु दत्तनखम्[२] । समत्सरम् ईर्ष्यायुतम् । छिदुरमेखलागुणं त्रुटितमेखलादाम । एतस्य वरः कोटिमधिरूढत्वात् । स्वयं छिद्यत इति छिदुरम् ॥ ८३ ॥

१ ०शिरोरुह क्लिष्टकेशपाशम्–भ २ वदानात्–र

केवलं प्रियतमादयालुना ज्योतिषामवनतासु पङ्क्तिषु ।
तेन तत्प्रतिगृहीतवक्षसा नेत्रमीलनकुतूहलं कृतम् ॥ ८४ ॥

केवल प्रियतमेत्यादि ॥ तेन पार्वतीरततृप्तिर्नाधिगता केवलं [ज्योतिषां पङ्क्तिषु] ताराश्रेणिषु [अवनतासु] लम्बमानासु प्रभातकाले [प्रियतमा दयालुना] प्रियाया कृपालुत्वात् [नेत्रमीलनकुतूहल] नेत्रमीलने स्वापे कौतुकं [कृतम्] अकारि । कथ सुप्यत इति । न हि भगवतस्तत्त्वतो निद्रामोहाविर्भाव: । तथा [तत्परिगृहीतवक्षसा] कान्तया परिगृहीतमाश्लिष्टं वक्षो यस्य । देवीमालिङ्ग्य मनागस्वपदित्यर्थ ॥ ८४ ॥

स व्यबुद्ध्यत बुधस्तवोचितः शातकुम्भकमलाकरैः समम् ।
मूर्च्छनापरिगृहीतकैशिकैः किन्नरैरुषसि गीतमङ्गलः ॥ ८५ ॥

स व्यबुद्ध्यतेत्यादि ॥ तत स असौ उषसि प्रभाते व्यबुध्यत निद्रामत्याक्षीत् । शातकुम्भकमलाकरै समम् । मानसकनककमलखण्डानि यदा विकसितानि तदाऽसावुन्निद्रो इत्यर्थ । कीदृश । बुधस्तवोचित बुधाना ब्रह्मविष्णुशक्रप्रभृतीनां स्तवोचित स्तुत्य । तथा गेयहै [किन्नरै] किंपुरुषै गीतमङ्गल उच्चारितस्तव । किम्भूतै । [मूर्च्छनापरिगृहीत-कैशिकै] मूर्च्छनया स्वरसञ्चारणया परिगृहीता आश्रिता कैशिकी नाम जातिर्यै । सा हि देवस्तुतियोग्या ॥ ८५ ॥

तौ क्षण विशिथिलोपगूहनौ दम्पती चलित[1]मानसोर्मय: ।
पद्मभेदपिशुना: सिषेविरे गन्धमादनवनान्तमारुता: ॥ ८६ ॥

१ रचित०–स

तो क्षणमित्यादि ॥ [विशिथिलोपगूहनौ] विमुक्तालिङ्गनौ तौ [दम्पती] जायापती [गन्धमादनवनान्तमारुता] गन्धमादनवनोद्देशवायव सुरतखेदा· पनुदे सिषेविरे । कीदृशा । चलितमानसोर्मय इति सेव्योक्ति । सुरभित्वात् । पद्मभेदपिशुना कमलविकाससूचका·[1] ॥ ८६ ॥

१ 'इति शीत घोकि·'–अपा –ङ.

ऊरुमूलनखमार्गराजिभिस्तत्क्षणं हृतविलोचनो हरः ।
वासस: प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत् ॥ ८७ ॥

ऊरुमूलमित्यादि ॥ तत [प्रशिथिलस्य] श्लथस्य [वासस] अंशुकस्य [संयमं] ग्रथनं [कुर्वतीं] विदधतीं [प्रियतमां] कान्तां हर ईश्वर: अवारयत्

न्यषेधीत् । यत तत्क्षण ऊरुमूलनखमार्गराजिभि श्रोणीतटकररुहपद लेखाभि हतविलोचन लोभितनयन । अतश्च भूयो रिरंसया प्रियावास संयमननिवारणम् ॥ ८७ ॥

स प्रजागरकषायलोचनं गाढदन्तपदपीडिताधरम्[1] ।
आकुलालकमपास्तचित्रकं वीक्ष्य[2] भिन्नतिलकं[3] प्रियामुखम् ॥८८॥

१ ०रिताडिताधरम्-म ०पददारिता०-अ ना
२ ०मरस्तरङ्गवान् प्रेक्ष्य-ब    ३ तृप्तिमगमत्-मुद्रा

स प्रजागरेत्यादि ॥ स देव प्रियामुख दयितावदन [वीक्ष्य] दृष्ट्वा । कीदृशम् । प्रजागरकषायलोचनम् अप्रसुप्त[1]मधुरनयनम् । तथा गाढदन्त पदपीडिताधर तीक्ष्णरदनपरिपीडितोष्ठम्[2] आकुलालक धूतललाटकेश अपास्तचित्रकं निवृत्तविशेषक भिन्नतिलक नष्टतमालपत्र यत्र तथाविध प्रियामुख वीक्ष्य ॥ ८८ ॥[3]

१. अप्रसु०-ल  २ ०पाध म्-अपा -ल  ३ प्रियावदर हि स्यात् अस्य श्लोकस्य पञ्जिका अपूर्णा प्रतिभाति ।

तेन भङ्गि[1]विषमोत्तरच्छदं मध्यपिण्डितविसूत्रमेखलम् ।
निर्मलेऽपि शयनं निशात्यये नोज्झितं चरणरागलाञ्छितम् ॥८९॥

१. भिन्न०-म

तेन भङ्गीत्यादि ॥ अनश्च [निशात्यये] क्षणदान्ते [निर्मले] सुप्रभते अपि [शयनं] तल्पं नोज्झित न त्याजि । कीदृशम् । भङ्गिविषमोत्तरच्छद भङ्गिभिस्तरङ्गैर्विषम निम्नोन्नतमुत्तरीय यत्र । तथा छिन्नतन्तुत्वात् [मध्यपिण्डितविसूत्रमेखल] मध्ये पिण्डिता पुञ्जीभूता[1] मेखला यत्र । विपरीतसुरतवशात् चरणरागलाञ्छित पादालक्तमुद्राङ्कितम् ॥ ८९ ॥

१ पुञ्जित-ल

स प्रियामुखरसं दिवानिशं हर्ष[1]वृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यतामाजगाम विजयानिवेदनात्[2] ॥ ९० ॥

१ हर्ष०-म स    २ ०निवेदित -म.

स प्रियामुखेत्यादि ॥ ततः स असावीश्वरः विजयानिवेदनात् [ दर्शनप्रणयिनां ] दर्शनार्थिनाम् अदृश्यताम् [ आजगाम ] आययौ । ये हि भगवन्तमीक्षितुमायान्ति स्म तेषां विजयाख्या प्रतीहारी 'न दृश्यते देव' इत्युवाच । यतः तर्षवृद्धिजननं अभिलाषोद्दीपनं [ प्रियामुखरसं ] कान्ताधररसामृतं [ दिवानिशम् ] अनवरतं [ सिषेविषुः ] सेवितुकामः । रथोद्धता वृत्तं[1] ॥ ९० ॥

१. एतानि रथोद्धतावृत्तानि–ल.

समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां साग्रमेका निशेव ।
न तु सुरतसुखेभ्यश्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलेषुः[2] ॥ ९१ ॥

१. सार०–मुद्रा., सार्ध०–अ.ना.म.   २. ०कलौघैः–स.म.

समदिवसेत्यादि ॥ तत्र गन्धमादनगिरौ समदिवसनिशीथम् अहोरात्रविभागेन सङ्गिनः रममाणस्य [ शंभोः ] देवस्य साग्रम् अधिकं विध्यम् ऋतूनां शतं [ निशा इव ] एकरात्रिरिव [ अगमत् ] जगाम ययौ । न चासौ सुरतसुखेभ्यः निधुवनोपजोषेषु [ छिन्नतृष्णः ] विगताभिलाषः बभूव अभवत् । यथा समुद्रान्तर्गतः ज्वलनः वडवानलः तज्जलेषूदधितोयेषु अपगतरुचिर्न भवति अद्याप्यप्रक्षीणत्वात्[1] । ऋतुशब्देनाऽत्र लक्षणया वर्षं लक्ष्यते । मालिनीवृत्तमुपमालङ्कारः । इति भद्रम्[2] ।

१. अद्याप्यन्तु क्षयं कुरुते ।–ल.   २. 'भूयात्'–अपा.–ल.

इत्यानन्ददेवायनिवल्लभदेवविरचितायां कुमारसम्भवटीकायामष्टमः सर्गः समाप्तः[3] ।

३. इत्यानन्ददेवायनिवल्लभदेवविरचितायां कुमारसम्भवलघुटीकायां अष्टमः सर्गः समाप्तः –ल. न., इति कुमारसंभवे अष्टमः सर्गः कृतिः श्रीमत्कालिदासस्येति शुभम्–मुद्रा.

श्रीविक्रमार्कावनिपालकालाद्रसेन्दुपायोधिकुसंख्यवर्षे ।
मासे शुचौ शुभ्रचतुर्दशाहे व्यलेखि टीका गुहसंभवास्य ॥

# SECTION V

## Appendices

## 1. पाठान्तराणि

[व = वल्लभदेव, अ = अरुणगिरि, ना = नारायण, चा = चारित्रवर्धन, म = मल्लिनाथ, भ = भरत, गो = गोपाल, बृ = बृहस्पति, स = सूर्यकान्त, रे = रेवाप्रसाद सूपा = Foot note in सूर्यकान्त's edition]

1. 1–1 तोयनिधी—व. म. चा. वारिनिधी—अ. ना. मुद्रा.
2. 1–1 विगाह्य—व. अ. ना. चा. बृ. म गो. मुद्रा. वगाह्य—म. रे. स
3. 1–8 स्थानप्रदायित्वम्—व. चा. सूपा. मुद्रा. ०तान०-अ. ना. म. रे.
   1–8 प्रसूनैः—व. चा. स. म. अ. ना. समीरः—मुद्रा.
4. 1–30 प्राग्भवजन्मविद्या—व. प्राक्तन०—चा. म. अ. ना. स. मुद्रा.
5. 1–34 ०विभ्रमेषु—व. चा. स. मुद्रा० विक्रमेषु—अ. ना. म. भ. गो. सूपा.
6. 1–40 पाण्डु—व. मुद्रा. ना. अ. म. स. रे. चारु—चा. सूपा.
7. 1–41 शिरीषमाला०—व. मुद्रा ०पुष्पा०—म. चा. स. अ. ना.
8. 1–42 तस्याः स्तनबन्धुरस्य—व. मुद्रा चा. म. स. तस्यास्तनुबन्धुरस्य—अ. ना. ०बन्धुरस्य—बृ. म. गो निस्तलस्य—व. चा. अ ना. म. मुद्रा निस्तुलस्य—बृ. सूपा.
9. 1–47 आयतरेखयोः—म. व. स. आनतलेखयोः—व. मुद्रा. आनतरेखयोः अ. ना. सूपा. लीलाचिकुरा०—व. मुद्रा स. ०चतुरा०-म व. अ. ना.
10. 1–53 स्वयमुत्ससर्ज—व. मुद्रा. सुदती ससर्ज—म. चा. अ. ना. सूपा. जनने—व. मुद्रा. म. अ चा. ना. ज्वलने—स
11. 1–55 दधाना—चा. म. स. वसाना—व. मुद्रा अ. ना. शैलेयनद्धेषु—व. मुद्रा. चा. म. स. रे. ०गन्धेषु—अ. ना.
12. 1–58 सखीसमेतां—व. मुद्रा. म. चा म. समग्रां—अ. ना.
13. 2–12 उद्गीथः—व. चा. मुद्रा. उद्गातः—म. स. म. बृ. रे.

14. 2–19 ०प्रसादानि–चा अ ना स प्रकाशानि–म स गो प्रभावानि–व सूपा

15 2–26 क्षताह कार०–व अ चा म बृ गो सूपा क्षतहु कार०–म स

16. 2–30 स द्विनेत्रं हरश्चक्षु सहस्रनयनाधिकम् । –व म ॥ रे स विनेत्रं हरश्चक्षुर्दशचक्षुशताधिकम् । –अ ना

17. 2–9 ०मनन्तो जगतोऽन्तक –व मशा जगदन्तो निरन्तक –म अ ना जगदीशो निरीश्वर –म

18. 2–19 किमिद्–व मुशा म अ ना स किमति–स प्रसादानि–व मुशा अ ना प्रकाशानि–म

19. 2–26 क्षताहकार०–व मुशा अ ना चा क्षतहुकार०–म स

20 2–27 वल्कत्तरै –व मुशा अ ना म स रणोत्तरै –सूपा

21. 2–32 भवल्लब्धवरोदीर्ण –व म चा सूपा त्वयादत्तवरोदीर्ण -अ ना त्वयादत्तवरोद्गूर्ण –सू

22. 2–35 कुसुमस्तेयसाध्यसात्–व. मुशा चा म स ०साहसात्–अ ना साहसात् अपहारदण्डमाशक्य–अ उद्यानकुसुमस्तेयसाहसमाशक्य स्तेयम् अपहार तस्मात् हेतो य साहस दण्ड दण्ले दम साहसोऽस्त्री इति वैजयन्ती । –ना

23 2–39 प्रत्यहम्–व मुशा सूपा त पुन –सूपा स मुहु –म चा ना अ स

24. 2–42 सुरवन्दीभि –मुशा व अ ना सुरवन्दीनाम्–स म र सी

25. 2–45 नाकिभि –व मुशा स्वर्गिभि –चा अ ना नानुमीयते-सूपा

26. 2–52 स्रष्टुम् व मुशा स्रष्टुम्–अ ना चा म स इच्छाम–व मशा अ ना इच्छामो–म स

27. 1–56 वरेणाशमितम्–व मुशा अ ना वरण शमितम्–म चा स सी ०शमितुम्–सूपा see वरण तदुक्तवरप्रदानेन अशमित शान्तमप्रापित सत् लोकान् त्रीनपि लोकान् दग्धु भस्मसात्कर्तुम् अल पर्याप्तम् । उपद्रवसहनमेव हि भस्मीभावाद् वराय । 'त्यजेदेक कुलस्यार्थे, इत्यादिन्यायात् । अतो लोकानुग्रहार्थमेव मया तदुक्ता वरा सर्वे तस्मै दत्ता इति भाव ।–ना

28. 2 64 सललित°–व स ललित°–अ ना म स सुललित°–चा गो
बृ म सूपा

29. 3-1 आश्रितेषु व मुशा म चा स आश्रितेऽपि–अ ना

30 3-2 निसृष्टभूमि –व मुशा अ गा चा निसृष्टभूमि –म स

31 3-4 पदक्षिणा–म अ ना स म फल°–व मुशा चा सूपा

32 3-5 °भ्रूललितैः कटाक्षैः –व मुशा चा °भ्रुभ्रचतुरैः कटाक्षैः –म सूपा
चतुरैर्विलासैः –ना अ स °भ्रुभ्रटुलैः कटाक्षैः –सूपा

33 3-8 सहसापराधात्–व अ ना सुरता°–चा म गो बृ सरसापराधात्–
रे सुरतापराद्ध –स सरसापराध –मुशा

34. 3-12 चक्रम्–व मुशा चा म [illegible] पूर्वम्–अ ना

35. 3-14 उच्चैर्द्विषामीप्सितमर्थमत्र–व मुशा स चा उच्चैस्तरा°–अ ना
°प्सितमेतदेव–म

36. 3-15 भवस्य–म स चा हरस्य–व अ ना निपातसाध्य –मुशा
म म चा य °हार्य –अ ना ब्रह्मनियोजितात्मा–स ब्रह्मणि
योजितात्मा–व म चा अ बृ मुशा

37. 3-19 अप्यप्रसिद्धम्–व म चा अ ना मुशा अपि प्रसिद्धम्–स

38 3-21 समीरण प्रेरयिता–व चा [illegible] समीरणोनोदयिता–म चा
समीरणश्चोदयिता–अ. ना बृ मुशा

39 3-22 एरावता°–व अ ना म चा दिग्वारणा–स् मुशा

40. 3-25 कुबेरजुष्टाम्–व मुशा °नाथाम्–अ ना °गुप्ताम्–चा
म र स

41. 3-30 निवेदय–व मुशा स प्रकाश्य–अ ना म चा. सूपा.

42. 3-42 चित्रार्पितारम्भ°–व मुशा चा म स °तारण्य°–अ ना.–चित्रे
अर्पित लिखित वनभित्र–ना

43. 3-43 दृष्टिप्रपातम्–म चा स °प्रतीपम्–अ. ना दृष्टे प्रतीपम्–
सूपा दृष्टिप्रयातम्–सूपा दृष्टे प्रदीपम्–व मुशा सूपा.

44. 3-44 त्रियम्बकम्–व म चा ना. अ [illegible] त्र्यैयम्बकम्, स त्र्यम्बकम्,
त्रिलोचनम–सूपा व

45. 3-46 भुजङ्गमोन्नद्ध०—व अ ना म ०मानद्ध०—चा कर्णा०—
व म अ ना स भ करा० चा प्रभासङ्ग०-व म स चा
०भङ्ग०—अ ना मृगत्वच—व अ ना कृष्ण०-म स
46. 3–49 ०सौकुमार्याम्—व म चा स रे ०सौकुमार्यान्—अ ना लक्ष्मीम्-
व म चा स हे रश्मीन्—अ ना
47. 3–50 क्षेत्रविद् —व अ ना म वेदविद् —चा स ब्रह्मविद —सूप
48. 3–51 शरावापमपि—व मुशा शर चापमपि—म स अ ना
49. 3–54 सुजातपुष्प०—व अ ना चा स पर्याप्त०—म रे सजात०-सूप
मुशा
50. 3–55 केसरपुष्प०-र मुशा ०दाम० म अ ना
51. 3–57 ह्रीपदमा०-व म स चा ह्रीतिमिना०—अ ना ह्रीतिं ल्वाम्—ना
पुष्पकेतु —व चा अ ना स र ०चाप —म
52. 3–58 भविष्यत पत्युरुमापि शम्भो —व म स उपासितुं सा च
पिनाकपाणिम्—चा मुशा परम्—व म अ रे ना चिरम्—सूप
53. 3–61 स्नहस्तभूत —व मुशा ०लून—म अ ना चा र
54. 3–62 नीलालक०—व मुशा म स चा रे लोलालक०—अ ना व
55. 3–63 तथ्यम्—व मुशा म चा स र भव्यम्—अ ना भ यम् भावि—ना
लोके-म चा र पाके-व मुशा अ ना स
56. 3–67 परिवृत्तधैर्य —व मुशा अ ना चा स. परिलुप्त०—म म र
57. 3–68 स्फुरद्‌धार०-व मुशा स स्फुरद्०—म वृ म गौ ड्डचद्०—अ ना
व्रुच त ह्रुचत इत्यर्थ—ना
58. 3–70 ०सव्यजानुम्—स ०पादम्०—व म अ ना चक्रीकृत०—व मुशा
म स अ ना वक्रीकृत०—मृपा
59. 3–72 क्रोधम्—व मशा म चा म रे कोपम्—अ ना
60. 3–72 समर्थ्यं—व मुशा म स मर्मान्त्य—अ ना
61. 4-2 ०निमग्नदर्शनम्—व मुशा स निरुप्त०—म अ. ना
62. 4–18 स्वयमङ्गेषु—व मुशा म चा [illegible] नयम०—अ. ना
63. 4–19 विबुधैरसि यस्य दारुणै —व मुशा म स. विबुधैस्त्वमनङ्ग—चा
विबुधैरपि यत्सगम्भी —अ ना

64 4 20 विलुप्यसे-स वृ म विलोभ्यसे-1 मुशा चा अ ना
65 4-21 जीवतीति-स अ ना जीविनेति-व चा मुशा
66 4-22 परलोकान्तरितस्य-व मुशा म चा ०न्तरितस्य-अ ना
67, 4-23 ०विलोकितानि च-व ■ निलोकित च यत्-वृ म चा
०तत्-अ ना
68, 4-25 दिव्यफलैरिवार्दित -व मुशा स ०शरैरिवाहित -म ०फलैरिवा०
चा ०फलैरिवार्पित -अ ना
69, 4-27 कपोतकर्बुरम्-व मुशा स म अ ना कपोल०-चा ०पाण्डुरम्-सुशा
70 4-31 अनघापि सश्रयद्रुमे-व मुशा चा ०संश्रिता द्रुमे-स अन
पायिनि संश्रयद्रुमे-म अ ना
71 4-31 स्थिताम्-व मुशा म चा स स्थिराम्-अ ना निहलाम्-व
मुशा स अ ना विक्लवाम्-म चा
72. 4-42 नियोजयिष्यति-व म स सयोजयिष्यति-चा मुशा समग्रयिष्यति
-अ ना
73 4-43 ०शापान्तभवाम्-चा स अ ना शापान्तशिवाम्-व मुशा
शापावधिदाम्-म धर्मयाचित -व चा स म ०चारिणि-
अ ना
74, 4 44 रविपीतजला-व मुशा म चा ■ अपि यात०-अ ना पूर्यते-
स चा युज्यते-म व अ ना
75, 4-45 सुचरितार्थपदै -व मुशा म चा स रे समभिद्रुद्रसै -अ ना
76 8-83 प्रदीपम्-व म चा स रे दिनान्तम्-अ ना
77, 5-2 अवन्ध्यरुपताम्-व मुशा म चा स रे ०क्रमताम्-अ ना
78 5-4 गृहेपु-म मुशा चा अ ना गृहेऽपि-व स मनीषिता सन्ति
-व मुशा म चा ■ मनीषितायार्चे-अ ना ०तामर्चे-सुशा
79 5-5 ध्रुवेच्छाम्-म चा स सी रे श्रुतेच्छाम्-व मुशा स्थिरेच्छाम्-
-अ ना
80, 5-11 कन्दुकात-व मुशा चा अ ना कञ्चुकात्-स विसृष्ट०
मुशा म चा व स निसृष्ट०-अ ना
81, 5-13 द्वयेऽपि-म द्वयेषु-चा मुशा द्वयीषु-अ ना ■ विलोलदृष्टम्-
स मुशा म म ०दृष्टिम्-चा अ ना

82 5–15 ०सङ्गवती निरीतिनीम्–स वृ भ गो ०वतीमघीदिनीम्–म मुद्रा चा अ ना ता मुनय–च स तामृषय–व भ चा अ ना

83. 5–18 पूर्वतप०–स म चा सर्वतप०–व मुद्रा सर्वसमा–अ ना (सर्वत्र शीतोष्णप्रियाप्रियादिपु द्वन्द्वेषु समा तुल्यबुद्धि–ना)

84. 5–29 काञ्चनपद्मनिर्मितम्–व मुद्रा म स चा ०पद्मधर्मि यन्–अ ना प्रकृत्यापि स प्रकृत्या च–व म अ ना चा ससारम्–म अ ना स म सुसारम्–व चा सुधा

85. 5–23 द्विविधेन–व मुद्रा स अ ना विविधेन–म चा

56. 5–24 पयोधरोत्सेध०–व मुद्रा स ०सङ्ग०–अ ना

87. 5–26 सात्यर्थ०–व मुद्रा स सात्यन्त०–म चा चात्यन्त०–अ ना

88. 5–27 सरोजसधान०–व मुद्रा म चा रे ०सतान–अ ना

89. 5–28 प्रियवदाम–व मुद्रा चा स प्रियवदा–अ ना यदन्त्यपर्णेति–म स यदन्त्यपर्णामिति–अ ना चा मुद्रा

90. 5–29 ०कोमल०–म चा स ०पेलव०–व मुद्रा अ ना (पेलवशब्द पक्षाश्रितमत न्याय्यो न सर्वेषाम् व)

91. 5–35 ०प्रणयापहारिपु–म स रे प्रणयापराधिपु–व मुद्रा चा अ ना उत्पक्षेपचलै–व उत्पलाक्षेपचलै–चा अ ना उत्पलाभि प्रचलै–म स रे मापत्यम्–व मुद्रा चा स सादृश्यम्–अ ना म

92. 5–38 भाविनि–म स (प्रशस्ताभिप्राये–म) भामिनि–व मुद्रा अ ना म चा (भा दिप्तन यस्या सा भामिनि–चा कोपने–अ दैवसम्पन्न 'भाम दैवानुकूल्य च सौभाग्य चापि कथ्यते' इति पुराणकवि–ना)

93. 5–40 प्रतिवक्तुम्–व मुद्रा म स प्रतिगोप्तुम् चा सुधा प्रतिगोपयिष्यसि वृ. म प्रतिबोधयिष्यामि–अ ना

94. 5–41 सौदर्यमिश्रोदितम्–म स व मुद्रा ०मिश्रोत्थितम्–चा ०मिश्राजितम्–अ ना

95. 5–43 तनूदरि स मुद्रा कृशोदरि–च म तलोदरि–अ ना

96 5–44 अनर्घशोभा० वृ म गो स अलभ्यशोका०–व मुद्रा म चा अ ना रत्नमूर्चये–म व मुद्रा स चा रत्नमूतये–अ ना (रत्नचाम्नाय–ना)

97. 5-47 श्लथनन्धलम्बिनी –व मुशा श्लथलम्बिनीर्जटा–म श्लथलम्बिनी जटा–अ चा ना ०लम्बिनी०–म रे ०लम्बिनीरिमा–स
98 5–49 चिरमस्य–व म चा रविमस्य–अ ना गो बृ म स
99. 5–52 वर्णितम्–व मुशा म चा स रे वाञ्छितम्–अ ना
100. 5–58 स्वहस्तालिखित –व मुशा म ०स्तोल्लि०–म चा, अ ना
101. 5-60 दृश्यम्–म स बद्धम्–व मुशा चा अ ना र (बद्धम् उत्पन्नम्–व सजातम्–ना जातम्–चा )
102. 5–61 असोत्तर०–मुशा म चा असाकुल०–व स असान्तरचोक्षीता –अ ना ०मभ्युप०–व म स चा मुशा ०मभ्यन०–अ ना
103. 5-67 कलहस०–मा चा स च स हस०–व मुशा क्व च हस०– अ ना गजाजिनम्–मुशा चा ग व क वाजिनम्–अ ना
104. 5 69 ०नैशास्थि०–स केशासु–व म चा, ना अ मुशा
105. 5–70 ०राजहार्यया–व, मुशा म चा स ०भार्यया–अ ना
106 5–71 पिनाकिन –व म अ ना कपालिन –चा स मुशा कलावत – व मुशा म चा स कलात्मन –अ ना
107. 5–76 अपेक्षते–व मुशा चा अपेक्ष्यते–अ ना म स रे सत्क्रियाम्– व मुशा चा सत्क्रिया–अ ना म स रे
108. 5–77 स लोकनाथ –व मुशा स त्रिलोकनाथ –म चा अ ना
109 5–79 ०सस्पर्श० व मुशा स च संसर्ग०–म अ ना रजो विशुद्धये– व मुशा म चा स रजोऽपि शुद्धये–अ ना निलिप्यते ॥ अ ना चा विलिप्यते–म मुशा म (विलिप्यते म्रियते–म )
110 5-81 विवृण्वता–स विपक्षता–व म चा अ ना मुशा
111 5-83 महतोऽपभाषते–व म मुशा महतो विभाषते–अ ना महता विभाषते–चा
112. 5–84 साम्रस्तन०–स वाला स्तन० व चा म रे सा च स्तन०– मुशा अ ना गौरी स्तन०–सूपा कृतस्मित –मुशा व म ना अ चा स शुचिस्मित –सूपा
113. 5–85 निक्षेपणाय–म निक्षेप एव–व ना अ चा स मुशा बृ म गो ०मर्पयन्ती–व बृ म गा स ०मुद्वहन्ती–म चा अ ना मुशा

114 5-86 अनन्ताङ्गि–व मुद्रा मा. चा स अनग्रमाङ्गि–अ ना (अनवम् उत्कृष्टम् अङ्गम् यस्या सा तस्य बुद्धो-ताम्) पिधत्ते–व म चा स पिधत्ते–अ ना (पिधत्ते छादयति–अ आच्छादयति–ना)

115. 6-50 कुरुमोत्तर०–स ०मोत्किर०–म अ ना ०मोत्तर०–मुद्रा व ०.कयाहिपु–सुपा आकाशगंगाप्रवाहेपु–स व चा अ ना व्योमगंगाप्रवाहेपु–म

116. 6-7 शश्वत्–व मुद्रा अ ना स साक्षात्–म चा

117. 6-13 भूयान् दारार्थमादर –व मुद्रा म स भूय ०–चा ०दारक्रियादर – अ ना दाम्पत्यम्–वृ स चा मत्पत्य –व मुद्रा म अ ना मूलकारणम्–म चा ०साधनम्–व मुद्रा अ ना स

118. 6-15 पूजयित्वा–व स अ ना मानयित्वा–व चा मुद्रा

119. 5-16 विधिवद्–व, मुद्रा स स विधिना–अ ना म चा

120. 6-17 मनोरथस्याप्यपथम्–व मुद्रा म अ ना चा ०स्याविषयम्–म

121. 6-23 यस्तस्य–व मुद्रा स अ ना विश्वस्य–म चा वृ म गा

122. 6-31 ०मामनन्ति–व मुद्रा स स अ ना ०माचरन्ति–चा

123. 6-32 व्यापारम्–व म चा स मुद्रा साहाय्यम्–अ ना

124. 6-36 सह मानसा –स व मुद्रा(मनसा निर्मिता मानसा सप्तर्षय -सुपा) समरहस –म अ ना चा तुल्यरहस –वृ म गा

125. 6-28 गुप्तानपि–व मुद्रा म अ ना स स्वर्गादपि–चा सुपा

126 6-39 जितसिद्ध०–व मुद्रा म चा स वीत०–अ ना

127. 6-42 सोपानपंक्तिपु–स अ ना आपानभूमिपु–व मुद्रा म चा ०त्युपहारताम्–व स म ०त्युपस्कारताम्–मुद्रा

128. 6-44 नातङ्क कुसुमायुध –स व मुद्रा अ ना नानङ्ग०–वृ म गा ०कुसुमायुधात्–व मुद्रा म चा नान्तर –म चा रतिखेदम मुत्थान–वृ म गा ०खेदसमुत्थनाम्–वृ म गो ०समुत्थाना– चा व मुद्रा ०समुत्पन्ना–अ ना म

129 6-46 सुगन्धिगन्धमादन –स अ ना ०नम्–व मुद्रा गन्धवद् गन्ध मादनम्–म सुगन्ध गन्धमादनम्–चा

130 6-47 स्वर्गाभिसन्धिसुकृताम्–म चा स व मुद्रा ०सन्धि सुकृताम्–अ ना ०भिस्यन्दि सुकृताम्–वृ म (अभिष्यन्दि स्वर्गप्रसवि–सुपा)

पाठान्तराणि ।

131 6-48 ०निश्चले-व म अ ना ■ ०सन्निभै-चा

132 6-52 दर्शक-अ ना देशक-व देशिक-मुशा सुहृद्वर्त्मभि-स ०कर्मभि-व मुशा म चा

133. 6-53 नीचासन०-अ ना कृता०-व मुशा म चा अनासन०-अ ना पृथिवीधर-स अ ना जगतीधर-अपा भूधरेश्वर-व मुशा म चा

134 6-55 मूढम्-व म स मूर्खम्-मुशा बुधम्-स चा बुद्धम्-व मुशा. म अ ना

135. 6-56 भूतानाम्-व मुशा म चा स मर्त्यानाम्-अ ना

136. 6-61 नोपदिश्यते-स चा नोपपद्यते-व मुशा अ ना म

137. 6-65 नोदयामासु-म चोदयामासु-व मशा अ ना प्रेरयामासु-स

138. 6-68 मृणालमृदुभि-व म स ०सदृशै अ ना चा मुशा

139. 6-70 पादेन-व मुशा म स चा पातेन-अ ना प्रसवेन-स प्रभवेण-व मुशा म चा प्रथमेन-अ ना ०च्छिरसा त्वया-व म चा स ०च्छिरसि त्वयि-अ ना

140. 6-73 इद तु ते भक्तिनम्रमर्हदाराधन-व अ ना स ०नम्र सतामारा० म म इद ते भक्तिनम्रस्य महोदारतर०-चा सुपा ०नम्रम-भूदारा०-सुपा

141. 6-76 कल्पिता०-व मुशा चा अ ना स कल्पिता० म यस्येवम्-व अ ना स येनेदम्-म चा ध्रियते-मुशा ■ अ ना म यन्यते-चा

142. 6-79 सद्र्हैं-व मुशा चा ■ सद्वर्हं-अ ना म

143. 6-80 यावन्त्येतानि व म चा स यावद् द्वयानि-अ ना मुशा कल्पयन्त्येना०-व म चा स कल्पयन्त्येना०-अ ना

144. 6-86 समीप्सितम्-व मुशा स अभी०-म चा (अ ना टीकायामय श्लोक नास्ति)

145. विमृश्य-व म चा स विचिन्त्य-अ ना

146. 6-88 शर्वार्पणे-व विश्वात्मने-अ ना म रे सर्वात्मना-स न म गो शर्वार्पण-मुशा

147. 6-90 ०र्वेधयामासु-व मुशा स म ०वर्धयामासु-चा

148. 6–14 प्रेक्ष्य–व. चा. अ. ना.स. प्राप्य–म. दृष्ट्वा–म.
149. 7–3 चतुष्पथम्–स. महा०–म. चा. अ. ना. व. मुद्रा.
150. 7–4 उपोढपाणि० व. स अ. ना. मुद्रा. चा. आसन्न०–म.
151. 7–7 प्रतिभिन्नरागम्–व. मुद्रा. चा. स. ०शोभम्–म. अ. ना. म. गो. निर्नाभि०–व. मुद्रा. म. चा. स. उन्नीवि०–अ. ना.
152. 7–8 विवाहदीक्षा०–स. अ. ना. नवेन०–म. चा. व. मुद्रा.
153. 7–9 कालीयरसाङ्ग०–स. व. मुद्रा स. अ. ना. कालेयकृताङ्ग०–म. चा. अ. ना ०मुखीमनैषुः–व. मुद्रा स. अ ना. ०मुखं व्यनैषुः–म म ०मुखी व्यनैषुः–चा. ०मुखं निषेदुः–मुद्रा.
154. 7–10 फलभक्तिचित्रे–व. मुद्रा स. म. चा. ०कृतभक्तिलेखे–अ. ना.
155. 7–11 ०प्रत्युद्गमनीय–वा. स. म. गृहीतशुभ्रोद्गम०–व. मुद्रा ०प्रत्युद्गा० चा ०प्रत्युद्ग०–अ. ना.
156. 7–15 प्रसक्त०–स. प्रसन्न०–अ. ना. आसक्त–चा. व. मुद्रा चा. ०विन्यस्त–म. ०विभङ्गमङ्गम्–स. ०ङ्गमस्याः–व. चा. विभक्तमस्याः –म. अ. ना. चतुरस्याः–स. मुद्रा.
157. 7–18 प्रविभक्त०–स. सुविभ०–म. अ. ना. च. विभक्तश्च–व. मुद्रा. चा. ०विमृष्टरागः–व. स. चा ०विमृष्ट०–म. अ. ना.
158. 7–20 ०समीक्ष्य–अ. ना. चा. स. निरीक्ष्य–म. व. मुद्रा.
159. 7–28 ०लाभात्–व. चा. अ. ना. स. ०भाजा–म. बन्धुजना०–व. स चा. स्निग्ध०–म. अ. ना.
160. 7–29 ० गमनप्रतीक्षः–व. म. स. मुद्रा. ०आगमनं प्रतीक्ष्य–चा. अ. ना.
161. 7–30 ०रस्या०–व. मुद्रा. स. चा. मयस्या०–म. अ. ना.
162. 7–31 स एष–व. म. चा. स. स्वभाव० अ. ना.
163. 7–32 सिताङ्गरागः–व. अ. ना. म. मुद्रा म. कृताङ्गरागः–चा. गजाजिन० व. म. चा. स. सिंहा०–अ. ना.
164. 7–33 ०तामरस०–व. स. म. मुद्रा ०तामरस०–अ. ना.
165. ०लक्षलेन–व. चा. स. ०लक्षणेन–अ. ना, व. मुद्रा.
166. 7–38 ०रेणु–व. मुद्रा, म. चा. स. ०वाजि० अ. ना. पद्माकरम्–व. म चा. म. मुद्रा पद्माकरी–अ. ना.

167. 7-41 वहन् गाङ्गमिव प्रवाहम्-व. चा. स. मुद्रा. पद्नुतगङ्गा इवोतमाङ्गे -म. अ. ना.

168. 7-44 धातुरीड्यो-व. मुद्रा. चा. धातुराद्यौ-म. अ. ना. स.

169. 7-48 ०प्राग्रसरैः-अ. ना. ०हरैः-व. म. चा. स. मुद्रा. त्रिपुरावदानः-व. म. स. चा. अ. ना. त्रिपुरापदानः-मुद्रा.

170. 7-55 आगुल्फकीर्णापणमार्गपुष्पम्-व. मुद्रा म. चा. स. ०गाढापितमा० -अ. ना. माङ्गल्य०-सूप. ०र्णाम्बरमार्ग०-सूप. ०र्णान्तरपुष्पवर्णम् -सूप. ०आगुल्फमारोपितपुष्पमार्गम्-सूप. ०ल्फमारोपितपुष्प-मार्गम्-वृ. भ. गो.

171. 7-57 च केशपाशः-म. न केशपाशः-व. मुद्रा चा. च केशहस्तः-अ. ना.

172. 7-60 न ववन्ध नीविम्-व. मुद्रा. स. ०नाववद्नीविः-अ. ना.

173. 7-63 ०पत्राभरणा--व. मुद्रा म. चा. स. ०प्रावरणा-अ. ना. (आवरणं कर्णांटे येषाम्-ना.)

174. 7-64 पेलवयापि तप्तम्-व. मुद्रा. अ. ना. चा. म. कोमलयाभितप्तम् -स. पेलवयाभि०-म. पेशलया०-सूप.

175. 7-67 ०मवाप्य-व. मुद्रा स. चा. ०मुपेत्य-अ. ना. म. ०धारणो०-मुद्रा व. म. अ. ना. स. ०पालनो०-चा.

176. 7-71 अभ्यगच्छन्-स. म. अन्वगच्छन्०-अ. ना. व. मुद्रा. तमन्यगच्छन् -चा. प्रशस्त०-म. चा. यशस्य०-अ. ना. प्रशस्य०-व. स. मुद्रा.

177. 7-72 मन्त्रवर्जम्-म. अ. ना. स. ०वन्ध्यम्-व. चा. मुद्रा.

178. 7-73 ०अवरोधश्रैः-अ. मुद्रा. ना. चा. स. ०वृक्षैः-व. म.

179. 7-75 ह्रीयन्त्रणामानशिरे मनोज्ञाम्-स. ह्रीयन्त्रणां तत्क्षणमन्वभुवन्-व. म. चा. अ. ना. मुद्रा.

180. 7-82 द्विज-व. मुद्रा. म. चा स. गिरि-अ. ना. पूर्वसाक्षी-व. स. चा. अ. ना. मुद्रा. कर्म०-म.

181. 7-83 श्रवणौ-स. व. चा. श्रवणे-म. अ. ना. मुद्रा. वितत्य-व. चा. म. स. विवृत्य-अ. ना. मुद्रा

182. 7-81 अष्टमूर्तौ-व. म. स. चा. अष्टमूर्तेः-अ. ना.

183. 7-91 ०मिन्न०-वृ. म. स. ०वद्ध०-व. मुद्रा. अ. ना. म. चा.

184. 7-92 ०रद्धाञ्ज०-व म स चा ०दग्धाञ्ज०-अ ना मुगा ०वसानप्रति
पन्नभू०-स ०सान०-म ०प्रतिल ध०-व मुद्रा अ ना
185 7-93 कालविद्धि-व मुगा अ ना चा कार्य०-स म
186. 7-93 ०कलशशुक्तम्-म चा ०शरक्षा०-अ ना [illegible] व ०द्धाना-मद्रा
०सनाथ-स
187. 7-94 तत्कृतोक्षप०-अ ना व मुगा स चा तत्कृताक्षेप०-म
188. 8-9 दोहदसुरत मनोहरम्-व म ०दौहृद०-अ ना ०दोहृदमनोहर
वपु -स
189. 8-4 तन्नितम्बमथ-व स तद्दुदुकूल०-म अ ना
190. 8 8 सन्नहस्त०-व स अ ना खिन्न०-म
191. 8-9 दत्तमनणपद नरस च-अ ना स दानव्रणपद नरस्य-व म
प्रियस्य-व म अ ना हृस्य-स
192. 8-99 कानि न-व स म कान्यपि-अ ना
193. 8-93 पदमकार्यत प्रिया-व अ ना स रतमकारि[illegible]चानया-म
194. 8-15 चातुमत्-व अ ना स दाढर्यभाव-म स्तम्-व [illegible] ना स
गृम्-म
195. 8-16 रसैरनिवृत्ति-व अ ना स ०वृत्तिभाक्-म
196. 8-19 ०चूर्णरूपितम्-व अ ना स ०रूपितम्-म मुद्रा
197. 8-22 ०शुगाहन -व अ ना स ०शुगोक्षक म
198. 8-23 ०वल्या०-व अ न [illegible] ०चरणा०-म. मुद्रा
199. 8-24 रावण०-व [illegible] म ना वारण०-अ ना
200. 8-28 वनिता-व अ ना [illegible] दयिता०-म मुद्रा ०रनान्यवर्तत-अ ना
० नन न्यवर्त-म स वन न्यगाहत-मुद्रा ०गिरिं न्यवर्तत-
म व मुगा
201. 8-31 दूर०-व अ ना म धून०-स तत्र पितु-व स म प्रसवितु-
अ ना
202. 8-38 आनिशाद्धि-व म स अ चा ना आत्ममद्धि-मद्रा अग्निर्नव
म व अ ना अग्रग०-स
203. 8-40 दूरमम०-व दूरमग्न०-अ ना मुद्रा दूरलग्न०-म दूरमग्नि०-म
कुसुमेन-व मुद्रा निम्केन-स म मुद्रा

204. 8-44 रवेर्यपुर्वेन्द्यम्-म व स रवे पद्-मुद्रा धर्म्यम्-अ ना येन पूर्वमु०-च स प्राक् तथेयमु०-अ ना म

205. 8-45 संधिवेलया-व म वेलयानया-अ ना माध्यवेलया-मुद्रा सन्ध्यया तया-म वर्तिता-च अ ना मण्डिता-म स मुद्रा

206. 8-46 चात्मना-सूपा मुद्रा चात्मन-व भानुना-अ ना स

207. 8-50 पार्वतीमञ्चनाम०-व स म ०मवनताम०-अ ना

208. 8-56 तिमिरवृत्ति०-व स म अ ना ०वृद्धि०-सूपा भूमिलं स्नमिव-स भूमिलग्नमिव-अ ना भूमिलग्नतमस व्यवस्थिताम्-मुद्रा भूमिलग्नमिव सप्रति स्थिताम्-व शैलराजतनयेऽधुना स्थित-म मा

206. 8-56 तिमिरोत्नवेष्टित-व स म मुद्रा तिमिरौघ उत्थिते-अ ना तिमिरोल्पवेष्टित सूपा

210. 8-57 हृतान्तरम्-व अ ना ■ स मुद्रा हृतान्तरम् सूपा अनन्तरम्-सूपा

211. 8-60 रात्रिनोदिता-व स ०चोदिता-म अ ना

212. 8-64 सामिभिन्न-अ ना स म (सामीत्यर्धवाचकमव्ययम् ना) भिन्नसान्द्र०-व ०दृपितम्-व मुद्रा म रुपितम्-स सप्रसीदविव-व मुद्रा स अ ना सप्रसादमिव-म

213. 8-67 प्रवृत्तय-व मुद्रा स अना प्रवृत्तिभि-म निन्द्रयो-व मुद्रा स विन्दुभि-म निद्रिता०-स व म निवृता०-अ ना

214. 8-86 ०रविकल्पसुन्दरि-व स म ०रिर पश्य सुन्दरि-अ ना म गाणना०-व मुद्रा अ ना रचना-म

215. 8-73 चारुमुखि-स म मुद्रा तारमुखि-व अ ना नवदीक्षित-व मुद्रा अ ना ०दीक्षया-स

216. 8-75 ०प्रसन्नयो-अ ना व स प्रसादयो-म

217. 8-75 ०मतीमुपस्थिता-अ ना स ०समागता-व मुद्रा व ०मुपागता-सूपा म

218. 8-76 मत्तमत्त०-अ. म मुद्रा रक्तमत्त०-व मत्तरक्त०-स रक्तमेर-म प्रान्तरक्त०-सूपा

219. 8-77 पानमङ्गनाम्०-अ ना पानमभ्यधिकाम्-व स म मुद्रा

220. 8-78 तदुपयोग०–अ ना तदुपभोग–व स म मुगा मनोहराम्–अ ना व मुद्रा मनोभवाम्–स ०विनियोग०–अ ना विवियोग–स व म मुद्रा

221 8-89 हर–स म अ ना मुद्रा रह–व विभूतिभास्वरम्–अ, न विभूतिरीश्वर–व विभूतिसम्भृतम्–स म गतिगोचरम्–मुद्रा

222. 8-82 क्लिष्टचन्द्रमदयै कचग्रहै–म अ ना क्लिष्टकेशमवलुप्तचन्दनम् –व क्लिष्टकेशमभिलुप्तचन्दनम्–स ०मतिलुप्त०–मुद्रा म ०मभूद्रतमये–अ ना म ०भून्न रतमये–स व मुद्रा

223. 8–86 रचित०–अ ना स म चलित०–व मुद्रा

224. 8–88 दन्तपद्मपीडिता०–स व ०ताडिता०–म दारिता०–अ ना मया रतचित्रक वीक्ष्य–मुद्रा मया ०मरस्त यक्षवान् प्रेक्ष्य–स भिन्नतिलक प्रियामुखम्–स य तृप्तिमगमन्न तन्मुखम्–मुद्रा

225. 8–89 भङ्गिविषम० अ ना भिन्न०–म ०भङ्ग–मुद्रा

226. 8–90 हर्षवृद्धिजननम–म स तर्षवृद्धिजनकम–अ ना तर्षवृद्धिजननम व मुद्रा

227. 8–91 सार्धमेका–अ ना म साग्रमेका–व [illegible] सारमेक्ष–मुद्रा

---

## 2. पञ्चिकान्तर्गतानि अवतरणानि

1. हिमवानिहास्ति । 1-1 [?]

2. पौरस्त्यस्तोयदर्तो पवन इव पतत्पावकस्येव धूमो
   विश्वस्येवादिसर्गः प्रणव इव परः पावनो वेदराशेः ।
   सन्ध्यानृत्योत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनाद्
   सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥ 1-1 [?]

3. फचाचितौ विष्वगिवागजौ गजौ । -1-1 किरात० 1-36

4. शैलैश्च श्रूयते राजन् पुनर्दुग्धा वसुन्धरा ।
   औषधीश्च मूर्तिमती रत्नानि विविधानि च ॥ 1-2 -हरिवंशम् 1-6-40

5. वत्सस्तु हिमवानासीद् दोग्धा मेरुर्महागिरिः ।
   समुद्रा पात्रता जग्मुरितिहास पुरातनम् ॥ 1-2 -हरिवंशम् 1-6-41

6. वत्स तु मम वपस्य श्रेयः येन वत्सला । 1-2 -हरिवंशम् 1-6-9

7. अन्तर्जलौघमवगाढवतः कपोलौ
   हित्वा क्षणं विततपक्षतिरन्तरिक्षे ।
   द्रव्याश्रयेष्वपि गुणेषु रराज नीलो
   वर्णः पृथग्गत इवालिगणो गजस्य ॥ 1-4 -शिशु० 5-38

8. अहमिह स्थितवत्यपि तावकी
   त्वमपि तत्र वसन्नपि मामकः ।
   लिखितपत्रमनङ्गरसाकुला
   विरहिणी प्रहिणोति प्रियं प्रति ॥
   परिशिष्टम्-3, 1-7 ≡ सु० र० मा० 284-13

9. न क्षमा[1] चपले पुत्रि न क्षमं तापकं वपुः ।
   सोढुं क्लेशात्मकस्यास्य तपसः सौम्यदर्शने ॥ 1-25
   ([1] उमेति-पाठे) मत्स्यपु० 154-294

10. नत प्रतस्थे कौबेरीं .1-27 -रघु० 4-66

11. निर्माय विधाय पिनादि 1-27 -किरात० 3-25

12. वर्णैः कतिपयैरेव 1-27 शिशु० 2-72

13. प्रियसखि विपद्दण्ड 1-27 -सु० र० भा० 95-86 शा० प० 451
वैराग्यशतकम्-97

14. चित्रा चित्रया । 1-34 [?]

15. शीतकाले भवत्युष्ण उष्णकाले च शीतला ।
वर्षाकाले च सामान्या रामाणामूरव स्मृता ॥ पारं-3 1-36 [?]

16. एषा भार्या जगद्भर्तुर्वृषाङ्कस्य महीधर ।
शरारार्धहरा देवी भविष्यति न संशय ॥ इतिमत्स्यपुराणे । 1-50
(तु माया जगद्गुरोर्ह्येषा वृषाकस्य महीधर । -मत्स्यपु० 154-192)

17. अजिमहत् त जनको धनु 1-52 पाटी भट्टीकाव्यम् 2-42

18. देवासुरैरमृतमम्बुनिधि 1-52 पाटी, किरात० 5-30

19. मुक्ताजाल चिरपरिचित 1-52 पाटी मघ० 93

20. त्वामप्यस्र नवजलमय 1-52 पाटी मेघ० 91

21. कीदृग्गायय इत्येष प्रश्नो नागरिकैर्यदा ।
वन्स्यारण्यको ग्राम्य यथा गोर्गवयस्तथा ॥
-1-56 -द्र श्लो० वा० 1-1-5 उप० 1

22. दिशो बाहू दिव शिर । -2-1 महाभारत० 6 61-54

23. यागो ज्ञान तथा साङ्ख्य विद्या शिल्पानि कर्म च ।
वेदा शास्त्राणि विज्ञानमेतत्सर्व चतुर्मुखात् ॥
1-3 -महाभारत० 13-135-139

24. नमो रजोगुणे सृष्टौ स्थितौ सत्त्वमयाय च ।
तमोमयाय संहार निरूपाय स्वयम्भुवे ॥ 2-4 [?]

25. सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधा प्रजा ।
अप एव ससर्जादौ तासु वीर्यमयासृजत्[1] ॥ -2-5
( [1] अवासृजत् ) -द्र. मनु० 1-8

26. ब्रह्मत्व सृजते लोकान् रुद्रत्वे संहरत्यपि ।
विष्णुत्वे पालयत्येषास्तिस्रोऽवस्था स्वयम्भुव ॥ 2-6 [?]

27. द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्या स विराजमसृजत्प्रभु ॥ 2 7 मनु० 1-32

28. यदा स देवो जागर्ति तदेद चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते ॥ -2-8 मनु० 1-52

29. सहस्रयुगपर्यन्तमहस्तद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्राभ्यामहोरात्रविदो जनाः ॥ –2-8 भ० गी० 8-17
30. यदेतत्परिसंख्यातमादौ मर्त्यचतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥ 2-8 मनु० 1-71
31. दैविकानां युगानां तु सहस्रपरिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरुच्यते ॥ 2-8 मनु० 1-72
32. एवं शक्तिप्रपञ्चार्थं नानारूपैर्निरूपितम् ।
पृथिव्यापश्च तेजश्च वायुश्चैव च पञ्चमः ।
शब्दस्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं चैव तु पञ्चमम् ॥ 2-11
33. सर्वं [ज्ञानं] प्रत्युपभोगं तस्मात्पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ 2-13 सा० का० 37
34. तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ 2-13 सा० का० 19
35. इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यस्तु परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा ततो महान् ॥ 2-14 कठोपनिषद् 1-3-10
36. महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ 2-14 कठोपनिषद् 1-3-11
37. ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
कामस्यापि प्रयत्नस्य षण्णां भग इति स्मृतः । –2-31 वि० पु० 6-5-74
38. स्वस्ति वोऽस्तु गमिष्यामि । –2-31 रामा० 1–43-15
39. अस्त्रं हरदाप्तवता दुरापं येनेन्द्रलोका विजयाय सृष्टा । 2-51 रघु० 2-51
40. रिपुरानीय नव्यताम् । 2-55
41. आहूतोऽपि सहायैरोमित्युक्त्वा विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः सङ्कोचं नैव शिथिलयति । 2-60 ध्वन्या० 1-13
अनन्तरम् सु० र० भा० 347-47
42. औरसानपि पुत्रांस्ते त्यजन्त्यनुपकारिणः ।
अनुगृह्णन्ति तु प्रीताः परानप्युपकारिणः ॥ 3-1 रामा० 2-23-33

117. शुकैश्चञ्चूत्कीर्णं छविफलयुग यौवनतरो
रयः शाङ्कुक्षुण्णं मदनकरिणः कुम्भयुगलम् ।
समुद्र सम्भोगामृतकलशयुग्म सुकृतिनः
स्तनद्वन्द्व तस्या मकरमुखाङ्कं विजयते ॥ 8–22

118. प्रोषिताया मजकस्य प्रजा घर्मो यशः सुखम् ।
निवर्तन्ते निवृत्ताया अहो बन्धु कुल गृहम् ॥ 8-31

119. अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति । 8-42

120. घटान्तच्छायाभिन्नघनेन बिभ्रतः । 8–46 शिशु० 1–47

121. (वरम्) कूपशताद् वापी ।-8-62 द्र० म० भा० 1-36-21

122. अपुष्पफलवानाम्र पुष्पितश्चूत उच्यते ।
पुष्पैः फलैस्तु संयुक्तः सहकार उदाहृतः । 8–78

## 3. वल्लभदेवस्य पत्रिकान्तर्गतानि सुवाक्यानि

| | | |
|---|---|---|
| 1. | जिगासतो हि पूर्वं वाद्यिनो वेणुना स्थानं ददाति । | 1-8 |
| 2. | पुण्यापुण्याविचारेण महान्तः शरणागतं पालयन्तीत्यर्थः । | 1-12 |
| 3. | लोकाचारः किल न हातव्यः । | 1-17 |
| 4. | वाणीवश्चिद्रूप सम्भवति । | 1-28 |
| 5. | निजविद्यादानेन परविद्याग्रहण प्रत्युपदेशः । | 1-34 |
| 6. | तारुण्ये हि मदनाविर्भावः । | 1-39 |
| 7. | न हि कामजयव्यापार विना नृणां कण्ठे कामिनीनां भुजयुगलं लुठति । | 1-41 |
| 8. | स्थानचलिता हि तन्त्रीगतिनरागुद्वेगजननी । | 1-45 |
| 9. | न हयरिभूतः स्वायुध क्षिपति । | 2-22 |
| 10. | मुक्तकेशता हि परिभवशासिनी । | 2-26 |
| 11. | रेनूद्यो हि लोकोपक्रमाय । | 2-32 |
| 12. | मृते कीर्तिः स्थिते यशः । | 2-47 |
| 13. | ज्ञानानलाद्धि कर्मेन्धनदाहः । | 2-51 |
| 14. | अनुरागवशाद्धि कामैकसक्तत्वात् धर्मार्थहानिः । | 3-26 |
| 15. | न हि सनियमस्य स्वय प्रवृत्तिः । | 3-35 |
| 16. | न हि वातं विनाग्निर्वाज्वल्यते । | 3-21 |
| 17. | द्वारे हि स्वामिनो नाम लिख्यते । | 3-27 |
| 18. | गौरवं हि महात्मना सहज विशेषत सनाथिममयं भवति । | 3-59 |
| 19. | समाधौ हि मनसो निरोधः । | 3-59 |
| 20. | न हि कष्टे प्रकृत्य स्वास्थ्यम् । | 3-64 |
| 21. | मति नाम्ने विषयाः सुखावहाः । | 4-10 |
| 22. | अनुरोधन हि स्त्रीणां प्रमितम् । | 4-15 |
| 23. | स्वगृहस्थितं हि मानसानुभवम् । | 4-15 |
| 24. | कल्पवचना हि दूती क्रियते । | 4-16 |
| 25. | अनुसरणेन किल पक्षिणोऽप्यासिनिति श्रुतिः । | 4-32 |
| 26. | गमनागम्य किल विशालस्थामस्य प्रतिम । | 4-34 |
| 27. | पूर्वज्ञा हि मानुषिः । | 5-14 |

28. यत्किल चतुर्थे वयसि योग्यं तद् यौवनेऽनुचितम् । 5-44
29. कन्या हि जनकाधीना । 6-1
30. साधवो धूर्त्त पूजयन्ति । 6-12
31. प्रणयकुपिता हि कामिन्यो रम्यतरा भवन्ति । 6-45
32. बाह्योधान हि सर्वसंवेद्यम् । 6-46
33. ये किल सस्पृहास्तेषामन्यायत्तं कार्यं न तु निःस्पृहाणाम् । 6-61
34. महाशयानां किमिव दुष्करम् । 6-66
35. गुणवते कन्या देया । 6-89
36. प्रायेण हि कन्याविवाहमेलका सस्पृहा भवन्ति । 6-93
37. अकृत्रिमस्य हि रूपस्य किं मण्डनेन । 7-13
38. भद्रैः किलार्थैः प्रदाताकर्म सिध्यति । 7-71
39. अन्तेवासिना हि गुरुदक्षिणा देया । 8-17
40. न हि तमसि पदार्थानां भेदग्रहणव्यक्तिः । 8-57
41. न ह्यसतां महत्त्वे गुण्यागुण्ययोर्विवेको भवति । 8-57
42. हासपूर्वं हि रहस्योद्गिरणम् । 8-60
43. मुखपाने हि कामिन्यश्चक्षुषी सङ्कोचयन्ति । 8-63
44. गुणानामुन्नतेषु सज्जनवदवस्थानं दोषाणां तु दुर्जनवन्नीचेषु । 8-66

## 4. अपरा परम्परा–प्रथमः सर्गः

In the besic text म-१ the text of the some of the verses is found totally different. It is printed below as अपरा परम्परा. This portion along with the various traditions of the text of the eighth canto (see परिशिष्टम्–5) prove beyond doubt that the original text of the Vallabhadeva's commentary has undergone many changes by various hands in different MSS. Hence it is too difficut to trace the original text of these portions of the commentary.

### प्रथमः सर्गः

न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥7॥

न्यस्ताक्षरेत्यादि ॥ (अनङ्गलेखक्रिययोपयोगं) मदनसन्देशसम्पादकपत्रम् ।

तथा–

'अहमिह स्थितवत्यपि तावकी त्वमपि तत्र वसन्नपि मामकः ।[1]

लिखितपत्रमनङ्गरसाकुला विरहिणी प्रहिणोति प्रियं प्रति ॥'

(धातुरसेन) सिन्दुरद्रवेण न्यस्ताक्षराः लिखितवर्णाः । अत एवाक्षराणां लौहित्यात् करीन्द्रबिन्दुवदारक्ताः । पञ्चम्यां सप्तम्यां या मदावस्थायां कुञ्जरकपोलेषु रक्ता बिन्दवो जायन्ते ॥७॥

कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्नुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥8॥

कपोलकण्डू इत्यादि ॥ कपोलगलितरसतया (सुरभीकरोति) सुगन्धयति । रसस्नुतेः कारणमाह । कर्षणेन (कपोलकण्डूः) गल्लखर्जूरं (विनेतुम्) अपनेतुं (विघट्टितानां) स्फाटितानाम् ॥9॥

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥10॥

वनेचराणामित्यादि ॥ (वनेचराणां) युवतियूनानां पुलिन्दादीनां संभोगार्थं प्रदीपा जायन्ते । तेजोऽवाप्तदीपान्तराद् विशेषमाह । अतैलपूराः अहतैलपूरत्वात् ।

---

1 द्र. सु. र. भा. 284–13

तर्हि कृतेन पूर्यमाणा स्युः । तैलशब्दोपचारात् सर्वं स्नेहा निषिद्धाः । ननु गुहामध्यप्रदेशे सुरतक्रीडाकारिणां पुलिन्दानां नातिवर्तिन्य औषधयः कथं सुरतप्रदीपा भवन्तु । (दरीगृहोत्सङ्गनिषक्तभासः) दर्यः कन्दरा एव गृहास्तदुत्सङ्गे लग्ना भासो यासां ताः ॥10॥

उद्वेजयत्यङ्गुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥11॥

उद्वेजयतीत्यादि ॥ किन्नराणां द्वे जाती, क्वचिदश्वशरीराः । अत्र प्रस्तावादश्वमुख्यः । कदाचिन्मार्गे सुखावहः स्यात् । (शिलीभूतहिमे अपि) पवनप्रकम्पवशादुपलीभूतहिमेऽपि । अत एव हिमत्वात् (अङ्गुलिपार्ष्णिभागान्) अङ्गुलिपर्यन्तान् पार्ष्णिप्रदेशांश्च (उद्वेजयति) उत्पीडयति । स्खलन्मानं कथं तर्हि त्वरया न यान्तीत्याह । (दुर्वहश्रोणिपयोधरार्ता) दुर्वहेण पीनजघनस्तनतटेन पीडिताः ॥11॥

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ॥12॥

दिवाकरादित्यादि ॥ (दिवाभीत) दिनं भीतम् इव सभयं (गुहासु) दरीषु लीनं विलीनं (दिवाकरात्) अर्कात् (रक्षति) रक्षते । अथ दिवाभीतम् इव उलूकमिव । तथा च-'दिवाभीतः करिपो कुम्भिलः कुमुदाकरः।' ननु तमसस्याान्धकारस्य रक्षणे क इवास्य गुण इत्याह। अथ नन्दर्शितसदसद्वस्तुविचार सूरनन्तधरोपचारमेवविधमन्धकारं रक्षताऽमुनैव जगदुपकृतामत्यासभ्याह। सति इव साधाविव । ममत्वम् आत्मीयत्वं जायते । पुण्यापुण्याविचारेण महां च शरणागतं परिपाल्यन्तीत्यर्थः ॥12॥

लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः ॥13॥

लाङ्गूलविक्षेपेत्यादि ॥ पुच्छस्योरितनमागः (अर्थयुक्तं) सार्थकम् । राजा हि छत्रचामराद्युपलक्षितो भवति । (चन्द्रमरीचिगौरैः) शशिमयूखवद्धवलैः ॥13॥

यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥14॥

यत्रांशुकेत्यादि ॥ (यत्रांशुकाक्षेपविलज्जितानां) वस्त्रापहारविलज्जितानां (तिरस्करिण्यः) जवनिका (भवन्ति) सम्पद्यन्ते । (दरीगृहद्वारविलम्बिबिम्बाः) विश्रान्तमण्डलाः ॥14॥

भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥15॥

भागीरथीत्यादि ॥ कविभिर्वायुस्तावत् त्रिविधो वर्ण्यते शीतो मन्दः सुरभिश्च । तत्र (भागीरथीनिर्झरशीकराणां) गङ्गाप्रपातजलकणानां वोढा क्षेप्ता इति शैत्यगुणत्वोक्तिः । (कम्पितदेवदारुः) असकृच्चालितसुरतरुविटपः इति सौरभत्वोक्तिः । (भिन्नशिखण्डीबर्हः) भिन्नानि विरलीकृतानि इति मार्दवकथनम् । (अन्विष्टमृगैः) अनुद्दिष्टहरिणत्वात्परिश्रान्तैः ॥15॥

सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥16॥

सप्तर्षिहस्तेत्यादि ॥ (सप्तर्षिहस्तावचितावशेषाणि) सप्तमुनिकरावचयादवशिष्टानि । अथ मुनीनां कलिकाकुण्टने महान् दोषः । अतोऽशेषाणि समस्तानि । तथा मुनयो हि द्विविधाः, उदितयाजिनोऽनुदितयाजिनश्च । येऽनुदिते सवितरि याजन्ते तेषां कलिकाभङ्गे न दोषः । अथ च—

पुराणान्यरुणः प्रातर्मध्यमानि च भास्करः ।
नवीनानां सरोजानां विकासो नैव जायते[1] ॥

(अग्रसरोरुहाणि) अग्रे प्रान्ते सरांसि तत्र रोहन्तीति । अथ च अग्रसरोरुहाण्येव कमलानि तत्कथं पद्मानि । ततो विशेषः । कथंभूतानि पद्मानि । अब्जसख्यानि ॥16॥

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥17॥

यज्ञाङ्गेत्यादि ॥ किं बहुना । यस्य स्वयं (प्रजापतिः) ब्रह्मा (शैलाधिपत्यं) राज्यम् (अन्वतिष्ठत्) ददौ । स्वयं तेनाभिषिक्त इत्यर्थः । (यज्ञाङ्गयोनित्वं) यज्ञाङ्गानि सोमवल्लीपलाशादीनि । केवलं शैलाधिराजत्वं ददौ नेत्याह । (कल्पितयज्ञभागं) कल्पितयज्ञभागत्वाद् भागमप्यहीनकारेत्यर्थः । अत एवास्य देवतात्वम् ॥17॥

स मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥18॥

स मानसीमित्यादि ॥ पितॄणां कव्यवाहादीनां (मानसीं) मनोनिर्मिताम् । पूर्वं कन्यात्रयं निर्मितं पितृभिः । एका मेरवे दत्ता, द्वितीया हिमवते दत्ता, तृतीया मुनये च । (मेरुसखः) कुलशीलादिसाम्यान्मेरोर्मित्रत्वम् । (स्थितिज्ञः) आचारवित् । लोकाचारः किल न हातव्यः । (आत्मानुरूपां) कुलशीलादिभिरात्मयोग्याम् । (उपयेमे) व्यवाहयत् परिणीतवान् ॥18॥

---

1 दृश्यते-प०

असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥20॥

असूतेत्यादि ॥ असूत अजीजनत् । (अम्भोनिधिबद्धसख्य) समुद्रेण सह कृतवयस्यम् । अतश्च (नागवधूपभोग्यं) सहवासिनीनां पातालकन्यकानां सेव्यं पतित्वेन । (कुलिशक्षतानां) वज्रप्रहाराणाम् (अवेदनाज्ञं) पीडां न जानाति । अब्धिमध्ये शक्रस्य प्रवेशाभावात् । पूर्वं हि पर्वताः सपक्षा आसन् । ततस्तेषामुड्डीय लोकानामुपरि परिपततां वृत्रहा वज्रेण पक्षाण्यच्छैत्सीदित्यागमः ॥20॥

अथापमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥21॥

अथेत्यादि ॥ अथ अथानन्तरं कदाचित् कस्मिंश्चित् काले (जन्मने) पुनरुत्पत्तये (तां) शैलवधूं मेनाकुक्षी (प्रपेदे) आत्मानमक्षिपदित्यर्थः । सती नाम्नी यत पितुः अपमानेन प्रयुक्ता प्रेरिता । अतश्च योगविसृष्टदेहा योगेन धारणया त्यक्तशरीरा । यदि वा योगेन जन्मान्तरेऽपि भवेन सह सम्बन्धस्तदर्थं विसृष्टदेहा । ननु ईश्वरसदृशं भर्तारं त्रिभुवनैकनाथं विहाय किमिति देहत्यागः कृत इत्याह । यतोऽसौ सती साध्वी पतिव्रता भर्तुः पितृकृतं पराभवं न सहते । पूर्वं हि यागे प्रजापतिना सर्वेषु जामातृषु सपत्नीकेषु निमन्त्रितेषु सत्सु शिवोऽमङ्गलभूतत्वात् यदा गौरी भगवता शूलपाणिना सह नाहूता तदा तया लब्धाभिप्रायया अनेन दुराचारेण वत्सलेनाऽपि पित्रा न प्रयोजनमित्युक्त्वा देहोत्सर्गो व्यधायीत्यागमः ॥21॥

सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।
सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन सम्पत् ॥22॥

सा भूधराणामित्यादि ॥ योग्यापत्यार्थं नियमविशेषः समाधिः । भव्या प्रशस्तलक्षणा, भवमर्हतीति भव्या वा । का केव कया कयोत्पन्ना इत्याह । यथा सम्पत् प्रभुशक्तिः कोशो दण्डबलं प्रभुशक्तिः । कोशो भाण्डागारं दण्डश्च तुरगपदातिलक्षणं सैन्यम् । एवंविधा सम्पत् उत्साहगुणेन उत्साहशक्त्या नीतौ सम्पादनीये षाड्गुण्ये मन्त्रशक्त्या (जयो ?) यथा जायते । यथा चाक्रवर्त्तीप्रख्यापनाया ये हि विजिगीषु विविधं षाड्गुण्यं नन प्रयुक्तं उत्साहमाश्रयते सोऽवश्यमरिविजयेन महतीं सम्पदां प्राप्नोति ॥22॥

प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥23॥

प्रसन्नदिगित्यादि ॥ (स्थावरजङ्गमानां) स्थावराः पर्वतवृक्षादयः जङ्गमा

आमारण्यभेदेन सिंहमनुजादयस्चतुर्दशविधाः पशवस्तेषा द्वयानामपि (पांसुविविक्तवातं) रेणुरहितमारुते (शङ्खस्वनानन्तरपुष्पवृष्टि) दिव्यशङ्खध्वनेरनन्तरं पुष्पवृष्टिः यत्र ॥23॥

तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥24॥

तयेत्यादि ॥ तया (स्फुरत्प्रभामण्डलया) उल्लसत्कान्तिवलयया (नवमेघशब्दात्) नूतनजलदगर्जितात् (उद्भिन्नया) उत्थितया (रत्नशलाकया) मणिसूच्या । तत्र हि मेघरवेण प्रावृषि रत्नानि जायन्त इति वार्ता ॥24॥

तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।
उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥25॥

तां पार्वतीत्यादि ॥ अभिजनेन सान्वयेन जुहाव आकारयत् । ततः पश्चात् कालान्तरेण उमा इति । 'उमिति प्रणयकोपे मा शब्दो निवारणे' ।

'न क्षमा चपले पुत्रि न क्षमं तावकं वपुः ।
सोढुं क्लेशात्मकस्य तपसः सौम्यदर्शने' ॥25॥

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥26॥

महीभृत इत्यादि ॥ (महीभृतः) पार्वतीलक्षणे अपत्ये तृप्तिं (न जगाम) न ययौ । कदाचिदद्वितीया सा भगवती स्यात् । (पुत्रवतोऽपि) बह्वपत्यस्यापि । दृश्यते चैतत् । तथा हि । कुसुमनिर्भरे वसन्ते (द्विरेफमाला) भ्रमरावली चूते आम्रपुष्पे (सविशेषसङ्गा) अधिकं रज्यते ॥26॥

दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि ॥ 27 ॥

दिने दिन इत्यादि ॥ रूपसौन्दर्यादीन् गुणानवीवृधत् । येव । (चान्द्रमसी लेखा इव) शशिकलावत् । कान्तेव । कलान्तराणि इव यथा चन्द्रलेखा । (ज्योत्स्नान्तराणि) ज्योत्स्नातिशयाः कलाः (पुपोष) पोषयति तथा देवी लावण्यमिति वाक्यार्थः ॥27॥

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥28॥

प्रभेत्यादि ॥ (स) पूतश्च स हि नागराजदेवी । अतोऽस्यं पवित्रः । आत्मभावेन नितरामलङ्कृतो भवतः । कथमित्याह । प्रभा इत्यादि । निर्मला दर्शिका भाजनप्रकाशसभीर्भ भवति । तेऽस्यैव तमोपमुस्तम् । त्रिमार्गयेव त्रिदिवस्य मार्ग

पर पावित्र्यगुण कथित । ततस्तृतीयापमानेन छन्दो व्याकरणालङ्कारयुक्तया वाण्या निखिलजगते सिद्धिर्दत्ता प्रतिपादिता । वाणीतस्त्विदप सम्भवति यत ॥28॥

मन्दाकिनीसैकतवेदिकाभि सा कन्दुकै कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीना क्रीडारस निर्विशतीव बाल्ये ॥29॥

मन्दाकिनीत्यादि ॥ (मन्दाकिनीसैकतवेदिकाभि ) गङ्गातीरसिकताकदम्बस्थलीभि (कृत्रिमपुत्रकै ) वस्त्रमृद्दार्वादिमयै (रेमे) चिक्रीड । (मुहु ) भूयो भूयो रमणात्परस्मादङ्क्तिरयान च सा बाल्यभावन स्थाप्यते । अतश्च कविरुत्प्रेक्षते । (क्रीडारस ) क्रीडाया रसो रागस्त क्रीडारस बाल्ये शैशव (निर्विशतीव इव) चिक्रीडेव । अथ क्रीडाकर्त्री स्वय मूर्तिमता रस निर्विशतीव ॥29॥

ता हसमाल शरदीव गङ्गा महोषधी नक्तमिवात्मभास ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्या ॥30॥

ता हसमाला इत्यादि ॥ (उपदेशकाले) शिक्षासमये देवीत्वात् (आत्मभास ) आवनश्वरज्ञानम् । हसति भूषणत्वोक्ति । प्राक्तन प्राक्तन ॥30॥

असभृत मण्डनमङ्गयष्टेरनासवाख्य करण मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्र बाल्यात्पर साथ वय प्रपेदे ॥31॥

असभृतमित्यादि ॥ (बाल्यात् ) शैशवात् परम् अनन्तर यौवनाख्यम् । (अङ्गयष्ट ) तनुलताया (मण्डन) भूषणम् । ननु कनककङ्कणकुण्डलादिकमय प्रसिद्धमलङ्करण कदाचित्तदभविष्यतीत्याह-(असभृतम ) अनाहार्य स्वाभाविक कनककङ्कणकुण्डलादिभ्यो-न्यत् । (मदस्य करण) चेतोविकारजननम् । कदाचिन्मद्यादिक हि मदकारि स्यादित्याह । (अनासवाख्य) मदमन्यम् । कदाचित्कामस्य पुष्पाद्यायुध यदा करण तद्भविष्यतीत्याह । (पुष्पव्यतिरिक्त) कुसुमभिन्नमयम् । अस्त्र वशीकरणमिति (वि)भावनाख्यो-लङ्कार ॥31॥

उन्मीलित तूलिकयेव चित्र सूर्याशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्त नवयौवनेन ॥32॥

उन्मीलितमित्यादि ॥ तूलिकया चित्रकारलेखकर्चिकया उन्मीलितम् उन्मिलित प्रकटीकृतावयव भिन्न विकासित (नवयौवनेन) अभिनवतारुण्येन विभक्त सविभागीकृत प्रकटितावयव (चतुरस्रशोभि) समन्तात्सुन्दर (बभूव) अभवत् । सर्वाङ्ग सुन्दर सम्पन्नम् ॥32॥

अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्या स्थलारविन्दश्रियमव्यवस्थाम् ॥33॥

अभ्युन्नतेत्यादि ॥ निक्षेपणात् क्रमन्यासाद्धेतोः अन्यत्रथा सञ्चारिणी विसदृशा वा जङ्घारूपेण नालस्योपरिभूतत्वाच्च (स्थलारविन्दश्रियं) स्थलपद्मशोभाम् उत्पादयता तत्सदृशशोभाजननात् । (आजह्रतुः) अनुचक्रतुः । (अभ्युन्नताङ्गुष्ठनखप्रभाभिः) अभ्युन्नतौ च तावङ्गुष्ठनखौ च तयोः कान्तिभिः (रागमिवोद्गिरन्तौ) लौहित्यमिव वमन्तौ । अथ आजह्रतुः सुतरां पद्मानुरित्यन्यातिशयप्रधानाद्भ्रमनम् ॥33॥

वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये ।
शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥35॥

वृत्तानुपूर्वे इत्यादि ॥ (विधातुः) वेधसो देव्याः प्रकृते लावण्यनिर्भरे जङ्घे सृष्टवतः (शेषाङ्गनिर्माणविधौ) अवशिष्टजननावयवसृष्टिकरणसौन्दर्ये (यत्नः) आदरः (आस) अभूत् इव । जङ्घयोरेव सर्वस्य लावण्यस्य निरूपणात् (वृत्तानुपूर्वे) वृत्ते वर्तुले पूर्वमनुगतेऽनुपूर्वे गोपुच्छाकारे, विशेषणसमासः । न चातिदीर्घे अपि तु मध्यप्रमाणे । (शुभे) प्रशस्ते शुभलक्षणे ॥35॥

तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः ।
नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥38॥

तस्याः इत्यादि ॥ (नतनाभिरन्ध्रं) नतं गम्भीरं नाभिविवरं प्रविष्टा तत्र चैव छेदं प्राप्ता । (सितेतरस्य) इन्द्रनीलस्य नीवीं वसनग्रन्थिं (अतिक्रम्य) उल्लङ्घ्योपरि प्रविष्टा । नीविः हि मेखलया ऊर्ध्वं क्रियते । अर्चिःशब्दः स्त्रीलिङ्गोऽपि ॥38॥

मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला ।
आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥39॥

मध्येनेत्यादि ॥ (वेदिविलग्नमध्या) यज्ञेष्वाहिताग्नेः अग्निस्थानं तद्वेदिः तद्वद्विलग्नं क्षामं कृशं मध्यमुदरं यस्याः सा । वलित्रयं त्रिरेखात्मकं (बभार) दधे । (प्रयुक्तं) रचितम् । तारुण्ये हि मदनाविर्भावः ॥39॥

अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं चारु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥40॥

अन्योन्यमित्यादि ॥ (उत्पीडयत्) अन्योन्यं पाण्डु सुवर्णसचिरं रूपं (श्याममुखस्य) नीलचूचुकस्य (इति) स्वरूपकथनम् । (मृणालसूत्रान्तरं) बिसतन्तो अपि (अलभ्यम्) अवकाशो दुर्लभः ॥40॥

शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः ।
पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥41॥

शिरीषपुष्पेत्यादि ॥ (शिरीषपुष्पाधिकसौकुमार्यौ) शिरीषकुसुमस्याधिकं कोमलौ ।

(कण्ठपाशौ कृतौ) वर्णितौ। सुकुमारकुसुमप्रहरणः किल कामो मृदुनाऽस्त्रेण तेन जगद् वशीकार्यम्। यदि च पुष्पेभ्यस्तद्बाहुयुग्मं मृदु न भवेत्, तत्कथमधुना सत्स्वपि तेषु पराजितोऽपि तद्बाहुभ्यामेव विषयपतितं हरं कुरुते। कामस्य जयव्यापारोऽयं कण्ठाश्लेषादिः। न हि कामजयव्यापारं विना गृणा कण्ठे कामिनीनां भुजयुगलं लुठति ॥41॥

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥42॥

कण्ठस्येत्यादि ॥ (भूषणभूष्यभावः) अलङ्करणालङ्कार्ययोर्भावः। (साधारण) समानः। हारेण कण्ठः कण्ठेन हारोऽलङ्कृतः ॥42॥

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥43॥

चन्द्रं गतेत्यादि ॥ गौर्या मुखं शशिकमलनिभमित्येतदेव वस्तु भङ्ग्यन्तरेणाह। (पद्मगुणान्) कमलकान्तिं न (भुङ्क्ते) उपभुङ्क्ते, निशि तस्य संकुचितत्वात्। (चान्द्रमसीम् अभिख्या) शोभा (न भुङ्क्ते) नानुभवति, दिवा शशिनो निष्प्रभत्वात्। (द्विसंश्रयाम्) उभयाधारा प्रीतिम् (अवाप) लेभे, तन्मुखस्योभयसादृश्यात्। यतः (लोला) लम्पटा, उभयगतगुणार्थिनी ॥43॥

स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि।
अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥45॥

स्वरेणेत्यादि ॥ (अमृतस्रुतेव) माधुर्यामृतस्रवमुचेव। (प्रजल्पितायां) वक्तुं प्रस्तुतायाम्। (अभिजातवाचि) कोमलगिरि। (प्रतिकूलशब्दा) उद्वेगदायिनी बभूव। (वितन्त्रीरिव) विस्वरवीणेव ॥45॥

प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥46॥

प्रवातेत्यादि ॥ (प्रवातनीलोत्पलनिर्विशेषम्) प्रकृष्टे वायौ यन्नीलोत्पलं ततो निर्विशेषमभिन्नम्। नु वितर्के ॥46॥

तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या।
तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥47॥

तस्या इत्यादि ॥ (शलाकाञ्जननिर्मितेव) शलाका सूक्ष्मवर्तिका तस्या यद् अञ्जनं कज्जलं तेन निर्मितेव। तनुत्वकार्ष्ण्यशोभिः (स्वचापसौन्दर्यमदं) निजकार्मुकरमणीयत्वगर्वं (मुमोच) तत्याज ॥47॥

लज्जा तिरश्चा यदि चेतसि स्यादसशय पर्वतराजपुत्र्या ।
त केशपाश प्रसमीक्ष्य कुर्युर्वालाप्रियत्व शिथिल चमर्यः ॥48॥

तज्जेत्यादि ॥ (वालप्रियत्व) प्रियपुच्छत्व न पुनरकरिष्यत् । ता हि वीरुद्गह नल्मनलाङ्गूलवालविच्छेदकातरा व्याघसायकप्रहारानप्युराकुर्वते न तु वालभङ्गम् । यदा तु स्वगुणपराजयेऽपि तिर्यञ्चो न लज्जन्ते तदा देवीकेशपाशदर्शनेऽपि तासा वालप्रियत्व नान्यथा ॥48॥

## ततीयः सर्गः

मनोनवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षर क्षत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥50॥

मनो नवेत्यादि ॥ अन्यच्च कीदृश तम् । आत्मनि मनसि आत्मान परमात्मान क्षेत्रज्ञम् अवलोकयन्त पश्यन्तम् । कं तमित्याह । यमक्षरम् इति । (क्षेत्रविद् ) क्षेत्रज्ञा (अक्षरम्) अविनश्वर विदु ब्रुवत । न क्षेत्रविद । तदुक्तम्–

'नैन छिन्दति शस्त्राणि नैन दहति पावक ।
न चैन क्लेदयन्त्यापो न शोषयति मारुत ॥' भ गी 2–31

क्षेत्र शरीर तद् ये विदन्ति ते (क्षेत्रविद ) योगिन इत्यर्थ । उक्त च–
'इद शरीर कौन्तेय क्षेत्रमित्युच्यते बुधै ।' भ गी 13–1

कि कृत्वा (समाधिवश्य) समाधरायत्त समाधिनर्वाञ्छित यत् मन चित्त हृत्कमले (व्यवस्थाप्य) अवस्थाप्य निरुध्य । इत्यादि । उत्कमिदम् ॥50॥

स्मरस्तथाभूतमयुग्मनेत्र पश्यन्नदूरान्मनसाऽप्यधृष्यम् ।
नालक्षयत्साध्वससन्नहस्त स्रस्त शर चापमपि स्वहस्तात् ॥51॥

स्मरस्तथेत्यादि । तत (स्मर) काम तथाभूत एवविधध्यानाधिरूढमनस्क (मनसा) चेतसा अपि (अधृष्यम् ) अनभिभवनीयम (अदूरान ) आरात् (पश्यन ) विलोकयन् ( साध्वससन्नहस्त ) साध्वससन्नहस्तत्वात् स्वहस्तात् स्वकरात् (स्रस्त) पातितमपि शर ( चापम ) शरासन अपि (न अलक्षयत ) नाज्ञासीत् । साध्वसेन भीत्या सन्नोऽवसाद गत करो यस्य ॥51॥

निर्वाणभूयिष्ठमथास्य वीर्य सधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥52॥

निर्वाणेत्यादि ॥ अनुयाता सखीद्वयसहिता । कि कुर्वती । अस्य स्मरस्य निर्वाणभूयिष्ठ प्रशान्तप्राय भगवद्दर्शनाद् वीर्य प्रभाव वपुर्गुणेन वपुषा गु रूपलावण्यादिना (सधुक्षयन्ती इव) उद्दीपयन्तीव । मीनाक्षी कनाम्नवात् ॥52॥

अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥53॥

अशोकेत्यादि ॥ अदृश्यत इत्युक्तम् । तत्र सा कीदृशी । (वसन्तपुष्पाभरणं) वसन्ते पुष्पाणि वसन्तपुष्पाणि तान्येवाभरणमलङ्कारः तत् वहन्ती । कीदृशम् । (अशोकनिर्भर्त्सितपद्मरागम् ) अशोकाख्येन लोहितेन पुष्पेण निर्भर्त्सितो न्यक्कृतः पद्मराग मणिर्यत्र पद्मरागमणिस्थाने तस्य न्यासात् । तथा (आकृष्टहेमद्युतिकर्णिकारम् ) आकृष्टा आहृता हेम्नः सुवर्णस्य कान्तिर्येन तत् तथाविधं कर्णिकार यत्र । (मुक्ताकलापीकृतसिन्दुवारं ) मुक्ताकलापीकृत सिन्दुवार कलभकुसुम यत्र । मौक्तिकसुवर्णपद्मरागाः किलाभरणतया प्रसिद्धाः ॥53॥

आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
सुजातपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥54॥

आवर्जितेत्यादि ॥ अन्यच्च किम्भूता सा दृश्यत । स्तनाभ्यां किञ्चिदिव मनागिव आवर्जिता नामिता । तथा (तरुणार्करागं) तरुणार्कस्य बालसूर्यस्येव रागोऽरुणिमा यस्य तत् कौसुम्भ वासो वस्त्र वसाना परिदधती बिभ्राणा । अत एवोत्प्रेक्षते । (सुजातपुष्पस्तबकावनम्रा) सुजातैः परिपूर्णैः कुसुमस्तबकैरवनम्रानता किसलयसंयुता (संचारिणी) जङ्गमा (लता इव) वल्लीव ॥54॥

स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरपुष्पकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥55॥

स्रस्तां नितम्बादित्यादि ॥ अन्यदपि कीदृश्यदृश्यत । गतिवशात् नितम्बात् कटीशिखरात् (स्रस्ताम् ) पतिताङ्के केसरपुष्पकाञ्चीं केसरपुष्पकृता काञ्चीं मेखला (पुनः पुनः) असकृद् (अवलम्बमाना) धारयन्ती सती । उत्प्रेक्षते । (स्थानविदा) योग्यस्थानज्ञेन (स्मरेण) कामेन (कार्मुकस्य) धनुषः सम्बन्धिनः (द्वितीयमौर्वीमिव) द्वितीया ज्यामिव (न्यासीकृता) निक्षेपीकृता अवलम्बमाना । न्यासो निक्षेपः । स्थानं वेत्ति (इति) स्थानवित् (तेन) । सा हि वैदग्ध्यमुग्धत्वतारुण्याविर्भावैस्तादृशस्य निक्षेपस्य पर स्थानम् ॥55॥

सुगन्धिनिःश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥56॥

सुगन्धीत्यादि । तथा ( बिम्बाधरासन्नचरं) बिम्बसदृशोऽधरो बिम्बाधरस्तस्य प्रत्यासन्नचरो निकटो भ्रमन् यः भ्रमरो बिम्बाधरासन्नचरः स च द्विरेफश्च तम् (द्विरेफं) (लीलारविन्देन) क्रीडानलिनेन (प्रतिक्षणं) मुहुर्मुहुः (निवारयन्ती) वारयन्ती

उत्सारयन्ती । यत (सुगन्धिनि श्वासनिवृद्धतृष्ण) कमल्वत् सुरभिनि श्वासविद्वद्ध गाद्धयम् । अत एवाऽसौ (सम्भ्रमलोलदृष्टि) सम्भ्रमेण लोला कम्प्रा दृष्टिर्यस्या सा भयतरलोल्लोचना । तदेतेन रूपवर्णनेन सवननशोभ्यत्व देव्या दर्शितम् । कुलकम् ॥26॥

> ता वीक्ष्य सर्वावयवानवद्या रतेरपि ह्रीपदमादधानाम् ।
> जितेन्द्रिये शूलिनि पुष्पकेतु स्वकार्यसिद्धि पुनराशशंस ॥ 57 ॥

ता वीक्ष्येत्यादि ॥ ता एवविधा भगवतीं (वीक्ष्य) दृष्ट्वा (पुष्पकेतु) स्मर (जितेन्द्रिये) निगृहीतेन्द्रिये शूलिनि रूद्रविषये (स्वकार्यसिद्धि) स्वव्यापारनिर्वाहं (आशशस) सम्भावयामास । अस्या निकटस्थाया निश्चितमभिभवितु मया शक्योऽय मिति । कीदृशा ताम् । (सर्वावयवानवद्या) सर्वाव्यवयवानवद्यामनिन्द्या, अशेषाङ्ग सुन्दरीम् । अत एव रतेरपि कामकान्ताया अपि (ह्रीपद) ह्रिय पद लज्जास्थान (आदधाना) उत्पादयन्तीम् । अस्या स्थिताया कीदृशो मम रूपाभिमान इति लज्जापदम् ॥57॥

> भविष्यत पत्युरुमा च शम्भो समाससाद प्रतिहारभूमिम् ।
> योगात्स चान्त परमात्मसञ्ज्ञं दृष्ट्वा चिर ज्योतिरुपारराम ॥58॥

भविष्यत इत्यादि । (भविष्यत) भाविन (पत्यु) कान्तस्य शम्भो प्रतिहारभूमि द्वारस्थान (उमा) पार्वती च (समाससाद) प्राप । स च रुद्र योगात् समाधेश्चित्तवृत्तिनिरोधात् (उपारराम) विरतोऽभूत् । द्वौ चकारौ तुल्यकाल गमयत । तेन यदैवोमा द्वारस्थानमासादितवती तदैव देवोऽपि योगान्निवृत्त । किं कृत्वा । (परमात्मसञ्ज्ञं) परमात्माभिधान ज्योति ज्ञानप्रकाश भास्वरूपमाभ्यन्तर (चिर) दीर्घकाल दृष्ट्वा उपलभ्य (उपारराम) ॥58॥

> ततो भुजङ्गाधिपते फणाग्रैरध कथञ्चिद्धृतभूमिभागम् ।
> शनै कृतप्राणविमुक्तिरीश पर्यङ्कबन्ध निबिड बिभेद ॥56॥

ततो भुजङ्गेत्यादि । तत भगवान् ईश निबिड दृढ पर्यङ्कबन्ध आसन विशेषरचना बिभेद शिथिलीचकार । कीदृशाम् । भगवतोऽतिगुरुत्वात् (भुजङ्गाधिपते फणाभि) शेषफणै (अध) अधस्तात् (कथञ्चित्) कृच्छ्रेण (धृतभूमिभागम्) उद्धृतो भूप्रदेशो यस्मिन् त तथोक्तम् । भगवान् कीदृश । शनै शनै स्वैर न तु सहसा (कृतप्राणविमुक्ति) कृत प्राणस्य वेगतया विमुक्ति परित्यागो येन स । योगादुपरता हि मन्दमन्दो वायुविमोच्य इति योगिसमाचार ॥59॥

> तस्मै शशस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।
> प्रवेशयामास च भर्तुरेना भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥60॥

तस्मै शशसेत्यादि ॥ तत तस्मै भगवते (शुश्रूषया) परिचर्यया सेवया हेतुना (शैलसुताम्) पार्वतीम् (उपेता) प्राप्ता नन्दी (प्रणिपत्य) प्रणाम विधाय (शशस)

अब्रवीत्। (एनां च भर्तुः भ्रूक्षेपमात्रानुमतप्रवेशा) भ्रूलताचलनमात्रेणानुज्ञातप्रवेशा प्रवेशयामास। भर्तृसकाशमढौकयदित्यर्थः ॥60॥

तस्याः सखीभ्या प्रणिपातपूर्वं स्वहस्तलूनः शिशिरात्ययस्य।
व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥61॥

तस्याः सखीभ्यामित्यादि ॥ तस्याः सखीभ्यां आलीभ्या वनदेवताभ्या (प्रणिपातपूर्वं) (त्र्यम्बकपादमूले) हरपादमूले (पल्लवभङ्गभिन्नः) किशलयखण्डमिश्र पुष्पोच्चयः कुसुमराशि व्यकीर्यत 'पुष्पाञ्जलिर्विकीर्णो' विक्षिप्तः। शिशिरात्ययस्य वसन्तस्य स्वहस्तलूनः स्वकरोपचितस्ताभ्या विन्यस्तः। वसन्तः किल इदानीं देवं सेवितुमायात। आराधयतश्चरणमूले हस्तन्यासस्योचितत्वात्, एवमुत्प्रेक्षा। पादमूले पादममीपेऽन्तिके च। उच्चय शब्दः कवीना प्रमादजः। हस्तादाने चेरस्तेये (पा० सू० 3-3-40) इति घञ्। अचो वाधितत्वात्। भायानयने बुध्यानयनमित्युच्चितानि पुष्पाणि व्यकीर्यत इत्ययमर्थः। भज्यत इति भङ्गः खण्डः विशेषतो भिन्नः। प्रणिपातं पूर्वो यत्र तत् प्रणिपातपूर्वम् (वा) प्रणिपातपूर्वम् ॥61॥

---

## 5. अपरा परम्परा–अष्टमः सर्गः।

In one of the MSS the text of the commentary on the eighth canto is found totally different. Some examples are given here to give an idea how someone has tried to complete the missing text in his own manner. In ब MS the commentary of the eighth canto runs with किं कृत्वा, केन, कथंभूतम् etc. This certainly does not belong to Vallabhadeva's pen. Hence its examples are even not noted. All these prove beyond doubt that the commentry on the eighth canto remained unfinished and many persons tried to complete it but in the most unsatisfactory manner.

(1) विवाहान्तरमभिलापर्यग्रहात् कंदर्पदोहदरमणीना रामभूत्। वभूव। मावस्त्र साध्वसं च मावमाध्वसौ तयोः परिग्रहात् कामस्य दोहदानन्तरं मनोहरं गतत् ॥ (1)

(2) त्वेवं तदेव तया पार्वत्या गुरुदक्षिणीकृतम्। गुरोः हरस्य अदक्षिणा दक्षिणा कृतं दक्षिणीकृतम्। कीदृशम्। यत्तत् युवतिनैपुण्यं रतं तया पार्वत्या शिक्षितं अभ्यसितम्। कथंभूतया तया। प्रसन्नया ज्ञाततत्त्वया। किं शिष्यता छात्रत्वम्। कस्य। महेशस्य। क्व। एकान्ते। कंदर्पस्य। शंकरस्य। निधुवनं सुरतक्रियानीत्येवं शीलः स तस्य ॥ (17)

(3) जगद्गुरु. हर: एकपिङ्गलगिरौ कैलासपर्वते विशदा निर्मला शशिप्रभा । निविशेषा उपभुजो. । कीदृशो । हर: कण्ठे गले सक्त लग्नं मदनोर्वाक्षियोः (?) वदन गस्य स: । कया । तया । कथंभूतया । रावणस्य ध्वनिस्तेन भीता सा तया । ॥24॥

(4) हे दीर्घनेत्रे एतदन्धतमस दिक् आशासु निरङ्कुश यथा स्यात् तथा । एव विजृम्भिते उत्सर्पति सति सुमेरुणा तेजसि व्यवसिते सति । कीदृशी । तेजसि यामिनी च दिवसस्य यामिनीदिवसौ तयोः सन्धिसंभव उत्पत्तिर्यस्य तत् ॥55॥

(5) तत्र तस्मिन् मणिशिलागृहे शंभोः ऋतुना नर्तनपर्वा अगतम् जगाम । कथं ऋतुना शतम् । समे समान दिवसनिशौ यत्र यत्र तत् समोविधतेति (?) सगिनस्तस्य प्रियायुक्तस्य । पुनः कथंभूता साग्र सहाग्रेण वर्तते इति साग्रं साधिकं ऋतुना शतम् । नैव एकनिशेव । यथा कस्यचित् पुरुषस्य एका निशा रात्रिः याति । अन्यच्च हरः न दृश । दहन इव । यथा समुद्रान्तर्गतो मध्यगतो यः वडवाग्निः न समुद्रस्य जलेषु विषयेषु च्छिन्नतृष्णो (न) भवति तद्वत् समुद्रान्तर्गतो ज्वलनो वाडवानलो जलानामोघे प्रवाहे यथा च्छिन्नतृष्णो न भवति इति भद्रम् ॥92॥ इति श्रीमदानन्ददेवात्मजवल्लभदेवविरचितायां कुमारसम्भवविवृत्तौ अष्टम सर्ग: ।8॥

---

## 6. पाणिनिसूत्राणां सूचिका

| | |
|---|---|
| (1) अकर्मकाच्च । | (पा०सू० 1–3–45) 2–31 |
| (2) अञ्चे: पूजायाम् । | (पा०सू० 7–2–53) 1–34 पाटी. |
| (3) अत एकहल्मध्येऽनादेशादेर्लिटि । | (पा०सू० 6–4–120) 1–18 |
| (4) अनुपसर्गाद् ज्ञ: । | (पा०सू० 1–3–44) 2–31 |
| (5) अर्धं नपुंसकम् । | (पा०सू० 2–2–2) 7–228 |
| (6) अविस्तृस्तृतन्त्रिभ्य ई: । | (उ० 438) 1–45 |
| (7) अपडक्षाशि...अध्युत्तरपदात् । | (पा०सू० 5–4–7) 4–10 |
| (8) अशिशकादिभ्य इलोनौ । | (उ० 172) 1–2 |
| (9) अस्मायामेधास्रजो विनिः । | (पा०सू० 5–2–121) 5–6 |
| (10) अस्य च्वौ । | (पा०सू० 7–4–32) 4–13 |
| (11) आङ् मर्यादाभिविध्योः । | (पा०सू० 2–1–13) 1–5 |
| (12) इष्ठस्य यिट् च । | (पा०सू० 6–4–156) |
| (13) ईषद्दुःसुषु......। | (3–3–126) 6–51 |
| (14) उणादयो बहुलम् । | (पा०सू० 3–3–1) 4–16 |
| (15) उदितो वा । | (पा०सू० 7–2–56) 3–3 |
| (16) उपसर्गात् सुनोति धातौ । | (पा०सू० 6–1–61) 1–11 |

(17) उपाच्च । (पा० सू० 1–3–84) अ०रा० 3–58
(18) उपाद्यमः स्वकरणे । (पा० सू० 1-3–56) 1–18
(19) ऋक्पूरब्धूःपथामानक्षे । (पा० सू० 5–4–74) 1–76
(20) एरनेकाचोऽसंयोगपूर्वस्य । (पा० सू० 6-4–82) 2–51
(21) ओजःसहोऽम्भसा वर्तते । (पा० सू० 4–4–27) 5–61
(22) कर्णललाटात् कनलङ्कारे । (पा० सू० 4-3-65) 5–55
(23) कण्ड्वादिभ्यो यक् । (पा० सू० 3–1–27) 3–46
(24) कृकमि । (पा० सू० 8–3–46) 2–56
(25) कृत्यल्युटो बहुलम् । (पा० सू० 3–3–113) 4–44, 6–86
(26) कृपो रो लः । (पा० सू० 8–2–18) 7–12
(27) क्तस्य च वर्तमाने । (पा० सू० 2–3–66) 1–58
(28) गदमद .. । (पा० सू० 3–1–100) 7–82
(29) जातिरप्राणिनाम् । (पा० सू० 2–4–6) 5–33
(30) ज्ञाश्रुस्मृदृशां सनः । (पा० सू० 1–3–57) 1–56
(31) (ह्रस्वात्तादौ) तद्धिते परस्य । (पा० सू० 8–3–101) 2–17
(32) तसौ मत्वर्थे । (पा० सू० 1–4–19) 5–6
(33) तिसोऽन्यतरस्याम् । (पा० सू० 8–3–42) 1–14
(34) त्रेर्मम्नित्यम् । (पा० सू० 4–4–20) अ० प० 1–24
(35) द्वितीयाटौस्स्वेनः । (पा० सू० 2–4–34) 2–38
(36) धनुषश्च । (पा० सू० 5–4–132) 5–54
(37) धर्मपथ्यर्थन्यायादनपेते । (पा० सू० 4–4–92) 2–3
(38) धातुसम्बन्धे प्रत्ययाः । (पा० सू० 3–4–1) 2–51
(39) नमस्पुरसोर्गत्योः । (पा० सू० 8–3–40) 2–52
(40) नहो धः । (पा० सू० 8–2–34) 1–55
(41) नाञ्चेः पूजायाम् । (पा० सू० 6–4–30) भ० पा० 1–34
(42) निर्वाणोऽवाते । (पा० सू० 8–2–50) 2–32, अ० प० 2–52
(43) नुगतोऽनुनासिकान्तस्य (पा० सू० 7–4–85) 6–58
(44) पञ्चानामादित आहो ब्रुवः । (पा० सू० 3–4–84) 2–31
(45) पादार्घाभ्यां च । (पा० सू० 5–4–25) 1–56, 7–72
(46) पाशादिभ्यो यः । (पा० सू० 4–2–49) 7–57
(47) पुमान् स्त्रिया । (पा० सू० 1–2–67)8 32
(48) पुरोऽव्ययम् । (पा० सू० 1–4–67) 2–52
(49) प्रतिजनादिभ्यः खञ् । (पा० सू० 4–4–99) 2–57
(50) प्रत्याङ्भ्यां श्रुवः । (पा० सू० 1–4–40) 2–56
(51) प्रियस्थिर......... । (पा० सू० 6–4–157) 8–76

(52) प्रोपाभ्यां समर्थाभ्याम् । (पा० सू० 1-3-42) 3-2
(53) बहोर्लोपो भू च बहोः । (पा० सू० 6-4-154) अ० प० 2-52
(54) भृञामित् । (पा० सू० 7-4-76) 5-15
(55) मन्थौदन...... । (पा० सू० 6-2-60) 5-24
(56) मयूरव्यंसकादयश्च । (पा० सू० 2-1-72) 1-14
(57) मृजेर्वृद्धिः । (पा० सू० 7-2-114) 1-60
(58) युष्मदस्मदो . ..... । (पा० सू० 8-1-20) 4-37
(59) राजाहःसखिभ्यष्टच् । (पा० सू० 5-4-91) 1-1, अ० प० 1-10
(60) रुच्यर्थानां प्रीयमाणः (पा० सू० (1-4-33) 8-16
(61) रुदादिभ्यः सार्वधातुके । (पा० सू० 7-2-76) 4-15
(62) ल्यपि लघुपूर्वात् । (पा० सू० 6-4-56) 7-27
(63) वर्णो वर्णेन । (पा० सू० 2-1-69) 3-36
(64) विभाषा ग्रहः । (पा० सू० 3-1-143) 3-7
(65) विभाषा सपूर्वस्य । (पा० सू० 4-1 34) 4-40
(66) व्याङ्परिभ्यो रमः । (पा० सू० 1-3-83) अ० प० 3-85
(67) व्रजयजोर्भावे क्यप् । (पा० सू० 3-3-98) 6-6
(68) शालादिभ्यो यः । (पा० सू० 5-3-103) 4-35
(69) शेषे । (पा० सू० 4-2-92) 8-58
(70) सत्सूद्विष.. ... । (पा० सू० 3-2-61) 2-51
(71) सन्लिटोर्जेः । (पा० सू० 7-3-57) 2-53
(72) सभाया यः । (पा० सू० 4-4-105) 7-29
(73) समवप्रविभ्यः स्थः । (पा० सू० 1-3-22) 3-42
(74) सायं चिरं ...... । (पा० सू० 4-3-23) 4-46
(75) सिकताशर्कराभ्यां च । (पा० सू० 5-2-104) अ० प० 1-28
(76) सुयजोर्ङ्वनिप् । (पा० सू० 3-2-103) 2-46
(77) संख्याया अवयवे तयप् । (पा० सू० 5-2-42) 2-17
(78) स्वाङ्गाच्चोपसर्जनात् । (पा० सू० 4-1-54) 1-60
(79) हन्तिग्रसन् . ... । (पा० सू० 6-1-·3) 5-27
(80) हस्तादाने चेरस्तेये । (पा० सू० 3-3-40) 5-61

---

# कुमारसंभवश्लोकानामनुक्रमणी